शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिगुरुभ्यो नमः ।



श्रीहेमहंसगणिसंगृहीतः

# न्यायसंग्रहः ।

## स्वोपज्ञन्यायार्थमञ्जूषानाम्न्या बृहद्वृत्त्या स्वोपज्ञन्यासेन च सहितः ।

तावद् गर्वमखर्वमात्महृदये प्रोन्मादिनो वादिनो-
ऽनल्पं संस्कृतजल्पगोचरमिलापीठे प्रचकुः समे ।
यावत् श्रीयुतहेममहंस सुधीः श्रीवाचकेष्वग्रणी-
रुद्दर्पज्वरवैद्यराजसदृशो नागाद् दृशोरध्वनि ॥ १ ॥

(सोमसौभाग्ये)

कलिकाताजैनश्वेताम्बरश्रीसङ्घस्य साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रयित्वा प्रकाशितः ।

Printed and Published by Shah Harkhchand Bhurabhai
at The Dharmabhyudaya Press, Benares City.

वीरसंवत् २४३७ ।

मूल्यं रूप्यकम्

अर्हम्

श्रीहेमहंसगणिसंगृहीतः

# न्यायसंग्रहः ।

## स्वोपज्ञन्यायार्थमञ्जूषानाम्न्या बृहद्वृत्त्या स्वोपज्ञन्यासेन च सहितः ।

तावद् गर्वमखर्वमात्महृदये प्रोन्मादिनो वादिनो-
ऽनल्पं संस्कृतजल्पगोचरमिलापीठे प्रचक्रुः समे ।
यावत् श्रीयुतहेमहंस उरुधीः श्रीवाचकेष्वग्रणी-
स्तद्दर्पज्वरवैद्यराजसदृशो नागाद् दृशोरध्वनि ॥ १ ॥

(सोमसौभाग्ये)

स च

कलिकाताजैनश्वेताम्बरश्रीसङ्घस्य साहाय्येन

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रयित्वा प्रकाशितः ।

वीरसंवत् २४३७ ।

मूल्यं रूप्यक[redacted] ।

# प्रस्तावना ।

व्याकरणविषयाणां सर्वेषामपि न्यायानां संग्रहं संबिभ्रद् यथार्थं नामाऽऽकलयति न्यायसंग्रहोऽयं ग्रन्थः । एतं मूलग्रन्थं, तस्य विस्तरतो विवरणशालिनीं न्यायार्थमञ्जूषाख्यां टीकां, तदुपरि बृहन्न्यासं च विरचयितारो विद्वद्वर्याः श्रीहेमहंसगणयोऽभूवन् । स्वसत्तासमयमेत एवैतद्ग्रन्थप्रान्ते श्लोकमिमं समुपन्यस्यन्तो निवेदयन्ति—

"श्रीमद्विक्रमवत्सरे तिथितिथौ शुक्लद्वितियातिथौ
पूर्वाह्ले मृगलाञ्छने मृगशिरःश्रृङ्गाग्रश्रृङ्गारिणि ।
शुक्रस्याऽहनि शुक्रमासि, नगरे श्रीसागरेऽहम्मदा-
वादे निर्मितपूर्तिरेष जयताद् ग्रन्थः सुधीवल्लभः" ॥ १४ ॥

एभिर्ग्रन्थकर्तृभिरन्येऽपि षडावश्यकबालावबोध—आरम्भसिद्धिवार्तिकादयो ग्रन्था विनिर्मिताः, तेषामपि ग्रन्थानां तैस्तैरुल्लेखैर्ग्रन्थकर्तॄणां स एव समयः सिद्धिमासादयति, तथाहि षडावश्यकबालावबोधेऽन्तिमभागे—

"इति श्रीतपागच्छनायकसकलसुविहितपुरन्दरश्रीसोमसुन्दरसूरि-श्रीमुनिसुन्दरसूरि-श्रीजयचन्द्रसूरि-पदकमलसंसेविना शिष्यपण्डितहेमहंसगणिना श्राद्धवराभ्यर्थनया कृतोऽयं षडावश्यकबालावबोध आ-चन्द्रार्कं नन्द्यात् । संवत् १५१० वर्षे" ॥

आरम्भसिद्धिवार्तिकप्रान्तेऽपि—

"श्रीमद्विक्रमवत्सरे मनुतिथौ शुक्लद्वितीयातिथौ
नक्षत्रे गुरुदैवते गुरुदिने मासे शुचौ सुन्दरे ।
आशापल्लिपुरे पुरः प्रतिनिधेः श्रीमद्युगादिप्रभो-
र्ग्रन्थः सैष समर्थितः प्रथयतादाद्यं पुमर्थं सताम्" ॥

एतेन भिन्नभिन्नविषयेषु ग्रन्थान् विनिर्मातॄणामेतेषां ग्रन्थकर्तॄणां विशदपाण्डित्यस्य परिचयार्थं—

" तावद् गर्वमखर्वमात्महृदये प्रोन्मादिनो वादिनो-
ऽनल्पं संस्कृतजल्पगोचरमिलापीठे प्रचक्रुः समे ।
यावच्छ्रीयुतहेमहंस उरुधीः श्रीवाचकेष्वग्रणी-
स्तद्दर्पज्वरवैद्यराजसदृशो नागाद् दृशोरध्वनि " ॥

इत्ययं तत्समानकालिकपण्डितप्रतिष्ठासोमविरचितस्य सोमसौभाग्यकाव्यस्य[1] श्लोक एव पर्याप्तः । स्मरन्ति चैतद्ग्रन्थकर्तॄन् गुरुगुणरत्नाकरकाव्ये श्रीसोमचारित्रगणयोऽपि—

---

१ एतत्काव्यनिर्माणकालस्तु— " पारावार-कर-स्मरेषु-हिमरुग्वर्षेऽतिहर्षाद् व्यधात् " इत्यनेन ग्रन्थकर्त्रैव प्रतिपादितः ।

" चारित्ररत्न-जिनमण्डन-हेमहंस-श्रीसोमदेवसुसुधाऽऽदिमनन्दनाद्याः ।
के वाचका गुरुधियः कति सूरयो वा येषां विनेयविभवो बहवो बभूवुः " ॥
" श्रीमत्सुधानन्दनहेमहंसयोः सद्वाचनाचार्यशिरोऽवतंसयोः " ।

एतन्मुद्रणावसरे यानि पुस्तकान्युपयुक्तानि, तानि, तदर्पकाणामुपकाराङ्गीकारपूर्वकं नामानि चात्रोल्लिख्यन्ते—

१–२ न्यायार्थमञ्जूषाबृहद्वृत्तेरादर्शपुस्तकद्वयं शास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीणाम्।
३ न्यायार्थमञ्जूषाबृहद्वृत्तेर्लघुन्याससहिताया एकं पुस्तकं वङ्गीय-एशियाटिक्समितेः ।
४ न्यायार्थमञ्जूषाया बृहन्न्यासस्य शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणाम् ।
५ " " भावनगरजैनश्रीसंघभाण्डागारस्य ।

एवं च पुस्तकपञ्चतय्याः साहाय्येन संशोधितमुद्रिते, दत्तशुद्धिपत्रसूचीपत्रेऽप्यस्मिन् ग्रन्थे दृष्टिदोषवशेन सीसकाक्षरयोजकदोषेण वा याः काश्चनाऽशुद्धयः स्थिता भवेयुः, प्रकृतिकृपालवः सज्जनास्ताः शोधयिष्यन्तीति—

आशासते—
**यशोविजयजैनग्रन्थमालाव्यवस्थापकाः ।**



---

१ एतानेव वाचकोत्तमान् एतद्ग्रन्थकाराः विद्यागुरुत्वेन प्रलपयन्तीति
"तत्सर्वं यदवाप्तबोधकणिकासिद्धौषधीजृम्भितं विद्यासिद्धमिमं हृदि प्रणिदधे चारित्ररत्नं गुरुम् " ॥
इति प्रान्तस्थोल्लेखेन विज्ञायते । एभिः श्रीचारित्ररत्नगणिभिश्च शर-निधि-मनुमिते वर्षे चित्रकूटदुर्गश्रीमहावीरप्रासादप्रशस्तिनामा ग्रन्थो विरचितः ।

अर्हम्

# न्यायसंग्रहस्थन्यायानामकाराद्यनुक्रमेण सूचीपत्रम् ।

## शान्तमूर्ति श्रीवृद्धिचन्द्रजी महाराज



वृद्धिसिद्धिप्रदाने यद्दिव्यशक्तिः प्रकाश्यते ।
चन्द्रतुल्यः स शान्तात्मा वृद्धोऽयं जगतो गुरुः ॥ १ ॥



श्रीहेमहंसगणिसंगृहीतः

श्रीसिद्धहेमचन्द्रव्याकरणस्थ—

# न्यायसंग्रहः

ॐ रूपाय नमः श्रीमद्हैमव्याकरणाय च।
श्रीसोमसुन्दरगुरूत्तंसाय च नमोनमः ॥ १ ॥

अथ ये तु शास्त्रे सूचिता लोकप्रसिद्धाश्च न्यायास्तदर्थं यत्नः क्रियते।

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ १ ॥ सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य ॥ २ ॥ ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ ३ ॥ स्वरस्य ह्रस्वदीर्घप्लुताः ॥ ४ ॥ आद्यन्तवदेकस्मिन् ॥ ५ ॥ प्रकृतिवदनुकरणम् ॥ ६ ॥ एकदेशविकृतमनन्यवत् ॥ ७ ॥ भूतपूर्वकस्तद्वदुपचारः ॥ ८ ॥ भाविनि भूतवदुपचारः ॥ ९ ॥ यथासङ्ख्यमनुदेशः समानाम् ॥ १० ॥ विवक्षातः कारकाणि ॥ ११ ॥ अपेक्षातोऽधिकारः ॥ १२ ॥ अर्थवशाद्विभक्तिपरिणामः ॥ १३ ॥ अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ १५ ॥ नामग्रहणे लिङ्गविशिष्टस्यापि ॥ १६ ॥ प्रकृतिग्रहणे यङ्लुबन्तस्यापि ॥ १७ ॥ तिवा शवाऽनुबन्धेन निर्दिष्टं यद् गणेन च। एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥ १८ ॥ सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्य ॥

१९॥ असिद्धं बहिरङ्गमन्तरङ्गे॥२०॥ न स्वरानन्तर्ये॥२१॥गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः॥२२॥ कृत्रिमाकृत्रिमयोः कृत्रिमे॥२३॥ क्वचिदुभयगतिः॥२४॥ सिद्धे सत्यारम्भो नियमार्थः॥२५॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्॥२६॥ नञुक्तं तत्सदृशे॥२७॥ उक्तार्थानामप्रयोगः॥२८॥ निमित्ताभावे नैमित्तिकस्याप्यभावः॥२९॥ सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः॥३०॥ नान्वाचीयमाननिवृत्तौ प्रधानस्य॥३१॥ निरनुबन्धग्रहणे न सानुबन्धकस्य॥३२॥ एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य॥३३॥ नानुबन्धकृतान्यसारूप्यानेकस्वरत्वानेकवर्णत्वानि॥३४॥ समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि॥३५॥ पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्॥३६॥ मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्॥३७॥ यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते॥३८॥ यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते॥३९॥ येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः॥४०॥ बलवन्नित्यमनित्यात्॥४१॥ अन्तरङ्गं बहिरङ्गात्॥४२॥ निरवकाशं सावकाशात्॥४३॥ वार्णात्प्राकृतम्॥४४॥ य्वृद् य्वृदाश्रयं च॥४५॥ उपपदविभक्तेः कारकविभक्तिः॥४६॥ लुबन्तरङ्गेभ्यः॥४७॥ सर्वेभ्यो लोपः॥४८॥ लोपात्स्वरादेशः॥४९॥ आदेशादागमः॥५०॥ आगमात्सर्वादेशः॥५१॥ परान्नित्यम्॥५२॥ नित्यादन्तरङ्गम्॥५३॥ अन्तरङ्गाच्चानवकाशम्॥५४॥ उत्सर्गादपवादः॥५५॥ अपवादात् क्वचिदुत्सर्गोऽपि॥५६॥ नानिष्टार्था शास्त्रप्रवृत्तिः॥५७॥

---

एते न्यायाः प्रभुश्रीहेमचन्द्राचार्यैः स्वोपज्ञसंस्कृतशब्दानुशासनबृहद्वृत्तिप्रान्ते समुच्चितास्तैरसमुच्चितास्त्वेते—

प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम्॥१॥ प्रत्ययाप्रत्यययोः प्रत्ययस्यैव॥२॥ अदाद्यनदाद्योरनदादेरेव॥३॥ प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्यैव॥४॥ निरनुबन्धग्रहणे सामान्येन॥५॥ साहचर्यात् सदृशस्यैव॥६॥ वर्णग्रहणे जातिग्रहणम्॥७॥ वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते॥८॥ तन्मध्यपतितस्तद्ग्रहणेन गृह्यते॥९॥ आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते॥१०॥ स्वाङ्गमव्यवधायि॥११॥ उपसर्गो न व्यवधायी॥१२॥ येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्॥१३॥ ऋकारापदिष्टं कार्यं ऌकारस्यापि॥१४॥ सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि॥१५॥ ह्रस्वदीर्घापदिष्टं कार्यं न प्लुतस्य॥१६॥ संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं न तदन्तस्य॥१७॥ ग्रहणवता नाम्ना न तदन्तविधिः॥१८॥ अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति॥१९॥ गामादाग्रहणेष्वविशेषः॥२०॥ श्रुतानुमितयोः श्रौतो विधिर्बलीयान्॥२१॥ अन्तरङ्गानपि विधीन् यबादेशो बाधते॥२२॥ सकृद्गते स्पर्द्धे यद्बाधितं तद्बाधितमेव॥२३॥ द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधकः॥२४॥ कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट् च॥२५॥ पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात्सन्धिकार्यम्॥२६॥ संज्ञा न संज्ञान्तरबाधिका॥२७॥ सापेक्षमसमर्थम्॥२८॥ प्रधानस्य तु सापेक्षत्वेऽपि समासः॥२९॥ तद्धितीयो भावप्रत्ययः सापेक्षा-

दपि ॥३०॥ गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः ॥३१॥ समासतद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिः ॥ ३२ ॥ आदशभ्यः सङ्ख्या सङ्ख्येये वर्त्तते न सङ्ख्याने ॥३३॥ एकशब्दस्यासङ्ख्यात्वं क्वचित् ॥३४॥ णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद्भवति ॥३५॥ द्विर्बद्धं सुबद्धं भवति ॥३६॥ आत्मनेपदमनित्यम् ॥३७॥ क्विपि व्यञ्जनकार्यमनित्यम् ॥ ३८ ॥ स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वान्यनित्यानि ॥३९॥ अनित्यो णिच्चुरादीनाम्॥४०॥ णिलोपोऽप्यनित्यः ॥४१॥ णिच्सन्नियोगे एव चुरादीनामदन्तता ॥४२॥ धातवोऽनेकार्थाः ॥ ४३ ॥ गत्यर्था ज्ञानार्थाः ॥४४॥ नाम्नां व्युत्पत्तिरव्यवस्थिता ॥४५॥ उणादयो अव्युत्पन्नानि नामानि ॥४६॥ शुद्धधातूनामकृत्रिमं रूपम् ॥४७॥ क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते ॥४८॥ उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक् ॥ ४९ ॥ अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं समुदायं सोऽवयवो न व्यभिचरति ॥५०॥ येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः ॥५१॥ यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु सम्भवत्युपसर्गत्वे ॥५२॥ शीलादिप्रत्ययेषु नासरूपोत्सर्गविधिः५३॥ त्यादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः ॥ ५४ ॥ स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ॥५५॥ यावत् सम्भवस्तावद्विधिः ॥ ५६॥ सम्भवे व्यभिचारे च विशेषणमर्थवत् ॥५७॥ सर्वं वाक्यं सावधारणम् ॥५८॥ परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति ॥५९॥ द्वौ नञौ प्रकृतमर्थं गमयतः ॥६०॥

चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति ॥६१॥ चानुकृष्टं नानुवर्त्तते ॥६२॥ चानुकृष्टेन न यथासङ्ख्यम् ॥ ६३ ॥ व्याख्यातो विशेषार्थप्रतिपत्तिः ॥ ६४ ॥ यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ॥ ६५ ॥

इत्येते पञ्चषष्टिः, पूर्वैः सह द्वाविंशं शतं न्याया व्यापका ज्ञापकादियुताश्च ।

अतः परं तु ये वक्ष्यन्ते ते केचिदव्यापकाः प्रायः सर्वे ज्ञापकादिरहिताश्च; तेचामी–

यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ॥१॥ यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ॥२॥ येन विना यन्न भवति तत्तस्यानिमित्तस्यापि निमित्तम् ॥३॥ नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ॥४॥ सामान्यातिदेशे विशेषस्य नातिदेशः ॥५॥ सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन विशेषः ॥६॥ ङित्त्वेन कित्त्वं बाध्यते ॥७॥ परादन्तरङ्गं बलीयः ॥८॥ प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ॥९॥ विधिनियमयोर्विधिरेव ज्यायान् ॥१०॥ अनन्तरस्यैव विधिर्निषेधो वा ॥११॥ पर्जन्यवल्लक्षणप्रवृत्तिः ॥१२॥ न केवला प्रकृतिः प्रयोक्तव्या ॥१३॥ क्विबर्थं प्रकृतिरेवाह ॥१४॥ द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते ॥ १५॥ विचित्राः शब्दशक्तयः ॥ १६ ॥ किं हि वचनान्न भवति ॥ १७॥ न्यायाः स्थविरयष्टिप्रायाः ॥ १८ ॥

एतेऽष्टादश न्यायाः, पूर्वैः सर्वैः सह चत्वारिंशं शतं स्तोकस्तोकवक्तव्याः ॥ एकस्त्वयं बहु वक्तव्यः ॥ शिष्टनामनिष्पत्तिप्रयोगधातूनां सौत्रत्वाल्लक्ष्यानुरोधाद्वा सिद्धिः ॥

## इति श्रीसिद्धहेमचन्द्रव्याकरणस्थन्यायसंग्रहः।

श्रीसूरीश्वरसोमसुन्दरगुरोर्निश्शेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ॥
तच्छिष्याश्रवहेमहंसगणिना श्रीसिद्धहेमाभिधे
न्याया व्याकरणे विलोक्य सकलाः संसंगृहीता इमे ॥ १ ॥

प्रत्यक्षरं गणनया ग्रन्थेऽस्मिन्न्यायसंग्रहे ।
श्लोकानामष्टषष्टिः स्यादधिका च दशाक्षरी ॥ २ ॥

ग्रन्थाग्रम् श्लो० ६८ अक्षर० १० ॥





श्रीहेमहंसगणिविरचिता

न्यायसंग्रहनाम्नो न्यायसूत्रस्य

# स्वोपज्ञन्यायार्थमञ्जूषानाम्नी बृहद्वृत्तिः।



त्रैलोक्याह्लाददहेतुश्रीसोमसुन्दरमूर्त्तये ।
नमः श्रीसिद्धचक्राय जगज्ज्येष्ठाय तायिने ॥ १ ॥

न्यायाध्वन्यध्वगानां दिशि दिशि सुयशोऽद्यापि रामादिराजां
न्यायोपात्तानि वित्तान्यसमसुखकराण्यत्र चामुत्र चापि ॥
न्याय्यत्वादेव जय्यं न खलु खलगिरां शासनं जैनचन्द्रं
तन्नित्यं न्यायवृत्तिं शुभपदफलदामाद्रियध्वं बुधेन्द्राः ॥ २ ॥

इह तावत्सुगृहीतनामधेयप्रभुश्रीहेमचन्द्राचार्यैः स्वोपज्ञसंस्कृतशब्दानुशासनबृहद्वृत्तिप्रान्ते सप्तपञ्चाशन्न्यायाः समुच्चीयन्ते स्म । तेषां चानित्यत्वमुपेक्ष्य व्याख्योदाहरणज्ञापकानामेव प्रज्ञापनाकनीयसी टीका कैश्चित्प्राचीनानूचानैश्चक्रे ।

साम्प्रतं तु पूर्वं समुच्चितानां सप्तपञ्चाशतः स्वसमुच्चितानां च चतुरशीतेर्न्यायानां सूत्रोद्देशपूर्वं व्याख्याप्रयोजनोदाहरणज्ञापकानि यथायोगमनित्यतां तज्ज्ञापकं च प्रत्याययितुमियं न्यायसंग्रहनाम्नो न्यायसूत्रस्य न्यायार्थमञ्जूषानाम्नी बृहद्वृत्तिर्वितन्यते ।

तत्र सूत्रादौ मङ्गलार्थं नमस्कारः ।

**ॐरूपाय नमः श्रीमद्हैमव्याकरणाय च ।**
**श्रीसोमसुन्दरगुरूत्तंसाय च नमोनमः ॥ १ ॥**

अत्र ओमित्यस्य रूपमर्हदशरीराचार्योपाध्यायमुनीनामाद्यवर्णैर्निष्पन्नं नम-

स्कार्यत्वेनेष्टं, तेन च परिमेष्ठिपञ्चकनमस्कारः सिद्धः ॥ इह चादौ सर्वगुरुर्मगणः, पृथ्वीतत्त्वं श्रीहेतोर्न्यस्तम्। यदाहुः । मो भूमिः श्रियमातनोतीति । ओमित्यस्य नम इति पदयोजने ॐनम इति च पठितसिद्धमन्त्रः सर्वथाऽभ्युदयहेतवे न्यस्तः। श्रीमद्धैमव्याकरणस्य च सम्यग्दृष्टिपरिगृहीतत्वेन श्रुतज्ञानत्वान्नमस्कारो, विशेषतस्तु प्रस्तुतग्रन्थेऽस्यैवाधिकृतत्वात् । स्वगुरुनमस्कारे च विशेषभक्तिहेतुकसम्भ्रमद्योतनार्थम् "असकृत्सम्भ्रमे"॥७।४।७२॥ इत्यनेन नमः शब्दस्यासकृद्भावः । शिष्टं स्पष्टम् ॥ १ ॥

अथ श्रीहेमचन्द्राचार्यैरेव न्यायसूत्रस्यादौ यदुक्तमादिवाक्यं तदत्रोच्यते ।

**अथ ये तु शास्त्रे सूचिता लोकप्रसिद्धाश्च न्यायास्तदर्थे यत्नः क्रियते इति ॥**

अत्र शास्त्रस्याभिधेयं तावत् साक्षादेवोक्तम्। सम्बन्धप्रयोजने त्वेवं गम्ये स्तः। तथाहि। अथेति। कोऽर्थः हैमसंस्कृतव्याकरणवृत्तेरनन्तरम्। अनेन तया सह न्यायानामानन्तर्यसम्बन्धो गम्यते । तथा येत्विति तु शब्दो व्याकरणसूत्राणां नव्यकृतत्वं न्यायसूत्राणां तु व्याकरणान्तरादिशास्त्रेष्वपि तथैव पठितत्वाच्चिरंतनत्वमिति विशेषं द्योतयन्नेते न्याया गुरुपरम्परयैव ग्रन्थकारं यावदागता इति गुरुपर्वक्रमलक्षणमपि सम्बन्धं द्योतयति । शास्त्रे इति । साङ्गशब्दानुशासनादौ । लोकप्रसिद्धाश्चेति । लोको वैयाकरणसमयज्ञः प्रामाणिकादिश्च । न्याया इति । न्यायशब्दः किल दृष्टान्तेऽपि रूढः । यथा सूचीकटाहन्यायः, काकाक्षिगोलकन्यायो, डमरुकमणिन्यायो, घण्टालालान्याय इत्यादि । इह तु नीयते सन्दिग्धोऽर्थो निर्णयमेभिरिति " न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारम् "॥५।३।१३४॥ इत्यनेन घञि निपातनान्न्यायाः स्वेष्टसंसाधनानुगुणा युक्तय उच्यन्ते । अनया च सान्वर्थव्युत्पत्त्या सन्दिग्धार्थनिर्णयरूपं सर्वन्यायसाधारणं प्रयोजनमावेदितं द्रष्टव्यम् ॥

अथ प्रतिज्ञातं प्रस्तूयते ।

**स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ १ ॥**

व्याकरणसूत्रे सर्वत्र शब्दस्य स्वं रूपं ग्राह्यम् । अशब्दसंज्ञा । यदि तेन शब्देन, संज्ञेत्यत्र "उपसर्गादातः"॥५।३।११०॥ इत्यनेन भावे अङ्प्रत्ययसद्भावात् संज्ञानं कोऽर्थः संज्ञाकरणं न स्यात्। यदि तु तेन शब्देन किञ्चिद्विषया संज्ञा कृता स्यात्तदा रूपमनादृत्य यावतां सा संज्ञा कृताऽस्ति तावन्तो ग्राह्या इत्यर्थः । गौण-मुख्ययोरित्यादिन्यायानामपवादोऽयं न्यायस्तथैव चाग्रे भावयिष्यते। यथा "समः ख्यः"॥५।१।७७॥ इत्यत्र ख्यांक्धातुश्चक्षादेशश्चेति द्विधाऽपि ख्या इति रूपमेव गृह्यते, ख्येति संज्ञाया अभावात्। तेन गाः संख्याति, सञ्चष्टे वेत्युभयथाऽपि गोसंख्य इत्यादौ डः सिद्धः। अन्यथा तु गौणमुख्ययोरिति न्यायेन स्वाभाविकधातोः ख्यांक् इत्यस्मादेव डः प्राप्नोति न तु धात्वादेशत्वेन धातुत्वभाजश्चक्षादेशात् ख्यः। यद्वा। कृत्रिमाकृत्रिमयोरिति न्यायेन कृत्रिमाच्चक्षादेशादेव ख्यो डः प्राप्नोति, नत्वकृत्रिमात् ख्यांक् धातोरिति। "उपसर्गाद्दः किः"॥५।३।८७॥ इत्यादौ तु "अवौ दाधौ दा"॥३।३।५॥ इति दासंज्ञा धातवो गृह्यन्ते, देति संज्ञासद्भावात्। तेन आदिरित्यत्र दारूपसद्भावे इव आधिरित्यादौ दारूपाभावेऽपि किः सिद्धः। स्वं रूपं शब्दस्येत्यंशस्य ज्ञापकं "नदी-भिर्नाम्नि"॥३।१।२७॥ इत्यत्र बहुवचनम्। एकवचने हि स्वं रूपं शब्दस्येति वचनात् स्वरूपस्यैव केवलस्य नदीरूपस्य ग्रहणं मा प्रसाङ्क्षीदित्यतोऽत्र नदीविशेषाणामपि ग्रहणाय बहुवचनं न्यस्तम्। ततश्च "सङ्ख्या समाहारे" ॥३।१।२८॥ इत्युत्तरसूत्रेण यथा पञ्चानां नदीनां समाहारः पञ्चनदमित्यत्र नदीशब्देन सहाव्ययीभावसमासः स्यात्तथा द्वयोर्यमुनयोः समाहारो द्वियमुनम्, एवं त्रिगङ्गं, सप्तगोदावरमित्यत्र नदी-विशेषवाचिभिरपि सहाव्ययीभावः समासः सिद्धः। तथाच "संख्याया नदीगोदा-वरीभ्याम्"॥७।३।९१॥ इत्यत्समासान्तः; "क्लीबे"॥२।४।९७॥ इति ह्रस्वो, विभक्तेः "अमव्ययीभावस्यातोऽपञ्चम्याः"॥३।२।२॥ इत्यनेनाम्भावश्च यथायोगं सिद्धाः । अशब्दसंज्ञेत्यंशस्य तु ज्ञापकं "स्वरादुपसर्गाद्दस्तिकित्यधः"॥४।४।९॥ इत्यत्र धाव-र्जनम्। यदि हि स्वं रूपं शब्दस्येति वचनाद्द इत्यनेन दारूपमेव गृह्यमाणं स्यात्त-दाऽत्र धाप्रसङ्ग एव नास्तीति किमर्थं धा वर्ज्येत । परमशब्दसंज्ञेति वचनाद्धा-प्रसङ्गोऽस्तीत्यतो धावर्जनं सफलम् । अस्य चाद्योऽशो अनित्यस्तेन "उतस्वराद्यु-जेरयज्ञतत्पात्रे"॥३।३।२४॥ इत्यत्र, "युजादेर्नवा"॥३।४।१८॥ इत्यनेन विक-

ल्पितणिचश्चौरादिकयुजेर्णिचो अभावपक्षे युजिरूपसम्भवेऽपि न ग्रहणम् । अनित्यताया ज्ञापकं तु "पूङ्क्लिशिभ्यो नवा"॥४।४।४५॥ इत्यत्र बहुवचनम् । तद्धि क्लिश्यतिक्लिश्नात्योर्ग्रहणार्थं न्यस्तम् । एतन्न्यायांशनित्यत्वे च तयोरुभयोरपि क्लिशिरूपसद्भावाद् बहुवचनं विनापि ग्रहणं सिध्यतीति कुतस्तदर्थं बहुवचनं प्रयुज्येतेति । द्वितीयांशोऽप्यनित्यस्तेन "प्राज्ज्ञश्च"॥५।१।७९॥ इत्यत्र, "दश्चाङ्-" ॥५।१।७८॥ इति पूर्वसूत्राद्द इत्यनुवृत्त्या दासंज्ञवददासंज्ञयोरपि दाव्दैवोर्ग्रहः सिद्धः । अनित्यताज्ञापकं तु "प्राज्ज्ञश्च"॥५।१।७९॥ इत्यस्य वृत्तौ द इति दारूपमेवेह ग्राह्यमित्युक्तिः ॥ १ ॥

## सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य ॥ २ ॥

ये शब्दा दिशि वाचकत्वेन रूढाः सन्ति तेऽर्थान्तरवृत्तयोऽपि सन्तो दिग्वाचिसादृश्यादिक्शब्दा इत्युच्यन्ते, नतु दिशि वर्त्तमाना एव। एतदर्थसंग्रहार्थमेव हि प्रकृतन्यायसूत्रे शब्दशब्दप्रयोगो, यथा "प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः" ॥२।२।७५॥ इत्यत्र। अन्यथा तु दिगिति केवलमेवोच्येत, यथा "दिशो रुढ्यान्तराले"॥३।१।२५॥ इत्यत्र । ततश्चायमर्थः। जनपदवाचिनो यो विधिरुक्तः स सुसर्वार्द्धदिक्शब्दपूर्वस्य जनपदान्तस्यापि स्यात् । ग्रहणवता नाम्ना न तदन्तविधिरिति न्यायस्यापवादोऽयं न्यायः। एवमुत्तरोऽपि । यथा मगधेषु भवो मागधक इत्यादौ केवलाज्जनपदवाचिशब्दादिव, सुमगधेषु सर्वमगधेष्वर्द्धमगधेषु पूर्वमगधेषु च भवः सुमागधकः, सर्वमागधकः, अर्द्धमागधकः, पूर्वमागधक इत्यादौ सुसर्वार्द्धदिक्शब्दपूर्वाज्जनपदान्तादपि "बहुविषयेभ्यः"॥६।३।४५॥ इत्यकञ् सिद्धः । सुमागधकादिषु च त्रिषु "सुसर्वार्द्धाद्राष्ट्रस्य"॥७।४।१५॥ इत्यनेन; पूर्वमागधक इत्यत्र तु "अमद्रस्य दिशः"॥७।४।१६॥ इत्यनेनोत्तरपदवृद्धिः । सुसर्वादिभ्य इत्येव । ऋद्धमगधेषु भवः आर्द्धमगधः; अत्र "भवे"॥६।३।१२३॥ इत्यणेव, नतु "बहुविषयेभ्यः"॥६।३।४५॥ इत्यकञ्; ग्रहणवतेति न्यायेन तदन्तविधेर्निषेधात् । ज्ञापकं त्वस्य, "सुसर्वार्द्धाद्राष्ट्रस्य"॥७।४।१५॥ "अमद्रस्य दिशः"॥७।४।१६॥ इति सूत्राभ्यामुत्तरपदवृद्धिविधानमेव । तथाहि। आभ्यां सूत्राभ्यामुत्तरपदवृद्धिस्तावद् "बहुविषयेभ्यः" ॥६।३।४५॥ इत्यादिसूत्रैर्विहिते ञ्णित्प्रत्यये परे उक्ता। स च ञ्णित्प्रत्ययो यदि

सुमगधादिशब्देभ्यो राष्ट्रान्तत्वेन ग्रहणवतेति न्यायेन निषेधान्नायात्येव तदैते वृद्धिसूत्रे निर्विषयत्वात् क्रियेते एव न; एते च तावत् कृते, तज्ज्ञायते सुसर्वादिपूर्वस्य राष्ट्रवाचिनो विधौ कर्त्तव्ये एतन्न्यायेन ग्रहणवतेति न्यायस्य बाधभवनान्निर्विघ्नं ञ्णित्प्रत्यय आयास्यतीत्याशयेनैव कृते इति । अस्थिरता त्वस्य नास्ति; उत्तरन्यायद्वयस्यापि च ॥ २ ॥

## ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ ३ ॥

यस्मिन् परे वृद्धिप्राप्तिः स ञ्णित्प्रत्ययो वृद्धिमानिह गृह्यते। ऋतुवाचकाद् ञ्णित्प्रत्ययस्य विधौ कर्त्तव्ये तदवयवपूर्वाद्दत्वन्तादपि स विधिः स्यात् । तेन यथा वर्षासु भवं वार्षिकमित्यत्र केवलाद्वर्षाशब्दाद् "वर्षाकालेभ्यः"॥६।३।८०॥ इतीकण् स्यात्तथा पूर्वः प्रथमोऽवयवो वर्षाणां पूर्ववर्षाः "पूर्वापराधरोत्तरमभिन्नेनांशिना"॥३।१।५२॥ इत्यंशितत्पुरुषः । यद्वा । पूर्वावयवयोगात्पूर्वाः प्रथमा इत्यर्थः; ततः पूर्वाश्च ता वर्षाश्च पूर्ववर्षाः, "पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम्"॥३।१।१०३॥ इति कर्मधारयः; ततस्तासु भवं पूर्ववार्षिकम् ; अत्र वर्षान्तादपि "वर्षाकालेभ्यः"॥६।३।८०॥ इति वर्षालक्षण इकण् सिद्धः; "अंशाद्दतोः"॥७।४।१४॥ इत्यनेनात्रोत्तरपदवृद्धिः। एवं शिशिरे भवं शैशिरमित्यादौ केवलऋतुशब्दादिव पूर्वशिशिरे भवं पूर्वशैशिरमित्यादौ ऋतुशब्दान्तादपि "भर्त्तुसन्ध्यादेरण्"॥६।३।८९॥ इति ऋतुलक्षणोऽण् सिद्धः; वृद्धिस्तु प्राग्वत । वृद्धिमद्विधाविति किम् । "प्रावृष एण्यः"॥६।३।९२॥ इत्येण्यस्य विधौ, पूर्वप्रावृषि भवः पूर्वप्रावृषेण्य इति मा भूत् । अवयवेभ्य इति किम् । पूर्वा ऋत्वन्तरैर्व्यवहिताश्च ता वर्षाश्च प्राग्वत्कर्मधारये पूर्ववर्षास्तासु भवं पौर्ववर्षिकम् ; एवं पौर्वशिशिरिकम् ; उभयत्रापि "वर्षाकालेभ्यः" ॥६।३।८०॥ इत्यनेन काललक्षण एवेकण् । इह च पूर्वशब्दो न ऋतोरेकदेशं ब्रूते, किं तर्हि व्यवहितत्वमित्यतो "अंशाद्दतोः"॥७।४।१४॥ इत्यनेनोत्तरपदवृद्ध्यप्राप्तेः; "वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते"॥७।४।१॥ इत्यनेनाद्यस्वरस्यैव वृद्धिः । स्थापकं त्वस्य "अंशाद्दतोः"॥७।४।१४॥ इत्यनेनांशवाचिनः परस्य ऋतुवाच्युत्तरपदस्य वृद्धिविधानमेव । तथाहि । "अंशाद्दतोः"॥७।४।१४॥ इत्यत्रोत्तरपदवृद्धिस्तावद् "वर्षाकालेभ्यः"॥६।३।८०॥ "भर्त्तुसन्ध्यादेरण्"॥६।३।८९॥ इत्यादि

सूत्रैर्विहिते ञ्णित्प्रत्यये परे उक्ता । स च ञ्णित्प्रत्ययो यदि पूर्ववर्षादिशब्देभ्य ऋत्वन्तत्वेन ग्रहणवतेति न्यायेन निषेधान्नायात्येव, तदा "अंशाद्दतोः"॥७।४।१४॥ इति सूत्रं निर्विषयत्वात् क्रियते एव न; एतच्च तावत् कृतम्; तज्ज्ञायते अवयवपूर्वाद्दत्वन्ताद् ञ्णित्प्रत्ययविधौ कर्त्तव्ये एतन्न्यायेन ग्रहणवतेति न्यायस्य बाधभवनान्निर्विघ्नं ञ्णित्प्रत्यय आयास्यतीत्याशयेनैव कृतामिति ॥ ३ ॥

## स्वरस्य ह्रस्वदीर्घप्लुताः ॥ ४ ॥

ह्रस्वाद्यादेशाः स्वरस्यैव स्युर्नतु व्यञ्जनस्येत्यर्थः । स्थानिविशेषानुक्त्या स्वरवद्व्यञ्जनस्यापि ह्रस्वाद्यादेशप्रसङ्गे प्रतिषेधार्थोऽयं न्यायः । तत्र ह्रस्वो यथा । सह श्रिया सश्रि कुलम्; अत्र ईतः "क्लीबे"॥२।४।९७॥ इति ह्रस्वः । व्यञ्जनस्य तु न स्यात्, यथा तत् । अत्र तकारस्य, ऌवर्णतवर्गलसा दन्त्याः इत्यासन्नत्वात् ऌर्ह्रस्वः प्राप्नोति । दीर्घो यथा । प्रत्यञ्चन्तीति क्विपि तान्, प्रतीचः । अत्र "अच्च् प्राग् दीर्घश्च"॥२।१।१०४॥ इत्यनेनाचश्चत्वे प्राक्स्थितस्य इतो दीर्घः । व्यञ्जनस्य तु न स्यात् । यथा दृषदमञ्चन्तीति क्विपि तान्, दृषच्चः । अत्र "अच्च् प्राग्-"॥२।१।१०४॥ इत्यचश्चत्वे प्राक्स्थितदस्य प्राग्वदासन्नॡदीर्घप्राप्तिः । प्लुतो यथा । हे चैत्र३ एहि; अत्र अकारस्य "दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत्" ॥७।४।९९॥ इत्यनेन प्लुतत्वम्; ततश्च "प्लुतोऽनितौ"॥१।२।३२॥ इत्यसन्धिः । बोधकं त्वस्य, ह्रस्वदीर्घांशयोस्तद्विध्योः प्रायः स्थान्यनुपादानम् । तथाहि । ह्रस्वदीर्घविधी तावत्सर्वत्र स्वरस्यैव क्रियेते । स्वरश्च स्थानी बहुषु स्थानेषु यन्नोपात्तस्तदेतन्न्यायाशयेनैव । प्लुतांशे तु नास्ति ज्ञापकम् । प्लुतविधौ, "सम्मत्यसूयाकोपकुत्सनेष्वाद्यामन्त्र्यमादौ स्वरेष्वन्त्यश्च प्लुतः"॥७।४।८९॥ इत्येवं स्वरस्य स्थानिनः साक्षादुक्तेः । ननु कुतस्तर्हि न्याये प्लुतः पेठे । उच्यते । ह्रस्वादीनां सहचारित्वमात्रात्संभाव्यते; इहोदाहृतोऽपि स्थानाशून्यत्वार्थमेव । यद्वा । यैर्वैयाकरणैरेतन्न्यायसापेक्षैः सद्भिः प्लुतविधौ स्वरः स्थानी नोपात्तो भावी तन्मते तदेव स्थान्यनुपादानं प्लुतांशेऽपि बोधकं भावि । नानाव्याकरणसाधारणानि किल चिरन्तनत्वान्न्यायसूत्राणि ॥ ४ ॥

## आद्यन्तवदेकस्मिन् ॥ ५ ॥

यत्रैक एव वर्णो नाम वाऽस्ति, कार्यं तु तदादिकस्य तदन्तस्य वोक्तं; तत्र तदेवैकमादित्वेनान्तत्वेन च प्रकल्प्य तत्कार्यं कार्यम्। अप्राप्तप्रापणार्थोऽयं न्यायः। एवमुत्तरोऽपि। तत्रादित्वेन वर्णस्य कल्पना यथा। ईहांचक्रे इत्यादौ धातोर्गुरुनाम्यादित्वेन परोक्षाया, यथा "गुरुनाम्यादेरनृच्छ्रूर्णोः"॥३।४।४८॥ इत्याम् स्यात्, तथा ईङ्च गतौ अयाञ्चक्रे इत्यादौ नामिमात्रस्यापि धातोर्नाम्यादित्वकल्पनात्परोक्षाया "गुरुनाम्यादेः-"॥३।४।४८॥ इत्याम् सिद्धः। नाम्नो यथा। "इन्द्रे"॥१।२।३०॥ इत्यस्य "सप्तम्या आदिः"॥७।४।११४॥ इति परिभाषया इन्द्रादौ शब्दे परे इति न्यासकारव्याख्यासद्भावादिन्द्रयज्ञशब्दे परे गवेन्द्रयज्ञ इत्यादावेवाव आदेशः प्राप्नोति; परं गवेन्द्र इत्यत्रापीन्द्रस्येन्द्रादित्वकल्पनादव आदेशः सिद्धः। गमकं त्वत्र "यस्वरे पादः पदणिक्यघुटि"॥२।१।१०२॥ इत्यत्र णिवर्जनम्। तद्धि णेः स्वरादित्वात्कृतम्; यदि च स्वरमात्रस्यापि णेरेतन्न्यायात् स्वरादित्वं न स्यात्तदा प्रसङ्गाभावादेव णिवर्जनं नाकरिष्यत। अत्रांशे चास्यानित्यत्वादीयतेरेव गुरुनाम्यादित्वकल्पनाया अभावे, आमादेशाभावात् ईये, ईयाते, ईयिरे इत्याद्यपि स्यात्। अन्तत्वेन वर्णस्य कल्पना यथा। जेता इत्यादौ धातोर्नाम्यन्तत्वेन यथा "नामिनो गुणोऽक्ङिति"॥४।३।१॥ इति गुणः स्यात्, तथा एता इत्यादौ नामिमात्रस्यापि धातोर्नाम्यन्तत्वकल्पनात् "नामिनो गुणोऽक्ङिति"॥४।३।१॥ इति गुणः सिद्धः। नाम्नो यथा। "सर्वादेः स्मैस्मातौ"॥१।४।७॥ इत्यत्र सर्वादेरित्यस्य स्याद्यधिकाराक्षिप्तनामविशेषणत्वात्, ततश्च "विशेषणमन्तः"॥७।४।११३॥ इति परिभाषया सर्वाद्यन्तस्य नाम्न इति न्यासकारव्याख्यासद्भावात्परमसर्वस्मै इत्यादावेव स्मायादयः प्राप्नुवन्ति; परं सर्वस्मै इत्यादावपि सर्वशब्दस्य सर्वाद्यन्तत्वकल्पनात् स्मायादयः सिद्धाः। अत्र गमकं तु, यन्तीत्यादावियुबाधनार्थं "ह्विणोरप्विति व्यौ"॥४।३।१५॥ इति यत्वविधानम्। तथाहि। "धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये"॥२।१।५०॥ इत्यत्र तावदिवर्णान्तस्य इय् ऊचे। यदि चेण इकारमात्ररूपस्यैतन्न्यायादिवर्णान्तत्वं न स्यात्तदा इय्प्राप्तेरेवाभावात्किमिति तद्बाधनार्थं 'ह्विणोरप्विति-'॥४।३।१५॥ इति यत्वं कुर्याद्; यत्तु कृतं तदेतन्न्यायेन इण इवर्णान्तत्वभवनसम्भावनादेव। अनित्यता त्वत्रांशेऽस्माकं न पोस्फुरीति ॥५॥

## प्रकृतिवदनुकरणम् ॥ ६ ॥

अनुकार्यं धात्वादिकं प्रकृतिः । अनुकरणेऽपि प्रकृतिवत्कार्यं कार्यम् । यथा "परिव्यवात् क्रियः"॥३।३।२७॥ इत्यत्र धात्वनुकरणस्य क्री इत्यस्य धातुवद्भावाद्धातुकार्य "संयोगात्"॥२।१।५२॥ इतीयादेशः सिद्धः । वत्करणाच्च सर्वथा धातुत्वाभावान्न त्यादयः, किन्तु स्यादयः । प्रमापकं तु अस्य, क्रिय इति सूत्रनिर्देश एव । एतन्न्यायाभावे तदनुपपत्तेः । अस्यास्थेष्ठत्वाच्च "तदः सेः स्वरे पादार्था" ॥१।३।४५॥ इति सूत्रे तद इत्यस्य स्थाने तस्मादिति न निर्दिष्टम् ॥ ६ ॥

## एकदेशविकृतमनन्यवत् ॥ ७ ॥

एकस्मिन् प्रदेशे वैसदृश्येन शब्दस्यान्यत्वं न गण्यते, किन्तु तथाविधस्यापि यथोक्तं कार्यं क्रियते इत्याशयः । साक्षाल्लक्ष्यमाणस्यापि वैसदृशस्यापह्नवार्थोऽयं न्यायः । एवमुत्तरावपि । यथा अतीसारोऽस्यास्तीत्यतीसारकी इत्यत्र वदतिसारोऽस्यास्तीत्यातिसारकी इत्यत्रापि "वातातीसारपिशाचात्कश्चान्तः"॥७।२।६१॥ इत्यनेन मत्वर्थीय इन् कागमश्च सिद्धः । तथा जराशब्दाट्टायां जरसा इत्यादिवदतिजरसा कुलेनेत्यादौ "क्लीबे"॥२।४।९७॥ इति ह्रस्वे कृते जरस्यापि सतो "जराया जरस्वा"॥२।१।३॥ इति जरसादेशः सिद्धः । एकदेशेत्यस्य चोपलक्षणत्वात् क्वचिदनेकदेशविकृतमप्यनन्यवत् । यथा "यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति"॥४।२।५५॥ इति नलोपे प्रणिहत इत्यादावेकदेशाविकृतस्येव, प्रणिघ्नन्तीत्यादौ हनेः "गमहनजनखनघसः स्वरेऽनङि क्ङिति लुक्"॥४।२।४४॥ इत्यल्लोपे "हनो ह्नो घ्नः"॥२।१।११२॥ इत्यनेन ह्नो घ्नकरणात् ह्रो घे च कृते अनेकदेशाविकृतस्याप्यनन्यवद्भावात्तस्मिन् परे "नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्याातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धौ"॥२।३।७९॥ इति नेर्नो णः सिद्धः। नच वाच्यम् । घ्नन्योर्हनेश्च योगे जातमात्रे एव नेर्णः करिष्यते; तथा च कथमेतन्न्यायावकाश इति । "णषमसत्परे-"॥२।१।६०॥ इति वचनात् त्याद्युत्पत्त्यादिपरकार्ये कर्त्तव्ये णत्वशास्त्रस्यासत्त्वेनाप्रवृत्तेः। एवमग्रेऽपि यथा योगमाशङ्कापरिहारौ वाच्यौ । अनुमापकं त्वस्य "सख्युरितोऽशावैत्"॥१।४।८३॥ इत्यत्र इत इति । तद्धि सखीशब्दस्य ऐत्त्वनिषेधार्थम् । एतन्न्यायाभावे च सखीशब्दस्य

ऐत्त्वप्राप्तिरेव नास्ति; सूत्रे सखिशब्दस्यैव साक्षादुक्तेरिति कुतः सखीनिषेधार्थमित इति ब्रूयात; केवलमेतन्न्यायबलात्सखीशब्दस्यापि प्राप्नोतीत्यतस्तन्निषेधार्थमित इत्यूचे । अस्य चास्थैर्यात्सूरशब्दस्य मर्त्तादित्वे सत्यप्येकदेशविकृतस्य शूर-शब्दस्य मर्त्तादित्वं नास्ति; ततश्च यथा सूरस्य "मर्त्तादिभ्यो यः"॥७।२।१५९॥ इति स्वार्थिके यप्रत्यये सूर्य इति स्यात्, तथा शूरस्य शूर्य इति न स्यात्, मर्त्तादित्वाभावेन यप्रत्ययाभवनात् । अस्थैर्यख्यापकं तु "संख्याऽहर्दिवाविभानि-शाप्रभाभाश्चित्रकर्त्राद्यन्तानन्तकारबाह्वरुर्धनुर्नान्दीलिपिलिविबालिभक्तिक्षेत्रजङ्घा-क्षपाक्षणदारजनिदोषादिनदिवसाट्टः"॥५।१।१०२॥ इति सूत्रे लिपिलिव्योर्ग्रहणम्। एतन्न्यायस्थैर्ये ह्यन्यतरग्रहणेनापि सिध्येत ॥ ७ ॥

## भूतपूर्वकस्तद्वदुपचारः ॥ ८ ॥

यः प्राक् तथा भूत्वा सम्प्रत्यन्यथाभूतः स उपचारेण प्राच्यावस्थावानिव व्यवहार्यः । यथा ह्यस्तन्या दिवि परे, प्रण्यहन् इत्यादौ, साक्षाद् हनाविवाद्यत-न्यादौ परे प्रण्यवधीदित्यादौ हनादेशस्य वधेर्भूतपूर्वहन्रूपत्वोपचारात्तस्मिन्नपि परे "नेर्ङ्मादा-"॥२।३।७९॥ इति नेर्नो णः सिद्धः । निवेदकं चास्य, "नेर्ङ्मादा-"॥ २।३।७९॥ इति सूत्रे वधेरपाठः। तथाहि। प्रणिहन्तीत्यादाविव प्रण्यवधीदित्यादावपि तावन्नेर्णत्वमिष्टम्; तथा च हन्तिवद्वधिरपि सूत्रे पठितो विलोक्येत; यत्तु न पेठे, तदेतन्न्यायेन वधेर्भूतपूर्वहन्रूपत्वोपचारात्तस्मिन्नपि परे अनेन नेर्णत्वं सेत्स्य-तीत्याशयेनैव ॥ अस्य च क्वचिदौदासीन्याद्विज्ञपय्येत्यादौ "मारणतोषणनिशाने ज्ञश्च"॥४।२।३०॥ इत्यनेन कृतह्रस्वस्य ज्ञपेर्भूतपूर्वज्ञापिरूपत्वानुपचरणात् "लघो-र्यपि"॥४।३।८६॥ इत्यनेन लघूपान्त्यधातुलक्षणो णेरय् सिद्धः । औदासीन्यज्ञा-पकं तु, "सङ्ख्यानां ष्णाम्"॥१।४।३३॥ इत्यत्र ष्णामिति बहुवचनम्। तद्धि अष्टा-नामित्यत्र परत्वाद्"वाऽष्टन आः स्यादौ"॥१।४।५२॥ इत्यात्वे प्रथमं कृते नान्तत्वाभा-वाद् भूतपूर्वनान्तादपि सङ्ख्यावाचिशब्दादामो नाम्भावार्थं न्यस्तम् । यदि चायं न्यायोऽनुदासीनः स्यात्तदा बहुवचनं विनाऽप्येतन्न्यायादेवाष्टानामित्यत्र भूत-पूर्वनान्तेऽपि नामादेशः स्यादिति किमर्थं बहुवचनं न्यस्येतेति । "स्थानीवावर्ण-विधौ"॥७।४।१०९॥ "स्वरस्य परे प्राग्विधौ"॥७।४।११०॥ इति परिभाषे एतन्न्याय-

स्यैव प्रपञ्चः। तथाहि। एताभ्यामवर्णविध्यादिविशेषसापेक्षं स्थानिवद्भावः साध्यते। एतन्न्यायेन तु सामान्यतः सर्वत्रेति ॥ ८ ॥

## भाविनि भूतवदुपचारः ॥ ९ ॥

भाविनीमवस्थां भूतवदुपचर्य्य भाव्यवस्थासम्बन्धि कार्यं कार्यमित्यर्थः। तेन यथा नृणामित्यादौ निष्पन्ने पदत्वे "रषृवर्णान्नो ण एकपदेऽनन्त्यस्यालचटतवर्गशसान्तरे"॥२।३।६३॥ इत्यनेन णत्वं क्रियते; तथा रवणं, तक्षणमित्यादौ यद्यपि पदत्वं स्याद्युत्पत्त्यनन्तरं भावि तथापि भाविनः पदत्वस्य भूतवदुपचारान्नामावस्थायामपि रवणादिशब्दानां "रषृवर्णात्-"॥२।३।६३॥ इत्यनेन कृतणत्वानामेव न्यासः सिद्धः। निवेदकं त्वस्य "रषृवर्णात्-"॥२।३।६३॥ इत्यनेन पद एव णत्वविधानम्। तथाहि। णत्वं तावन्नृणामित्यादिपदेष्विव रवणादिनामस्वपि दृश्यते, "रषृवर्णात्-"॥२।३।६३॥ इति सूत्रे च पदे एव विहितम्, ततो ज्ञायते नाम्नां णत्वे कर्त्तव्ये एष न्यायोऽस्तीति धिया सूत्रे पदे इत्युक्तम्। अस्यानैकान्तिकत्वाच्चापाठीदित्यादौ कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये वृद्धिस्तद्बाध्योऽट् चेति न्यायेनाटः सर्वकार्येभ्यः पश्चाद्भावित्वात्, पठेः स्वरादित्वे भाविन्यपि भूतवदनुपचरणाद्, "व्यञ्जनादेर्वोपान्त्यस्यातः"॥४।३।४७॥ इति वृद्धिः सिद्धा ॥ ९ ॥

## यथासङ्ख्यमनुदेशः समानाम् ॥ १० ॥

सङ्ख्यया एकद्व्यादिवचननिर्देशेन चेति प्रकारद्वयेन मिथः समानां तुल्यानां पूर्वेषामुत्तरेषां च पदानां यथासङ्ख्यं सङ्ख्याऽनातिक्रमेणैवानु अनुकूलं देशनं कथनं कार्यम्। आद्यमाद्येन, द्वितीयं द्वितीयेनेत्यादिरीत्यैव योजना कार्या, नत्वन्यथेत्यर्थः। योजनाया यादृच्छिकत्वे प्रसक्ते नियमनार्थोऽयं न्यायः। यथा "ङेङस्योर्यातौ" ॥१।४।६॥ इत्यादौ स्थानिनोरादेशयोश्च द्विद्विसङ्ख्यत्वेन द्विवचननिर्दिष्टत्वेन च समत्वाद्यथासङ्ख्यं योजना सिद्धा। एतन्न्यायाभावे तु ङेङसिभ्यां सह यातोः प्रत्येकं योजनेत्याद्यप्याशङ्क्येत; निषेधकाभावात्। समानामिति किम्। "नमस्पुरसो गतेः कखपफि रः सः"॥२।३।१॥ अत्र नमस्पुरसोः कखाद्यैः सह समानवचननिर्देशेऽपि यथासङ्ख्यं नास्ति; सङ्ख्यया तुल्यत्वाभावात्। तथा "तौ मुमो व्यञ्जने स्वौ"॥१।३।१४॥ इत्यत्र मुमयोरनुस्वारानुनासिकाभ्यां सह समसङ्ख्य-

त्वेऽपि यथासङ्ख्यं नास्ति; वचननिर्देशेन तुल्यत्वाभावात् । संवादकं त्वस्य चछटठतथे इति लघुना सूत्रेण सिद्धावपि "चटते सद्वितीये"॥१।३।७॥ इति गुरुसूत्रकरणम् । तद्धि शषसानां चटतानां चैतन्न्यायाद्यथासङ्ख्यं योजना कार्येति ज्ञप्त्यर्थम् । चछेत्यादिसूत्रनिर्देशे तु यथासङ्ख्यं योजना न स्यात् । व्यभिचारी चायम् । "भुजिपत्यादिभ्यः कर्मापादाने"॥५।३।१२८॥ इत्यत्र वचनवैषम्येऽपि यथासङ्ख्यसद्भावात् । "पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम्"॥७।२।११५॥ इत्यत्र च पूर्वावराधरशब्दानां "दिक्शब्दाद्दिग्देशकालेषु प्रथमापञ्चमीसप्तम्याः"॥७।२।११३॥ इति सूत्रादनुवर्त्तमानैर्दिग्देशकालैः सह सङ्ख्याया वचननिर्देशस्य च तुल्यत्वेऽपि यथासङ्ख्याभावात् ॥ १० ॥

## विवक्षातः कारकाणि ॥ ११ ॥

भवन्ति न भवन्त्यन्यथा भवन्ति चेति शेषः । मिथोऽसाधारणलक्षणत्वात्कारकाणां नैयत्ये एव प्राप्ते तन्निषेधार्थोऽयं न्यायः । तत्र भवनं यथा । भिक्षा वासयतीत्यादौ भिक्षादेर्निर्व्यापारत्वेन हेतुमात्रत्वात्तत्त्वतोऽकारकत्वेऽपि स्वतन्त्रतया वासनादिव्यापारविवक्षया कर्तृकारकत्वं सिद्धम् । न च तत्त्वतोऽकारकत्वं नास्तीति वाच्यम्, यतो यदि भिक्षादेः कारकत्वमभविष्यत्तदा भिक्षयोषित इत्यादौ "कारकं कृता" ॥३।१।६८॥ इत्यनेन समासोऽभविष्यत्, यत्तु न स्यात्तद्भिक्षादेरकारकत्वादेव; यच्चैवं भिक्षादेस्तत्त्वतोऽकारकत्वे सत्यपि भिक्षा वासयतीत्यादौ कर्तृकारकत्वं प्रयुक्तं दृश्यते, तद्विवक्षामात्रसिद्धमेव । अभवनं यथा । माषाणामश्नीयादित्यादौ माषादीनां कर्मत्वे सत्यपि तदविवक्षणात्सम्बन्धमात्रे षष्ठी सिद्धा । अन्यथा भवनं यथा । ओदनः स्वयं पच्यते, असिश्छिनत्तीत्यादावोदनास्योः कर्मकरणयोरपि स्वातन्त्र्यविवक्षया कर्तृत्वं सिद्धम् । अनुवादकं चास्य, "स्मृत्यर्थदयेशः"॥२।२।११॥ इत्यत्र कर्मणोऽकर्मत्वविकल्पस्य नियमार्थत्वम् । तथाहि । सर्वधातूनां कर्तृकर्मादिकारकाणि यदि कर्तृकर्मादिरूपतया विवक्ष्यन्ते तदा कर्तृकर्मादिरूपाणि स्युर्नोचेन्न, इति तावदनेन न्यायेन व्यवस्थाप्यते । एवं च स्मृत्यर्थदयेशामपि कर्मणः कर्मत्वं विवक्षावशात् स्याच्च न स्याच्चेत्यप्यागतम्; स्मृत्यर्थादीनामपि सर्वधातुग्रहणेन ग्रहणात् । ततश्चानया रीत्या स्मृत्यर्थादीनां कर्म्मणोऽकर्मत्वविकल्पे

एतन्न्यायेन सिद्धे सति यदि "स्मृत्यर्थदय-"॥२।२।११॥ इति सूत्रमारब्धम्, तदा सिद्धे सत्यारम्भो नियमार्थ इति न्यायान्नियमार्थे विश्रान्तम्। यदि त्वेतन्न्यायेन वैकल्पिकमकर्मत्वं सिद्धं नाभविष्यत्तदा "स्मृत्यर्थ-"॥२।२।११॥ इति सूत्रं, सिद्धे सत्यारम्भ इति न्यायाप्रवृत्तेर्नियमार्थं नाभविष्यदेव किन्तु विध्यर्थमेवाभविष्यत्। तदेवं "स्मृत्यर्थ-"॥२।२।११॥ इति सूत्रस्य यन्नियमार्थत्वं तदिमं न्यायं विनाऽनुपपद्यमानं सदिमं न्यायं ज्ञापयतीति। "स्मृत्यर्थ-"॥२।२।११॥ इति सूत्रोक्तो नियमश्चैवम्। "स्मृत्यर्थ-"॥२।२।११॥ इति सूत्रोक्तधातूनां कर्मैव पक्षे अकर्मत्वविधानाच्छेषरूपेण विवक्ष्यते न तु कारकान्तरमिति। तेन मात्रा स्मृतं, मनसा स्मृतमित्यादौ कर्तृकरणयोः शेषविवक्षाया अभवनात् षष्ठी न स्यात्। सव्यभिचारश्चायम्। तेन सम्बन्धस्याकारकत्वमेव। ततश्च बहूनामिदं वस्त्रमित्यत्र बहुशब्दात "बह्वल्पार्थात्कारकादिष्टानिष्टे प्शस्"॥७।२।१५०॥ इति प्शस् न स्यात्॥ ११॥

## अपेक्षातोऽधिकारः॥ १२॥

अपेक्षा इष्टता, तत एवाधिकारः प्रवृत्तिमान्निवृत्तिमांश्च ज्ञेयो, नतु तत्र किञ्चिज्ज्ञापकमपेक्ष्यमिति भावः। न्यायानामिवाधिकारप्रवृत्तिनिवृत्त्योरपि केनचिज्ज्ञापकेनावश्यभाव्यमित्याशङ्कामुच्छेत्तुमयं न्यायः। यथा "णषमसत्परे स्यादिविधौ च" ॥२।१।६०॥ इत्यतः सूत्रादसत्पर इत्यधिकारो "रात्सः"॥२।१।९०॥ इति यावदनुवर्त्तते नोर्द्धम्; स्यादिविधौ च इत्यधिकारस्तु, "नोर्म्यादिभ्यः"॥२।१।९९॥ इति यावत्; इत्येषोऽर्थो ज्ञापकं विनाऽपि सिद्धः। निश्चायकं चास्य "समानानां तेन दीर्घः"॥१।२।१॥ इत्यत्र समानानामिति निर्देशः। तथाहि। अत्र तावदामो नाम् "ह्रस्वापश्च"॥१।४।३२॥ इत्यनेन कृतः। सच तेन तदा स्यात् यदि "आमो नाम्वा" ॥१।४।३१॥ इति पूर्वसूत्रादाम इति नामिति च पदे तत्रानुवर्त्तेते। तदनुवृत्तिश्चैतन्न्यायादेव सिध्यति नत्वन्यथा; ज्ञापकान्तराभावात्। तथा "ऐदौत्सन्ध्यक्षरैः"॥१।२।१२॥ इत्यत्र ऐत्वमस्य निश्चायकम्। इदं ह्यनुपसर्गाकारस्य ऐत्वम् "ऋत्यारुपसर्गस्य"॥१।२।९॥ इत्यतोऽनुवर्त्तमानस्योपसर्गाधिकारस्य निवृत्तावेव सिध्यति; तन्निवृत्तिश्चैतन्न्यायाधीनैव, ज्ञापकान्तराभावादिति। न चायमैकान्तिको यतो यद्यपेक्षा-

वशादेवाधिकारप्रवृत्तिनिवृत्ती स्याताम्, तदा "प्रत्यये च"॥१।३।२॥ इत्यत्र चकार उत्तरत्र विकल्पानुवृत्त्यर्थः, "शषशे शषसं वा"॥१।३।६॥ इत्यत्र च नवाधिकारे वा ग्रहणमुत्तरत्र विकल्पानिवृत्त्यर्थं कुतः क्रियेते, यत्तु कृते तदस्यानैकान्तिकत्वादेव । विशेषातिदिष्टो विधिः प्रकृताधिकारं न बाधते इत्यपि न्यायोऽस्ति । यथा "धातोरिवर्ण-"॥२।१।५०॥ इत्यतोऽनुवर्त्तमानो धातोरित्यधिकारो "भ्रूश्नोः"॥२।१।५३॥ इत्यादिसूत्रत्रये विशेषातिदेशसद्भावादनुक्तोऽप्येतन्न्यायबलेनात्रुटितत्वाद् "योऽनेकस्वरस्य"॥२।१।५६॥ इत्यत्र पुनः प्रादुर्भूत इति । परमिदं प्रकृतन्यायेनापि सिध्यतीत्यतः सोऽत्रैवान्तर्भूतः । मण्डूकप्लुतिन्यायोऽप्यस्यैव प्रपञ्चः । तथाहि । यथा मण्डूकः प्लवमानोऽन्तरा कियतीं चिद् भुवं मुक्त्वाऽग्रे पतति, तथा यत्र पूर्वसूत्रस्थोऽधिकारोऽन्तरा कतिचित्सूत्राणि मुक्त्वाऽग्रे याति तत्र तावन्मण्डूकप्लुतिन्यायो, यथा "अञ्वर्गात् स्वरे वोऽसन्"॥१।२।४०॥ इति सूत्रस्थो ऽसन्नित्यधिकारो, "अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः"॥१।२।४१॥ इति सूत्रमन्तराले मुक्त्वा "तृतीयस्य पञ्चमे"॥१।३।१॥ "प्रत्यये च"॥१।३।२॥ इति सूत्रयोर्गतः, तेन हि ककुम्मण्डलम्, अम्मय इत्यादौ समासान्तर्वर्त्तिविभक्त्या "नाम सिदय्व्यञ्जने"॥१।१।२१॥ इत्यनेन च क्रमात्पदसंज्ञाभवनात्पदान्तस्थस्यापि मस्यासत्त्वात् "तौ मुम-"॥१।३।१४॥ इत्यनुस्वारानुनासिकौ नाभूताम् । अत्रापि चाधिकारप्रवृत्तिनिवृत्त्योरपेक्षात एव सिद्धिरस्ति, नतु किञ्चिज्ज्ञापकमपेक्षितमिति ॥ १२ ॥

## अर्थवशाद्विभक्तिपरिणामः ॥ १३ ॥

परिणामः परावर्त्तः; कार्य इति शेषः । प्रागन्यविभक्त्यन्तस्य पदस्य पुरतोऽनुवर्त्तनेऽन्यविभक्त्यन्तीभवनं विरुध्यते; नहि गोधा सर्पन्ती सर्पणादहिर्भवतीत्यतस्तदनुपपत्तिनिराकरणार्थोऽयं न्यायः । यथा "अत आः स्यादौ जस्भ्याम्ये" ॥१।४।१॥ इत्यतोऽनुवर्त्तमानस्य षष्ठ्यन्तस्याप्यत इति पदस्य "भिस ऐस्"॥१।४।२॥ इत्यत्र पञ्चम्यन्ततया परिणामः । निर्णायकं त्वस्य "अद् व्यञ्जने"॥२।१।३५॥ इत्यत्र स्थानिनोऽनुपादानम् । तथाहि । अत्र तावदिदम्शब्दः स्थानी इष्टो, यदि च पूर्वसूत्रस्थः षष्ठ्यन्त एव स तत्रानुवर्त्यते, तदा "षष्ठ्यान्त्यस्य"॥७।४।१०६॥

इति परिभाषया मस्यैवादादेशः प्राप्नोति, संपूर्णस्य च इदमो अदादेशो अस्येत्यादि प्रयोगेषु दृश्यते, अतो "अद् व्यञ्जने"॥२।१।३५॥ इति सूत्रे प्रथमान्त इदं शब्दः स्थान्युक्तो विलोक्यत एव; एवं सत्यपि यदत्र स्थानी सर्वथा नोपात्तस्तदेतन्न्यायबलात् षष्ठ्याः प्रथमात्वपरिणामसम्भावनयैव । तथा "अनक्" ॥२।१।३६॥ इति सूत्रे विशेषणस्य प्रथमान्तत्वमेतन्न्यायनिर्णायकं, तद्धि विशेष्यस्येदमः प्रथमान्ततां सूचयति; सा चैतन्न्यायादेव सिध्यति नान्यथा। अस्य च चलत्वात् "तृतीयस्य पञ्चमे"॥१।३।१॥ इत्यतोऽनुवर्त्तमानस्य तृतीयस्येति पदस्य पञ्चम्यन्ततया परिणमनायां सिद्धावपि "ततो हश्चतुर्थः"॥१।३।३॥ इत्यत्र तत इत्युक्तम् ॥ १३ ॥

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

सम्भवति, ग्रहणं, कार्यमिति त्रयः शब्दा अत्राध्याहार्याः। अर्थवतः प्रत्ययस्य प्रकृतेर्वा ग्रहणे सम्भवति सत्यनर्थकस्य ग्रहणं न कार्यम् । शब्दसारूप्यादुभयोर्ग्रहणे प्रसक्ते सत्ययं न्यायः । एवमग्रेतनेऽपि वाच्यम् । तत्र प्रत्ययस्य यथा। "तीयं ङित्कार्ये वा"॥१।४।१४॥ इत्यत्र "द्वेस्तीयः"॥७।१।१६५॥ इत्यादिविहितसार्थकतीयस्य सम्भवाज्जातीयर्सम्बन्धी तीयो न गृह्यते। तत्र हि जातीय एव प्रकारार्थवाचित्त्वात् सार्थको न तु तीयः। तेन पटुजातीयायेत्यादौ "तीयं ङित्कार्ये वा" ॥१।४।१४॥ इत्यनेन स्मायादयो न स्युः। प्रकृतेर्यथा। प्लीहानौ, प्लीहान इत्यादौ हनो निरर्थकत्वात् "इन्हन्पूषार्यम्णः शिस्योः"॥१।४।८७॥ इति सूत्रोक्तनियमाभवनेन "नि दीर्घः"॥१।४।८५॥ इति दीर्घः। ज्ञापिकं चास्य, "तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार्"॥१।४।३८॥ इति सूत्रे तृशब्दान्तानामपि नप्त्रादीनां पृथगुपादानम्। तद्धि नप्त्रादीनामौणादिकतृप्रत्ययान्तानामप्युणादयो अव्युत्पन्नानि नामानीति न्यायादव्युत्पन्नसंज्ञाशब्दत्वेन तृशब्दस्यानर्थकत्वात्तथा चैतन्न्यायेन निषेधभवनात् तृशब्देन संग्रहो न सेत्स्यतीत्याशङ्कया कृतम् । यदि चायं न्यायो नाभविष्यत्तदा नप्त्रादीनां तृशब्दस्यानर्थकत्वेऽपि तृशब्देनैव संग्रहसम्भवात्पृथगुपादानं नाकरिष्यदेव । चञ्चलश्चायम् । अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्तीति न्यायेनापोद्यमानत्वात् चञ्चलता-

ख्यापकं तु "सङ्ख्याडतेश्चाशत्तिष्टेः कः"॥६।४।१३०॥ इत्यत्र डत्यन्तानां "डत्यतु सङ्ख्यावत्"॥१।१।३९॥ इत्यनेन सङ्ख्यावत्करणात् सङ्ख्याशब्देन ग्रहणे सिद्धेऽपि पृथग् ग्रहणम् । तद्धि त्यन्तानां वर्जने डत्यन्तानामपि वर्जनं प्रसङ्क्ष्यतीत्याशङ्कया कृतम्; यदि चायमचञ्चलः स्यात्तदा त्यन्तवर्जने डत्यन्तवर्जनप्रसङ्गस्य शङ्काऽपि नास्ति, डतौ तेरनर्थकत्वादिति किमर्थं तच्छङ्कया पृथग् डतिं गृह्णीयात्; यत्तु गृहीतस्तदेतन्न्यायस्य चञ्चलत्वेन विश्वासाभावात्त्यन्तवर्जने डत्यन्तवर्जनप्रसङ्गशङ्कयैव ॥ १४ ॥

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ १५ ॥

सम्भवतोरिति शेषः । एवमग्रेऽपि यथायोगं वाच्यम् । लक्ष्यतेऽनेनेति लक्षणं लिङ्गम्, तदाश्रित्योक्तो विधिरप्युपचाराल्लक्षणम्; पदं पदं प्रति उक्तः प्रतिपदोक्तः; तयोर्द्वन्द्वः । ततश्च यत्सामान्येन लिङ्गमात्रं निर्दिश्य विहितं तल्लक्षणं तच्च लक्षणेन चरतीति वाक्ये "चरति"॥६।४।११॥ इत्यनेनेकणि लाक्षणिकमित्यप्युच्यते । यत्तु नामग्राहं विहितं तत् प्रतिपदोक्तम् । तत्रोभयोर्ग्रहणे सम्भवति सति प्रतिपदोक्तं ग्राह्यं, न तु लाक्षणिकम् । यथा "नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे"॥१।३।८॥ इत्यत्र लाक्षणिकनकारस्याग्रहणात् त्वन्तत्रेत्यादौ नस्य सो न स्यात् । अयं हि नः "तौ मु-"॥१।३।१४॥ इत्यनेनानुनासिक इति सामान्येनैव विहितः । परं वल्ल्यादिछन्नदेशे ककुदं दृष्ट्वा गवाऽत्र भाव्यमितिवत्तकारं पुरो दृष्ट्वा तकारस्यानुनासिकेन नकारेणात्र भाव्यमित्यनया युक्त्या लक्षणाच्चिह्नादागत इत्यतो लाक्षणिकः । प्रतिपदोक्तस्य तु नस्य सः स्याद् । यथा भवांस्तत्र । अयं हि नो नोऽन्त इति नकारमेवोक्त्वा विहितत्वात्प्रतिपदोक्तः । ख्यातिकरं त्वस्य, "एकार्थं चानेकं च"॥३।१।२२॥ इत्यनेनैव सिद्धेऽपि बहुव्रीहौ, "आसन्नादूराधिकाध्यर्द्धार्द्धादिपूरणं द्वितीयाद्यन्यार्थे"॥३।१।२०॥ इत्यादि प्रतिपदोक्तं बहुव्रीहिविधानम् । तद्धि "प्रमाणीसङ्ख्याड्डः"॥७।३।१२८॥ इति डसमासान्तविधावेतद्बहुव्रीहिग्रहणार्थम् । तेनासन्ना दश येषां ते आसन्नदशाः इत्यादावेव डः स्यात्; "एकार्थं चानेकं च"॥३।१।२२॥ इत्येतत्सूत्रनिष्पन्ने तु बहुव्रीहौ डो न स्यात् । यथा प्रिया दश येषां ते प्रियदशानः इत्यादि । अस्य चाविश्वास्यत्वात् "ह्रस्वस्य गुणः"॥१।४।

४१॥ इत्यत्र प्रतिपदोक्तवल्लाक्षणिकोऽपि ह्रस्वो ग्राह्यः। यथा हे कर्त्तः, हे निष्कौशाम्बे; अत्र हि कर्तृशब्दस्य तृः "णकतृचौ"॥५।१।४८॥ इत्यनेन तृरूपस्यैवास्य विधानात्प्रतिपदोक्तः; निर्गतः कौशाम्ब्याः "गोश्चान्ते-"॥२।४।९६॥ इति ह्रस्वे निष्कौशाम्बिरित्यत्र इकारस्तु, "गोश्चान्ते-"॥२।४।९६॥ इत्यनेन ह्रस्व इति सामान्योक्तेऽपि कौशाम्बीशब्दे ईकारं स्थानिनं दृष्ट्वा तस्य स्वकीय इकारः कृत इत्यनया रीत्या लक्षणाच्चिह्नादेवागत इति कृत्वा लाक्षणिक एव। अस्य च न्यायस्य क्वचित् क्वचिल्लक्षणेन व्याकरणेन निष्पन्नं लाक्षणिकमव्युत्पन्नं तु प्रतिपदोक्तमित्यप्यर्थे उदाहृतो दृश्यते। यथा हनो ह्य० दिवि, अहन् इत्यस्य लाक्षणिकत्वात् "अह्नः"॥२।१।७४॥ इति नस्य रुर्न स्यात्किन्त्वव्युत्पन्नस्य दिनार्थस्यैवाहन्शब्दस्येति। सोऽपि पूर्वोक्तया व्याख्ययैव संगृहीतो द्रष्टव्यः। तथाहि। सामान्येन ह्यस्तन्यद्यतनीक्रियातिपत्तिषु तावदडागम उक्तः। इह तु ह्यस्तनीचिह्नं दृष्ट्वा अट् कृतः; तथा सामान्येन व्यञ्जनान्ताद्धातोर्देर्लुगूचे; इह तु हन्धातुं व्यञ्जनान्तं दृष्ट्वा देर्लुक् चक्रे इति लक्षणाच्चिह्नादेवागतत्वं त्याद्यन्ताहन्शब्दस्य। दिनार्थस्त्वयमुणादौ "श्वन्मातरिश्वन्-" (उणादि–९०२) इति सूत्रे ईदृगेव नामग्राहमुक्त इति कृत्वा प्रतिपदोक्त इति। एतदनुसारेणान्यत्रापि यथायोगं लाक्षणिकप्रतिपदोक्तता भावयित्वा दर्शनीया ॥ १५ ॥

## नामग्रहणे लिङ्गविशिष्टस्यापि [1]ग्रहणम् ॥ १६ ॥

नाममात्रनिर्देशे स्त्रीत्वादिलिङ्गविशिष्टमपि नाम ग्राह्यम्। शब्दभेदादर्थभेदाच्चाप्राप्तस्य ग्रहणस्य प्रापणार्थोऽयं न्यायः। एवमुत्तरन्यायेऽपि वाच्यम्। यथा "त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते"॥२।१।३३॥ इत्यत्र त्यदामिति नाममात्रनिर्देशेन त्यदाद्यधिकारे सर्वत्र स्त्रीत्वादिविशिष्टानामपि त्यदादीनां ग्रहणात्सा स्या इत्यादौ "तः सौ सः"॥२।१।४२॥ इति से कर्त्तव्ये त्यदादेः सेश्च आपा व्यवधानं न स्यात्; आपः स्त्रीलिङ्गवैशिष्ट्यजन्यत्वेन कार्ये कारणोपचारनीत्या स्त्रीलिङ्गवैशिष्ट्यमात्ररूपत्वविवक्षणात्। तथा च आप एतन्न्यायात्त्यदादिनामग्रहणेनापि ग्रहणस्य सिद्धेः। नामग्रहणे इति किम्। यत्र सलिङ्गनिर्देश-

१ इत्यधिकः पाठः।

स्तत्र तल्लिङ्गविशिष्टस्यैव ग्रहणं यथा स्यात् । तेन "अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य" ॥ २ । ३ । ५ ॥ इत्यत्र कुशानिर्देशादयस्कुशावदयःकुश इत्यत्र रः सो न स्यात् । स्फातिकरं चास्य "राजन्सखेः"॥७।३।१०६॥ इत्यत्र राजन्निति नान्तनिर्देशः । स हि स्त्रीलिङ्गे अनकारान्ते राजन्शब्दे अट्समासान्तनिषेधार्थः, यथा महती च सा राज्ञी च महाराज्ञी । यदि चायं न्यायो न स्यात्तदा राजसखेरित्युच्यमाने महाराज्ञीत्यत्र प्राप्तिरेव नास्ति, राज्ञीत्यस्य भिन्नशब्दत्वादिति कुतस्तन्निषेधार्थं नान्तनिर्देशः क्रियेत; यत्तु कृतस्तद्राजसखेरित्युच्यमाने राजेति नाममात्रनिर्देशस्यैव भवनात्, तथासति चैतन्न्यायेन राज्ञीशब्देऽप्यट्समासान्तप्रसङ्गभवनं सम्भाव्य तन्निषेधनार्थमेव । अस्य च चपलत्वात् "सर्वादि विष्वग्देवाड्डद्रिः क्व्यञ्चौ"॥३।२।१२२॥ इति डद्रिर्विषूचीशब्दान्न स्यात् । तथासति विषूचद्र्यङ् इत्यनिष्टरूपापत्तेः ॥ १६ ॥

## प्रकृतिग्रहणे यङ्लुबन्तस्यापि [1]ग्रहणम् ॥ १७ ॥

यस्माच्छब्दाद्यः प्रत्ययो विधीयते सा तस्य प्रकृतिः, सचात्र सामर्थ्याद्धातुरूपैव, यङ्लुबन्तत्वस्यान्यत्रासम्भवात् । एवमुत्तरन्यायेऽपि वाच्यम् । यस्य धातोः केवलस्य यत्कार्यमुक्तं तत्तस्य यङ्लुबन्तस्यापि स्यात् । तेन प्रणिदत्ते इत्यत्र केवले इव यङ्लुबन्तेऽपि दागि परे, "नेर्ङ्मादा-"॥२।३।७९॥ इति नेर्नो णः सिद्धः; यथा प्रणिदादेति । सत्ताकरं चास्य "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इति बृहत्सूत्ररचनम् । तथाहि । अनुस्वारेतस्तावत् कृगादिधातवस्ते च सर्वेऽप्येकस्वरा एव सन्ति; नत्वनेकस्वरः कश्चिदप्यनुस्वारेदस्तीत्यतः "एकस्वराद्-"॥४।४।५६॥ इत्यस्य व्यवच्छेद्याभावात्कर्त्तेत्यादाविड्निषेधार्थमनुस्वारेत इत्येतावताऽपि सूत्रेण सरति । अथेत्थं ब्रूषे; अस्ति हनादेशो वधधातुरदन्तत्वादनेकस्वरः स्थानिवद्भावादनुस्वारेच्च, तत्प्रयोगेषु चावधीदित्यादिष्विड्निषेधो न दृश्यते; अनुस्वारेत इत्येतावदेव च सूत्रं यदि क्रियते तदा अवधीदित्यादिष्विड्निषेधः प्रसज्यते इति चेत्तर्हि तस्येड्निषेधनिवृत्त्यर्थमवधानुस्वारेत इति सूत्रमस्तु; "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इत्येतावत्तु किमर्थम् । एवं सूत्रकृतिर्हि तदैव सार्थिका स्याद्यदि न केवलमेको

१ इत्यधिकः पाठः ।

वधधातुः किन्त्वन्येऽपि बहवो धातवोऽनेकस्वरानुस्वारेतः स्युर्नत्वन्यथा। तादृशाश्च बहवो धातवस्तदैव सम्भवेयुर्यदि कृगादीन् यङ्लुबन्तीकुर्यात्तेष न्यायः स्फोर्यते। तद्यथा कृधातुर्यङ्लुबन्तत्वे चर्कृ इत्यादिरूपत्वादनेकस्वर एतन्न्यायस्फोरणादनुस्वारेच्चेति; ततश्च चर्करितेत्यादाववधीदित्यादावपि चेड्निषेधनिवृत्त्यर्थत्वाद् "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इति सूत्रकृतिः सार्थिका स्यात्। तदेवमिमं न्यायं विनाऽनुपपद्यमानमनेकस्वरानुस्वारेद्धातुबाहुल्यं विनाऽनुपपद्यमानं "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इति वृहत्सूत्रकरणमिमं न्यायं ज्ञापयति। चटुलश्चायमग्रेतनेनापोद्यमानत्वात् ॥ १७ ॥

## तिवा शवाऽनुबन्धेन निर्दिष्टं यद् गणेन च।
## एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥ १८ ॥

निर्दिष्टमिति तिवेत्यादि चतुर्षु योज्यम्। ततश्च तिवादिर्निर्दिष्टमेकस्वरशब्दमुच्चार्य विहितं च कार्यं विवक्षितधातोर्यदि यङ्लुप् स्यात्तदा न स्यात्। पूर्वेणातिप्रसङ्गे प्राप्ते तन्निषेधपरोऽयं न्यायः। तत्र तिवा निर्दिष्टं द्विधा। अलुप्तेन, लुप्तेन च। तत्रालुप्तेन यथा। "न कवतेर्यङः"॥४।१।४७॥ इति कस्य चत्वनिषेधः। अयं कोकूयते इत्यादौ स्याच्चोकवीतीत्यादौ तु न। लुप्तेन यथा। "ङे पिबः पीप्य्"॥४।१।३३॥ इति पीप्यादेशः। अयं पिबतः केवलस्य स्याद्यथा पिबन्तं प्रायुक्त अपीप्यत्; यङ्लुबन्तस्य तु न स्याद्यथा पापतं प्रायुक्त अपापयत्। शवा निर्दिष्टं यथा। "निसस्तपेऽनासेवायाम्"॥२।३।३५॥ इति निसः सस्य षत्वम्। इदं निष्टपतीत्यादौ स्यान्निस्तातपीतीत्यादौ तु न। अनुबन्धेन निर्दिष्टं यथा। "गापास्थासादामाहाकः"४।३।९६॥ इति एत्वम्। इदं हेयादित्यादौ स्याज्जहायादित्यादौ तु न। गणेन निर्दिष्टं त्रिधा। सङ्ख्यया, आदिशब्देन, बहुवचनेन च। तत्र सङ्ख्यया यथा। "रुत्पञ्चकाच्छिदयः"॥४।४।८८॥ इतीट्। अयं स्वपितीत्यादौ स्यात्सोषोसीत्यादौ तु न। आदिशब्देन यथा। "लृदिद्द्युतादिपुष्यादेः परस्मै"॥३।४।६४॥ इत्यङ्। अयमद्युतादित्यादौ स्यात्, अदेद्योतीदित्यादौ तु न। बहुवचनेन यथा। "तेर्ग्रहादिभ्यः"॥४।४।३३॥ इत्यनेन ग्रहादिभ्यः परस्याशितास्तिप्रत्ययस्यादौ "स्ताद्यशितः" ॥४।४।३२॥ इत्यनेन प्राप्तस्य इटो अनुज्ञाविधिः स भणितिः इत्यादौ स्यात्, बम्भा-

णिरित्यादौ तु न । एकस्वरनिमित्तं यथा । "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इतीड्निषेधः । अयं शक्त इत्यादौ स्यात्, शाशकित इत्यादौ तु न । ननु शाशकित इत्यादावेकस्वरत्वाभावादेव "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इति सूत्रं न प्रवर्त्स्यति किं न्यायेन । सत्यम् । परं शकिधातुर्यद्येकस्वरस्तदा प्रकृतिग्रहणे यङ्लुबन्तस्यापीति न्यायात् शाशकिरप्येकस्वर उच्यते । तथा चात्रापि "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इतीड्निषेधः प्राप्नोति, परमेतन्न्यायेन निषेधान्न स्यात् । व्यक्तिकरं त्वस्य तत्तत्सूत्रेषु तिवादिनिर्देशा एव । तथाहि । तिवादिनिर्देशास्तावत्तत्तत्सूत्रेषु कृतास्तेषां च विशेषः प्रायोऽन्यः कोपि न, एतावांस्तु दृश्यते; यदुत यङ्लुबन्तप्रयोगेषु तत्तत्सूत्रोक्तकार्याणि न सन्तीति । ततोऽर्थापत्त्या ज्ञायते, एतदर्थमेवैते कृता इति । तरलत्वं त्वस्याद्ये पञ्चमे चांशे न दृश्यते; शेषेषु तु दृश्यते । तत्र द्वितीये यथा । अपात् इत्यादाविव, अपापात् इत्यादावपि "पिबैतिदाभूस्थः सिचो लुप्परस्मै न चेट्"॥४।३।६६॥ इत्यनेन शब्निर्दिष्टोऽपि सिचो लुबिड्निषेधश्चाभूताम् । तृतीये यथा । नृत्त इत्यादाविव नरीनृत्त इत्यादावपि "डीयश्व्यैदितः क्तयोः"॥४।४।६१॥ इत्यनेनानुबन्धनिर्दिष्टोऽपीड्निषेधोऽजनि । तुर्ये यथा । स्प्रष्टा इत्यादाविव, स्पृशेर्यङ्लुपि रागमे तिवि परस्प्रष्टि इत्यादावपि "स्पृशादिसृपो वा"॥४।४।११२॥ इत्यनेन गणानिर्दिष्टोऽप्यदागम आगात् ॥ १८ ॥

## सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥१९॥

सन्निपतति सङ्गच्छते कार्यमस्मिन्निति सन्निपातो निमित्तम्; तल्लक्षणं चिह्नं यस्य स सन्निपातलक्षणः । कोऽर्थः । निमित्तरूपमव्यभिचारि चिह्नं दृष्ट्वा निर्णीतप्रवृत्तिकः; स्वनिमित्तादुद्भूत इति यावत् । स विधिस्तस्य प्रस्तावात् स्वनिमित्तस्य विघाते निमित्तं न स्यात् । लोके पितृघातकपुत्रादौ कार्यादपि कारणविघातस्य दर्शनाद्व्याकरणे तथात्वनिषेधार्थोऽयं न्यायः । यथा पपाच इत्यत्र णवा जातमनेकस्वरत्वं "धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्तिचानुतदन्तम्"॥३।४।४६॥ इत्यामादेशनिष्पादनेन णवो विघाताय न स्यात् । उद्भावकं त्वस्य "धातोरनेकस्वरात्-"॥३।४।४६॥ इत्यत्र सामान्येनानेकस्वरादित्युक्तिः । तथाहि । धातोरनेकस्वरत्वं तावद् द्विधा; परोक्षाहेतुकमन्यच्च । आद्यं

पचादीनां; द्वितीयं चकासादीनाम्। तत्र द्वितीये "धातोरनेकस्वरात्-"॥३।४।४६॥ इत्यामादेशो दृश्यते; यथा चकासामास। आद्ये तु न; यथा पपाच। एवं सत्यपि सूत्रेऽनेकस्वरादिति सामान्येनैव यदुक्तं तदेतन्न्यायाशयैव। क्वचिद्दृश्यति चायम्; तेनातिजरसैरित्यत्रातिजरशब्दस्यादन्तत्वेन निष्पन्नोऽपि भिस ऐस् जरसादेशहेतूभवनेन स्वहेतोरदन्तत्वस्य विघाताय जातः। अस्यत्तानिवेदकं तु "भिस ऐस्"॥१।४।२॥ इत्यत्र एस्करणेऽपि देवैरित्यादिप्रयोगसिद्धावपि ऐसः करणम्। तथाहि। ऐस्तावदतिजरसैरित्यस्य सिद्ध्यर्थं कृतः। यदि चायमभ्रंशशील एव स्यात्तदा "गोश्चान्ते ह्रस्वोऽनंशि समासेयो बहुव्रीहौ"॥२।४।९६॥ इति कृतह्रस्व-जराशब्दस्य ऐसि जरसादेश एव न प्राप्नोति; ऐसः स्वनिमित्तस्यातिजरशब्दा-कारान्तत्वस्य विघातकत्वासम्भवात्। तथा च न कथमप्यतिजरसैरिति सिध्येत्। तथापि यदैस्कृतस्तदेतन्न्यायस्य भ्रंशशीलत्वादैसि परे निर्विघ्नं जरसादेशभवन-संभावनयैव ॥ १९ ॥

## असिद्धं बहिरङ्गमन्तरङ्गे ॥२०॥

प्रकृतेराश्रितं यत्स्याद्यद्वा पूर्वं व्यवस्थितम्।
यस्य वाऽल्पनिमित्तानि अन्तरङ्गं तदुच्यते ॥ १ ॥
प्रत्ययस्याश्रितं यत् स्याद्बहिर्वा यद्व्यवस्थितम।
बहूनि वा निमित्तानि यस्य तद्बहिरङ्गकम् ॥ २ ॥

बहिरङ्गं कार्यमन्तरङ्गे विधौ कर्त्तव्ये असिद्धमसदिव स्यात्। बहिरङ्गस्य दौर्ब-ल्यख्यापनार्थोऽयं न्यायः। यथा गिर्योरित्यादौ प्रत्ययाश्रितत्वाद्बाहिर्व्यवस्थितत्वा-द्वा बहिरङ्गस्य यत्वस्य प्रकृत्याश्रितत्वात्पूर्वव्यवस्थितत्वाद्वाऽन्तरङ्गे "भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने"॥२।१।६३॥ इति दीर्घविधौ कर्त्तव्ये असिद्धत्वाद्दीर्घो नाभूत्। तथा तच्चारु इत्यादौ चवर्गयोगजं चत्वमुभयपदाश्रितत्वाद्बहिरङ्गमेकपदाश्रि-तत्वादन्तरङ्गे "चजः कगम्"॥२।१।८६॥ इति कत्वे कर्त्तव्ये असिद्धमित्यतः कत्वं न। आविर्भावकं चास्य "न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि" ॥७।४।१११॥ इति सूत्रे सन्धिविधित्वेन द्वित्वविधौ स्थानिवद्भावनिषेधे सिद्धे-ऽपि द्विग्रहणम्। तद्धि दध्यत्रेत्यादौ यत्वादेरेतन्न्यायप्राप्तासिद्धत्वद्वारेणापि जाय-

मानस्य स्थानिवद्भावस्य निषेधार्थम् । तथाहि । दध्यत्रेत्यादौ धस्य "अदीर्घाद्विरा-मैकव्यञ्जने"॥१।३।३२॥ इति द्वित्वे क्रियमाणे "स्वरस्य परे प्राग्विधौ"॥७।४।११०॥ इत्यनेन यत्वादेः स्थानिवद्भावोविघ्नीभवन् सन् "न सन्धि-"॥७।४।१११॥ इति सूत्रे सन्धिग्रहणेन निषिद्धः, द्वित्वस्य सन्धिविधित्वात् । द्वितीयतृतीयपादयोर्विधी हि क्रमात्स्वरव्यञ्जनसन्धी उच्येते, एवं स्थिते पुनः सूरिणाऽऽशङ्कि; धस्य द्वित्वमद्यापि दुर्घटम्; यतः "स्वरस्य परे प्राग्विधौ"॥७।४।११०॥ इत्यनेन यत्वादेर्यः स्थानिवद्भावः प्राप्तः स एव "न सन्धि-"॥७।४।१११॥ इत्यपवादसूत्रेण निषेद्धुं शक्यते । परम-सिद्धं बहिरङ्गमिति न्यायेन यत्वादेरसिद्धत्वद्वारेण यः स्थानिवद्भावः प्राप्नोति स दुर्निवार इत्यतोऽस्य न्यायस्य बाधनार्थं "न सन्धि-"॥७।४।१११॥ इति सूत्रे सन्धितः पृथग् द्विग्रहणं कृतं विलोक्यते । द्वित्वविधावेतन्न्यायप्राप्तासिद्धत्वद्वा-रेणापि यत्वादेः स्थानिवद्भावो माभूदित्येवमर्थम्; इति मत्वा सूरिणा "न सन्धि-॥७।४।१११॥ इति सूत्रे सन्धितः पृथग्द्विग्रहणं कृतम् । एवं च बाधकस्य द्विग्रह-णस्य बाध्याविनाभावित्वाद्बाध्यरूपैतन्न्यायाविर्भावकत्वं सुघटमेव । परिप्लव-श्चायमुत्तरेण प्लाव्यमानत्वात् ॥ २० ॥

## न स्वरानन्तर्ये ॥ २१ ॥

स्वरयोरानन्तर्ये सति यदन्तरङ्गं कार्यं क्रियते तस्मिन् कर्त्तव्ये बहिरङ्गम-सिद्धं न स्यात् । पूर्वेण प्राप्तस्यातिप्रसङ्गस्य निषेधार्थोऽयं न्यायः । यथा इयेष; बभूवुषा । अत्र बहिर्व्यवस्थितत्वाद्बहिरङ्गोऽपि इष्धातोर्गुणः क्वसोरुषादेशश्च पूर्वव्यवस्थितत्वादन्तरङ्गे यथाक्रमं "पूर्वस्यास्वे स्वरे य्वोरियुव्"॥४।१।३७॥ इतीया-देशे "धातोरिवर्ण-"॥२।१।५०॥ इत्युवादेशे च कर्त्तव्ये असिद्धो नाभूत्, स्वरयोरानन्तर्यसद्भावात् । तथाचेयुवादेशौ सिद्धौ । सम्भावकं चास्य "वृत्त्यन्तो ऽसषे"॥१।१।२५॥ इति निर्देशः । अत्र हि वृत्त्यन्तशब्दाग्रस्थस्य से रोः "अतोऽति-रोरुः"॥१।३।२०॥ इत्यनेन कृतस्य उत्वस्य पदान्तरस्थाकारसापेक्षत्वेन बहिरङ्गस्य "अवर्णस्येवर्णादिनैदोदरल्"॥१।२।६॥ इत्यनेन प्राक्स्थिताकारेण सह ओत्वे एकपदापेक्षत्वेनान्तरङ्गे कर्त्तव्ये पूर्वन्यायेन यद्यसिद्धत्वं स्यात्तदा ओत्वस्याभवने "वृत्त्यन्तोऽसषे"॥१।१।२५॥ इति निर्देशः सम्भवत्येव न । यस्त्वेवं निर्दिष्ट

तज्ज्ञायते, एतन्न्यायेन प्राग्न्यायबाधभवनादुत्वस्यासिद्धत्वं न जायत इति। पारिप्लवता त्वस्य न सम्भाव्यते। प्राक्तनन्यायश्च "स्थानीव-"॥७।४।१०९॥ इति "स्वरस्य"॥७।४।११०॥ इति परिभाषयोः सजातीयोऽयं तु "न सन्धि-"॥७।४।१११॥ इति परिभाषायाः ॥ २१ ॥

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ २२ ॥

मुख्यस्य बलिष्ठताख्यापनार्थोऽयं न्यायः। यथा "चरणस्य स्थेणोऽद्यतन्यामनुवादे"॥३।१।१३८॥ इति सूत्रे स्थेणोर्मुख्यकर्तुश्चरणस्येति व्याख्यातम्। तथाहि। "चरणस्य-"॥३।१।१३८॥ इति सूत्रस्यार्थादि तावदेवम्। तत्तद्वेदशाखाऽध्ययनहेतुकतत्तद्व्यपदेशभाजो द्विजन्मानश्चरणाः कठादयः। प्रमाणान्तरप्रतिपन्नस्यार्थस्य शब्देन संकीर्त्तनमनुवादः। ततश्चाद्यतन्यां परभूतायां यौ स्थेणौ धातू तयोः कर्त्तृत्वेन सम्बन्धिनो ये चरणास्तेषां सजातीयैरेव पदैरारब्धो यो द्वन्द्वः सोऽनुवादविषये समाहारः स्यात्। यथा प्रत्यष्ठात्कठकालापम्, उदगात्कठकौथुमम्। एषां प्रतिष्ठोदयावनुवदन् कश्चिदिदमाह; अत्र कठाश्च कालापाश्चेति समासे "चरणस्य-"॥३।१।१३८॥ इति सूत्रेण समाहारोऽभूत्; करणादित्वेन सम्बन्धित्वे तु समाहारो न स्यात्। यथा प्रत्यष्ठात् कठकालापाभ्यां कश्चिदित्यादि। एवं च स्थेणोः करणादित्वेनापि सम्बन्धिता चरणानां संभवति; सम्बन्धहेतूनां कारकाणां षट्सङ्ख्यत्वात्। तथापि "चरणस्य स्थेणः-"॥३।१।१३८॥ इति सूत्रवृत्तौ यत् स्थेणोः कर्तृत्वेन सम्बन्धिनो ये चरणा इति व्याख्यातं तत्कर्तुरेव स्वातन्त्र्यात् सर्वकारकेषु मुख्यत्वेनैतन्न्यायात्कर्तुरेव व्याख्याऽत्र प्राप्नोतीति बुध्येव। अपि च। कर्तृत्वेन सम्बन्धे सत्यपि कर्त्ता गौणो मुख्यश्च सम्भवति; तत्र यदि मुख्यत्वभाजा कर्त्रा सह सम्बन्धः स्यात्तदैव समाहारः स्यात, गौणत्वभाजा तु कर्त्रा सह सम्बन्धे सत्यपि न स्याद्गौणमुख्ययोरिति न्यायात्। तेन यदा भावे प्रयोगस्तदा समाहारो न स्यात्। यथा प्रत्यष्ठायि कठकालापाभ्याम्। अत्र हि चरणस्य कर्तृत्वेन सम्बन्धे सत्यपि भावस्यैव प्राधान्यं न तु कर्तुरिति। अस्य चाविष्करणं "चरणस्य स्थेणः-"॥३।१।१३८॥ इति सामान्येनैवोक्तिः। तथाहि। अत्र तावत् स्थेणोर्मुख्यकर्तुश्चरणस्येतीष्टम्; तथा च तथैवोच्येत; यत्तु तथा नोक्तं, तत्सामान्योक्तेऽ

ष्येतन्न्यायादेव स्वरणानां कर्तृत्वं कर्तृत्वेऽपि मुख्यत्वं च लप्स्यते इत्याशयैव । अस्य चानित्यत्वाद् "धातोरिवर्णोवर्णस्य-"॥२।१।५०॥ इत्यनेन शिश्रियुः, लुलुवुरित्यादौ मुख्यधातूनामिव नियौ, लुवौ इत्यादौ क्विबन्तत्वेन गौणानामपि धातूनामियुवौ सिद्धौ । अनित्यताबोधकं तु "स्यादौ वः"॥२।१।५७॥ इति सूत्रम् । तथाहि । वसु इच्छतः क्यनि वसूयतः, ततः क्विपि "अतः"॥४।३।८२॥ इत्यल्लुकि "योऽशिति"॥४।३।८०॥ इति यलुकि वस्वौ, एवं वस्व इत्यादौ वत्वासिद्ध्यर्थं तावत् "स्यादौ वः"॥२।१।५७॥ इति सूत्रं कृतम् । तच्च वत्वं "इवर्णादेरस्वे स्वरे-"॥१।२।२१॥ इत्यनेनापि सिध्येत्परं वार्णात्प्राकृतमिति न्यायात्परत्वाच्च "इवर्णादेः-"॥१।२।२१॥ इति वत्वं बाधित्वा "धातोरिवर्ण-"॥२।१।५०॥ इत्युवेव प्रवर्त्तते; तद्बाधनार्थं "स्यादौ वः"॥२।१।५७॥ इति सूत्रं कृतम् । यदि चायं न्याय इद्धः स्यात्तदा वस्वौ इत्यादिषु गौणधातुत्वादेव "धातोरिवर्ण-"॥२।१।५०॥ इत्युवादेशो न प्राप्नोतीति कुतस्तद्बाधनार्थं "स्यादौ वः"॥२।१।५७॥ इति सूत्रं कुर्यात् । यत्तु कृतं तज्ज्ञापयति एतन्न्यायस्यानित्यत्वाद् गौणधातोरप्युवादेशः प्राप्नोत्येवेति । प्रधानानुयायिनो व्यवहारा इत्यपि न्यायोऽस्ति । यथा मुनीनित्यादौ इकारस्य शसोऽकारस्य चेत्युभयोः स्थानित्वेऽपि षष्ठ्या निर्दिष्टत्वेन मुख्यस्थानिन इकारस्यैवासन्न ई दीर्घः स्यान्नत्वकारस्यासन्न आः । शसोऽता सह इति सहार्थनिर्देशेन शसोऽकारस्य गौणत्वादिति । परमिदं प्रकृतन्यायेनापि सिध्यतीति सोऽत्रैवान्तर्भूतः । किंच । प्रधानानुयाय्यप्रधानमित्यपि न्यायोऽस्ति । यथा नीलोत्पलमित्यत्रोभयोरपि पदयोर्व्यभिचारित्वेन मिथोऽन्यव्यवच्छेदनिष्ठत्वादविशेषेण विशेषणविशेष्यभावसम्भवाद्यदोत्पलस्य विशेषणत्वं नीलस्य तु विशेष्यत्वं विवक्ष्यते, तदा "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च"॥३।१।९६॥ इति सूत्रेण कर्म्मधारयसमासे उत्पलनीलमित्यपि प्राप्नोति, परं न स्यात् । किन्तु द्रव्याश्रया गुणा इति नीत्या गुणशब्दत्वादप्रधानं नीलशब्द एतन्न्यायेन पश्चादेव तिष्ठति । गुणाश्रयो द्रव्यमिति नीत्या द्रव्यशब्दत्वात्प्रधानं तूत्पलशब्दः पुरोभूयावतिष्ठते इति । परमेषोऽपि न्यायो मुख्ये कार्यसम्प्रत्यय इति वदता प्रकृतन्यायेन स्वकुक्षावेव निक्षिप्तः; पुरोभूयावस्थानस्यापि कार्यविशेषमात्ररूपत्वात् ॥ २२ ॥

## कृत्रिमाकृत्रिमयोः कृत्रिमे ॥२३॥

कार्यसम्प्रत्यय इति सम्बन्धः । कृत्रिमं परिभाषानिष्पन्नं; तच्च गौणमौपाधिकत्वात् । ततोऽन्यदकृत्रिमं लोकप्रसिद्धं; तच्च मुख्यमनौपाधिकत्वात् । तयोर्मध्ये कृत्रिमे कार्यं कार्यम् । पूर्वेणाकृत्रिमस्य ग्रहणे प्राप्ते तदपवादोऽयं न्यायः । यथा "असहनञ्विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः"॥२।४।३८॥ इत्यत्र

अविकारोऽद्रवं मूर्त्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ १ ॥

इति लक्षितमेव स्वाङ्गं गृह्यते न तु स्वमङ्गमवयव इति यौगिकमकृत्रिमम् । तेन दीर्घमुखा शालेत्यत्र मुखस्य शालाऽपेक्षया लोकप्रसिद्धस्वाङ्गत्वे सत्यप्यप्राणिस्थत्वेन पारिभाषिकस्वाङ्गत्वाभावान्न ङीः । प्रकाशकं चास्य, "आङो यमहनः स्वेऽङ्गे च"॥३।३।८६॥ इत्यत्र स्वाङ्गशब्दयोर्व्यस्ताभिधानम् । इदं ह्यायच्छति पादौ मैत्रस्येत्यादावविकारो द्रवमित्यादिस्वाङ्गलक्षणे सत्यपि पदयोः स्वकीयावयवत्वाभावादात्मनेपदं माभूदित्येवमर्थम् । स्वाङ्ग इति समस्ताभिधाने त्वत्रापि स्वाङ्गलक्षणसद्भावादेतन्न्यायबलादात्मनेपदमभविष्यदेव । अत एतन्न्यायाशङ्कया व्यस्ताङ्गाभिधानं कृतम् । अस्यासार्वत्रिकता तूत्तरन्याये दर्शयिष्यते ॥ २३ ॥

## क्वचिदुभयगतिः ॥ २४ ॥

उभयस्य गतिर्विज्ञानं ग्रहणमिति यावत्ततश्च क्वचित्कृत्रिममकृत्रिमं च ग्राह्यमित्यर्थः । पूर्वापवादोऽयं न्यायस्तेन "नाडीतन्त्रीभ्यां स्वाङ्गे"॥७।३।१८०॥ इत्यनेन बहुनाडिः कायो बहुतन्त्री ग्रीवेत्यत्र कृत्रिमस्वाङ्गवृत्त्योर्नाडीतन्त्रीशब्दयोर्यथा कच् निषिध्यते तथा अकृत्रिमस्वाङ्गवृत्त्योरपि । यथा बहुनाडिः स्तम्बो बहुतन्त्री वीणा । अत्र हि नाडीतन्त्र्योरप्राणिस्थत्वान्न कृत्रिमस्वाङ्गत्वम् । ननु स्तम्बस्यैकेन्द्रियप्राणित्वान्नाड्याः कथमप्राणिस्थत्वम् । उच्यते । "प्राण्यौषधिवृक्षेभ्योऽवयवे च"॥६।२।३१॥ इति सूत्रे प्राणिग्रहणेनैव चेतनावत्त्वेन वृक्षौषधिग्रहणे सिद्धेऽपि पृथक्तद्ग्रहणेनेदं ज्ञापितम्, यदुतेह व्याकरणे प्राणिग्रहणेन त्रसा एव गृह्यन्ते न तु स्थावरा इति । विकासकं त्वस्य तथाप्रयोगदर्शनमेव । तथाहि । कृत्रिमाकृत्रिमयोरिति न्याये सत्यपि यदुभयथा क्वचित्प्रयोगा दृश्यन्ते

तज्ज्ञायते क्वचिदुभयेत्यपि न्यायोऽस्तीति। अग्रेऽपि यत्र क्वापि तथाप्रयोगदर्शनस्य ज्ञापकत्वं वक्ष्यते तत्रैवमेव भावना कार्या। कादाचित्कश्चायं न्यायः, प्राक्तनश्च; कृत्रिमाकृत्रिमयोर्मध्ये अकृत्रिमस्यैव केवलस्य क्वापि क्वापि ग्रहणदर्शनात्। तथाहि। "शिरोऽधसः पदे समासैक्ये"॥२।३।४॥ इत्यत्र पारिभाषिकं विभक्त्यन्तं पदं व्युदस्याकृत्रिमं पदं पदशब्दरूपमेव गृहीतम्। यथा शिरस्पदम्, अधस्पदम्; अत्र "शिरोऽधसः-"॥२।३।४॥ इत्यनेन रस्य सः ॥ २४ ॥

## सिद्धे सत्यारम्भो नियमार्थः ॥ २५ ॥

नैरर्थक्याशङ्कानिरासार्थोऽयं न्यायः। यथा दण्डीत्यादौ "नि दीर्घः"॥१।४।८५॥ इति दीर्घे सिद्धेऽपि "इन्हन्पूष-"॥१।४।८७॥ इति सूत्रारम्भो यः स नियमार्थ एव जातः। नियमश्चायम्, इनादीनां शिस्योरेव दीर्घो नान्यघुटीति; तेन दण्डिनावित्यादौ "नि दीर्घः"॥१।४।८५॥ इत्यनेनापि दीर्घो न। प्रभासकं त्वस्य पुनः सूत्रारम्भ एव। तथाहि। यद्ययं न्यायो नाभविष्यत्तदा "इन्हन्-"॥१।४।८७॥ इत्येतद्विधिसूत्रमेवाभविष्यत्तथा च नारब्धव्यम्; एतत्साध्यस्य "नि दीर्घः"॥१।४।८५॥ इत्यनेनैव सिद्धेः। तथापि यदारब्धं तदेतन्न्यायान्नियमसूत्रमिदं भावीति बुद्ध्यैव। अस्य चानिश्चयत्वात्पूजार्ह इत्यादौ "लिहादिभ्यः"॥५।१।५०॥ इत्येवाचि सिद्धेऽपि, "अर्होऽच्"॥५।१।९१॥ इत्यादि षट्सूत्र्यारम्भो लिहादिप्रपञ्चार्थ एव न तु नियमार्थः ॥ २५ ॥

## धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्॥२६॥

यत्कार्यं धातोः स्वरूपमुच्चार्य प्रत्यये परे सत्युक्तं, तत्तत्प्रत्यये इति कोऽर्थः। सर्वं वाक्यं सावधारणमिति न्यायात्तस्य धातोरेव सम्बन्धिनि विवक्षितप्रत्यये पुरःस्थे सति स्यान्नतु नाम्नोऽपि सम्बन्धिनि। यस्य धातोः प्रत्यये परे सति यत्कार्यमुक्तं तत्तस्य क्विबन्तत्वजनामत्वावस्थायामपि तत्सम्बन्धिनि प्रत्यये परे सति प्राप्नोति तदानीमपि तस्य क्विबन्ता धातुत्वं नोज्झन्तीति न्यायेन धातुत्वस्यापि सद्भावादित्यतो यदा क्विबन्तादुक्तधातोरुक्तप्रत्ययः समानीयते, तदानीं तस्य धातोस्तत्प्रत्ययनिमित्तककार्यनिषेधार्थोऽयं न्यायः। यथा दुष्यन्तं प्रयुङ्क्ते दूषयती त्यत्रवद्दोषणं दुट्, क्विप्, तां करोति "णिज् बहुलं-"॥३।४।४२॥ इति णिजि दुष-

यति; अत्र "ऊद् दुषो णौ"॥४।२।४०॥ इत्यनेन उत ऊर्न; यतोऽत्र क्विबन्तस्य दुषः क्विबन्तता धातुत्वमिति न्यायेन धातुत्वनामत्वोभयसद्भावात्तदग्रे विहितो णिज् यथा धातुसम्बन्ध्युच्यते तथा नामसम्बन्ध्यपि। किञ्च स्रष्टा द्रष्टेत्यत्रवद्रज्जुसृड्भ्यां दृग्भ्या मित्यत्र "अः सृजिदृशोऽकिति"॥४।४।१११॥ इत्यकारो न; भ्यामोऽकिद्ङादिप्रत्ययस्य प्राग्वद्धातोरिव नाम्नोऽपि सम्बन्धित्वसद्भावात्। यद्यपि चात्र क्विपः कित्प्रत्ययस्य स्थानिवद्भावकरणे अकारप्राप्तेरेवाभावान्नास्त्येतन्न्यायापेक्षा। तथापि स्थानिवद्भावस्यानित्यत्वादिना केनापि हेतुना आचार्यैरत्रैतन्न्यायप्रवृत्तिर्दर्शितेत्यतोऽत्रापि तथैवोचे। प्रतिभासकं त्वस्य विशेषणानुक्तिरेव। तथाहि। दूषयति, स्रष्टा इत्यादौ धातुसम्बन्धिनि प्रत्यये धातोरुत ऊत्वमकारागमश्च दृश्यते; दुषयति, रज्जुसृड्भ्यामित्यादौ नामसम्बन्धिनि तु न दृश्यते, तथापि यत् "ऊद्दुषो णौ"॥४।२।४०॥ "अः सृजि-"॥४।४।१११॥ इति सूत्रयोः प्रत्ययस्य विशेषणं किमपि नोक्तं, तदेतन्न्यायाशयैव। एतदनुसारेणाग्रेऽपि विशेषणानुक्तिस्तस्या ज्ञापकता च भाव्ये। अनिश्चितता त्वस्य न निश्चीयते ॥ २६ ॥

## नञुक्तं तत्सदृशे ॥ २७ ॥

नञा उक्तं पदं नञुक्तपदसदृशे विशेष्यभूते पदे विश्राम्यति। कोऽर्थः। यत्पदं नञा योगान्निषिध्यते तत्सदृशमेवापरं पदं ग्राह्यं नत्वसदृशम्। यथा "य्यक्ये"॥१।२।२५॥ इत्यत्र क्यप्रत्ययेन नञुक्तपदेन क्यसदृशस्य यकारादेरपि प्रत्ययत्वनियमनाद्गां नावं वेच्छति क्यनि गव्यति, नाव्यतीत्यादौ अवावौ स्यातां; परं गोयानं, नौयानमित्यादौ न स्याताम्। विभासकं प्राग्वत्। अस्य चानिर्णयत्वात्पर्युदासे प्रवृत्तिरस्ति न प्रसज्ये। उक्तं च। 'पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्' इति। ततश्च "अनतो लुप्"॥१।४।५९॥ इत्यत्र प्रसज्यनञ्सद्भावादकारस्य नञुक्तत्वेऽप्यकारसदृशस्य स्वरस्यैव केवलस्य ग्रहणं न स्यात्, किन्त्वकारवर्जसर्वस्वराणां सर्वव्यञ्जनानां च ग्रहणं स्यात्तेन पय इत्यादौ व्यञ्जनान्तादपि स्यमोर्लुप् सिद्धा। एवं च निषेधमात्रपर्यवसायिनः प्रसज्यनञः प्रतिकूलोऽयं न्यायः ॥ २७ ॥

## उक्तार्थानामप्रयोगः ॥ २८ ॥

उक्तः प्रत्यायितोऽन्यैः प्रत्ययाद्यैरर्थोऽभिधेयं येषां तेषां द्वितीयादिविभक्त्या-

दीना प्रयोगो न कार्यः । यथा क्रियते कटोऽनेनेत्यादौ कर्मादिषूत्पन्नैरात्मनेपदाद्यैः कर्मादिशक्तयः प्रत्यायिता इति तत्प्रत्यायनाय कटादेर्द्वितीयादि न स्यात्ततः परिशिष्टेऽर्थमात्रे प्रथमा । अक्ष्णा काणः, पदा खञ्ज इत्यादौ काणत्वखञ्जत्वयोरक्षिपद्भ्यामन्यत्रासम्भवात् काणखञ्जशब्दाभ्यामुक्तार्थयोरप्यक्षिपादशब्दयोर्लोकरूढ्या प्रयोगोऽस्ति लोकरूढेः कथमप्यनिवार्यत्वात्; क्रियते कटोऽनेनेत्यादौ तु तथा निषेधार्थोऽयं न्यायः । उद्भासकं त्वस्य "रषृवर्णात्-"॥२।३।६३॥ इति सूत्रे एकशब्दस्य नियमार्थत्वम् । तथाहि । इह तावदेकशब्दस्य नियमार्थत्वमिष्टम् । तच्च विध्यर्थे बाधकमुद्भाव्यैव कर्तुं शक्यं, नत्वनुद्भाव्य; विधिनियमयोः सम्भवतोर्विधिरेव ज्यायानिति न्यायात् । तद्बाधकं चैवमेवोद्भवति । तथाहि । यद्यत्रैकशब्दस्यैकत्वमात्ररूपो विध्यर्थः स्यात्तदा "ह्रस्वोऽपदे वा"॥१।२।२२॥ इत्यत्रवदत्राप्येकवचनेनैव एकत्वं प्रत्यायितमित्युक्तार्थत्वेन एतन्न्यायात्तस्य प्रयोगो न युक्त इत्यतो नात्र विध्यर्थः सम्भवतीति । एवं चैतन्न्यायोत्थविध्यर्थासम्भवबलेनैवोद्भाव्यमाना एकशब्दस्य नियमार्थता एतन्न्यायज्ञापिका स्यादेव । "रषृवर्णात्-"॥२।३।६३॥ इति सूत्रे एकशब्दज्ञापितो नियमश्चायम्; एकमेव यन्नित्यं पदं तत्रैव णत्वं स्याद्, यथा नृणामित्यादौ । यत्तु एकमनेकं च, तत्र न स्याद्यथा नृनाथ इत्यादौ । अस्यानिर्णीतेश्च "शिरोऽधसः पदे समासैक्ये"॥२।३।४॥ इति सूत्रे ऐक्यशब्दप्रयोगस्तथाहि । अत्र तावत्समासे इत्येकवचनेनाप्युक्तमेवैक्यम्; यथा "वौष्ठौतौ समासे"॥१।२।१७॥ इत्यत्र । तथाऽप्यैक्यशब्दप्रयोगो यः स एतन्न्यायानिर्णीतित्वादेव । अतएवानेनैक्यशब्दप्रयोगेण तत्र विचित्रा सूत्राणां कृतिरिति न्यायः सूचितोऽस्तीत्युक्तम् । यत एतदेवात्र वैचित्र्यं, यदुक्तार्थानामपि प्रयोगः ॥ २८ ॥

## निमित्ताभावे नैमित्तिकस्याप्यभावः ॥२९॥

निमित्तेन चरतीति वाक्ये "चरति"॥६।४।११॥ इत्यनेनेकणि नैमित्तिकम् । निमित्तस्य निवृत्तौ नैमित्तिकं, तज्जातं कार्यमपि निवर्त्तते । लोके कुम्भकारविनाशेऽपि घटस्य दर्शनात्कारणनिवृत्तौ कार्यनिवृत्तेरभावेऽपि व्याकरणे तद्भावख्यापनार्थोऽयं न्यायः । यथा बिम्बशब्दाद्वल्लिविशेषनामत्वाविवक्षायां स्त्रीत्वे गौरादित्वाद् ङ्याम्, "अस्य ङ्यां लुक्"॥२।४।८६॥ इति बिम्बाकारलुकि च; बिम्बी । तदनु

बिम्ब्याः फलं बिम्बम्; अत्र हेमादित्वादञि, "फले"॥६।२।५८॥ इति तल्लुपि, " ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः "॥२।४।९५॥ इति ङीनिवृत्तौ "अस्य ङ्यां लुक्"॥२।४।८६॥ इति ङीजाताया अल्लुकोऽपि निवृत्त्या अकारः प्रत्यावृत्तः। उद्दीपकं त्वस्य बिम्बमित्यादिसिद्ध्यर्थं "न सन्धि-"॥७।४।१११॥ इति सूत्रे ङीलुकोऽल्लुकि कार्ये स्थानिवद्भावनिषेधोक्तिस्तथाहि। "न सन्धि-"॥७।४।१११॥ इति सूत्रवृत्तौ तावद् ङीविधौ कर्त्तव्ये स्वरस्यादेशः स्थानिवन्न भवतीत्यंशस्योदाहरणं बिम्बमिति दर्शितम्। कथं बिम्ब्याः फलं; हेमादित्वादञि, "फले"॥६।२।५८॥ इति तल्लुपि, "ङ्यादेर्गौणस्य-"॥२।४।९५॥ इति ङीलुक्। अयं ङीरूपस्य स्वरस्यादेशः परनिमित्तकः। यदि चास्य ङीलुग्रूपस्य स्वरादेशस्य स्थानिवद्भावकरणेन ङीः सद्भूतः क्रियते, तदा ङ्यां परभूतायाम् "अस्य ङ्यां लुक्"॥२।४।८६॥ इत्यनेन बिम्बाकारस्य लुक् प्रसज्यते; तथाच बिम्बमिति रूपं न सिद्ध्येत्। अतो अल्लुग्रूपे ङीविधौ कर्त्तव्ये ङीलुग्रूपस्य स्वरादेशस्य स्थानिवद्भावो न क्रियते इति। यदि चायं न्यायो न स्यात्तदा सर्वमिदं व्यर्थमेव स्यात्तथाहि। "अस्य ङ्याम्-"॥२।४।८६॥ इत्यनेनाल्लुको वारणार्थं तावद् ङीलुकः स्थानिवद्भावनिषेधः क्रियते। स चाकार एव प्रथमं नास्ति तस्य प्रागपि ङीसद्भावसमये लुप्तत्वात्। ततः कस्य लुकं निषेद्धुमेतावान् यत्नः क्रियते इति परमेतन्न्यायसद्भावाद् ङ्यो लुक्करणे तद्धेतुकस्य अल्लुकोऽप्यभावभवनेन योऽकारः प्रत्यावृत्तोऽस्ति तस्य प्रथमवारमिव द्वितीयवारमपि "अस्य ङ्याम्-"॥२।४।८६॥ इति लुग्माभूदित्याशङ्कया ङीलुकः स्थानिवद्भावः प्रतिषिद्ध इति सर्वं सार्थकम्। तदेवमिमं न्यायं विनाऽनुपपद्यमानामकारप्रत्यावृत्तिं विनाऽनुपपद्यमाना स्थानिवद्भावनिषेधोक्तिरेतन्न्यायज्ञापिका। अनियतश्चायम्। तेन मुनीनामित्यादौ "दीर्घो नाम्यतिसृचतसृषः"॥१।४।४७॥ इति दीर्घे कृते ह्रस्वस्य नाशेऽपि ह्रस्वजो नाम् न नष्टः। अनियतताज्ञप्तिश्चास्य "ह्रादर्हस्वरस्यानु नवा"॥१।३।३१॥ इति सूत्रे अनुग्रहणात्। तथाहि। अन्वित्यस्याभावे किल प्रोर्णुनावेत्यत्र प्रथममन्तरङ्गत्वाद्ूर्णुधातोर्नस्य द्वैरूप्ये कृते पश्चात्परोक्षाहेतुकत्वेन बहिरङ्गं द्विर्वचनं स्यात्तथाच प्रोर्णुन्नावेत्यनिष्टं रूपं स्यादित्यतोऽनुग्रहणं कृतम्। यदि चायं न्यायो नियत एव

स्यात्तदा रेफानन्तर्यजं नस्य द्वैरूप्यं कृतमपि द्विर्वचनकरणे रेफस्य णुव्यवधानभवनेन एतन्न्यायान्निवर्त्तेत एवेति कुतोऽनिष्टरूपापत्तिभियाऽनुग्रहणं कुर्यात् ॥२९॥

## सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ॥३०॥

समीचीनं नि नितरां योजनं सन्नियोगः सहोक्तिरित्यर्थः। शिष्टान्युक्तानि । अपायोऽभावः । यत्र सन्नियोगेन द्वे कार्ये उक्ते स्यातां तत्रैकस्य कार्यस्याभावेऽपरमपि कार्यं न भवति । लोके युग्मजभ्रात्रादीनामेकस्याभावे इतरस्य भावोऽपि दृश्यते, लक्षणे तु तथा निषेधार्थोऽयं न्यायः। अभवनं च द्विधा। भूत्वा निवर्त्तनं, मूलतोऽप्यभवनं च । तत्राद्यं यथा । पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः; अत्र "देवता"॥६।२।१०१॥ इत्यणि, "द्विगोरनपत्ये यस्वरादेर्लुबद्विः"॥६।१।२४॥ इति तल्लुपि "ङ्यादेर्गौणस्य-"॥२।४।९५॥ इति ङीनिवृत्तौ "वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः"॥२।४।६२॥ इत्यनेन ङीसन्नियोगशिष्ट आनपि निवृत्तः । द्वितीयं यथा । एतान् गाः पश्येत्यत्र गोरोतः शसोऽता सह "आ अम्शसोऽता"॥१।४।७५॥ इत्यात्वे कृते शसोऽकारस्याभावात्, "शसोऽता सश्च नः पुंसि" ॥१।४।४९॥ इति दीर्घस्याभवनात्तेनैव सूत्रेण दीर्घसन्नियोगे उक्तं नत्वमपि नाभूत्। उद्द्योतकं त्वस्य आन्निवर्त्तनाय नत्वनिषेधाय च यत्नाकरणम्। तथाहि। पञ्चेन्द्र इत्यत्र तावद् ङ्य इव आनोऽपि निवृत्तिर्दृश्यते। नच आनो निवृत्तिः क्वापि सूत्रे विहिता, ततो ज्ञायते ङीनिवृत्तावेतन्न्यायबलात्साऽपि जातेति । तथा एतान् गा इत्यत्र गोशब्दस्य "शसोऽता सश्च-"॥१।४।४९॥ इत्यनेन दीर्घो यन्नाभूत्तत्र हेतुर्दृश्यते । "आ अम्शसोऽता"॥१।४।७५॥ इत्यात्वे कृते सति शसोऽकारोनास्ति येन सह दीर्घः क्रियते इत्येवं रूपः । नत्वाभवनस्य तु हेतुः कोऽपि न दृश्यते प्रत्युत तद्भवनस्यैव हेतुर्दृश्यते पुल्लिङ्गत्वस्य सद्भावात् । तत एकान्तप्राप्तमपि नत्वं निषेद्धुं यद्यत्नो न कृतस्तज्ज्ञायते दीर्घस्याभवने एतन्न्यायबलान्नत्वमपि न भावीत्याशयैव। अनेन च न्यायेन यदृच्छयाऽन्यतरस्याभावे इतरदपि निवर्त्तेत इति प्रसक्ते सति गौणस्य निवृत्तौ मुख्यस्य निवृत्तिरिति पक्षस्योत्तरेण निषेत्स्यमानत्वादस्यानैयत्यम् ॥ ३० ॥

## नान्वाचीयमाननिवृत्तौ प्रधानस्य ॥३१॥

अनु पश्चादप्राधान्येनेत्यर्थः। आचीयमानस्य मील्यमानस्य कार्यस्याभावे प्राधान्येन विहितस्य कार्यस्याभावो न स्यात्। किन्तु मुख्यस्याभावे गौणस्याप्यभाव इत्येव स्यात्। पूर्वेण यदृच्छायां प्राप्तायां नियमार्थोऽयं न्यायः। यथा बुद्धीः, धेनूः; अत्र पुंस्त्वाभावात् "शसोऽता-"॥१।४।४९॥ इत्यनेन शसः सस्य नत्वाभावेऽपि प्रधानतयोक्तो दीर्घः स्यादेव। उद्धोषकं त्वस्य "शसोऽता सश्च-"॥१।४।४९॥ इति सूत्रे नत्वविधेः सश्च न इत्यन्वाचयार्थेन चेन निर्देशः। यतो गौणत्वेन समुच्चयस्तावदन्वाचय उच्यते। गौणत्वस्य चैतावानेव विशेषो यद्गौणस्य निवृत्तौ मुख्यं न निवर्त्तेत इति। अनियमस्त्वस्य न प्रतिभासते ॥ ३१ ॥

## निरनुबन्धग्रहणे न सानुबन्धकस्य ॥३२॥

कार्यं स्यादितीहोत्तरत्र च शेषः। निरनुबन्धं कञ्चन शब्दं सूत्रे उच्चार्य यत्कार्यं विहितं तत्कार्यं तस्य शब्दस्य निरनुबन्धस्य ग्रहणे सम्भवति सति सानुबन्धकस्य न स्यात्। अविशेषोक्तयोभयोर्ग्रहणे प्राप्ते तदपवादोऽयं न्यायः। यथा "येऽवर्णे"॥३।२।१००॥ इत्यत्र "तस्मै हिते"॥७।१।३५॥ इत्यादिविहिते निरनुबन्धे एव यप्रत्यये नासिकाया नसादेशः स्याद्यथा नासिकायै हितं नस्यं घृतम्। सानुबन्धे तु यप्रत्यये ञ्यादिरूपे न स्यात्, यथा नासिकाऽत्रास्ति "सुपन्थ्यादेर्ञ्यः"॥६।२।८४॥ इति ञ्ये नासिक्यं नगरम्। पोषकं त्वस्य "न यि तद्धिते"॥२।१।६५॥ इत्यत्र ये इत्यकरणम्। तथाहि। य् इति व्यञ्जनमात्रोपादाने तावत्तादृशस्य कस्यापि प्रत्ययस्यासम्भवादेतन्न्यायाप्रवृत्तेर्निरनुबन्धसानुबन्धयोर्ग्रहणं कर्त्तुं शक्यते। अकारसहितयोपादाने तु तादृशस्य निरनुबन्धयप्रत्ययस्य सम्भवात्सानुबन्धस्य यादेः प्रत्ययस्य ग्रहणमेतन्न्यायात्कर्तुं न शक्यते। अत एतन्न्यायारेकया सानुबन्धस्यापि यस्य ग्रहणार्थं ये इति न कृतम्। ननु सानुबन्धे यप्रत्यये "न यि तद्धिते"॥२।१।६५॥ इत्यस्य प्रवृत्तिरेव क्वास्ति। यदर्थं तत्र ये इत्यनिर्दिश्य यीति निर्दिष्टम्। उच्यते। धुरं वहतीति "धुरो यैयण्"॥७।१।३॥ इति यप्रत्यये धुर्य इत्यत्र "भ्वादेर्नामिन-"॥२।१।६३॥ इति प्राप्तस्य दीर्घत्वस्य

निषेधस्तावत् "न यि तद्धिते"॥२।१।६५॥ इत्यनेन क्रियते । केचिच्च धुर्यशब्दस्थं यप्रत्ययं टितामिच्छन्ति तन्मतेऽपि धुर्य इत्यत्र दीर्घत्वनिषेधो "न यि तद्धिते"॥२। १।६५॥ इत्यनेनैव स्यादित्यतः सानुबन्धेऽपि यप्रत्यये "न यि तद्धिते"॥२।१।६५॥ इत्यस्य प्रवृत्तिः स्फुटैव; टित्त्वस्य किं फलमिति चेत् । उच्यते । स्त्रीत्वाविवक्षायां धुर्यशब्दस्थयप्रत्ययस्य टित्त्वात् ङ्यां "न यि-"॥२।१।६५॥ इति दीर्घनिषेधे ततो "व्यञ्जनात्तद्धितस्य"॥२।४।८८॥ इति यलोपे धुरी इतिप्रयोगस्तन्मते फलं, तदपि च मतं सूरेः सम्मतमेव । अदृढश्चायम् । निरनुबन्धग्रहणे सामान्येन ग्रहणमित्यपि न्यायसद्भावात् ॥ ३२ ॥

## एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ॥ ३३ ॥

सूत्रोक्तस्यैकानुबन्धस्य शब्दस्य ग्रहणे सम्भवति सति तत्सूत्रकार्यं द्व्यनुबन्धकस्योपलक्षणत्वात् त्र्याद्यनुबन्धकस्य च न स्यात् । सूत्रोक्ते एकानुबन्धे शब्दे योऽनुबन्धोऽस्ति तस्यानुबन्धस्य द्व्याद्यनुबन्धकेऽपि सद्भावात् द्व्याद्यनुबन्धकस्यापि ग्रहणे प्राप्ते प्रतिषेधार्थोऽयं न्यायः । यथा "य्यक्ये"॥१।२।२५॥ इत्यत्र एकानुबन्धस्य क्यस्य वर्जनाद् द्व्यनुबन्धके क्यनि क्यङि चावावौ स्यातामेव । यथा गव्यति, गव्यते, नाव्यति, नाव्यते । प्रपञ्चकं चास्य "दीर्घश्च्वियङ्यक्क्येषु च"॥४।३।१०८॥ इत्यत्र क्येष्विति बहुवचनम् । इदं हि क्यक्यन्क्यङ्ष्क्यङामविशेषेण ग्रहणार्थं न्यस्तम् । यदि चायं न्यायो न स्यात्तदा जातिविवक्षायामेकवचनेनापि सर्वेषां ग्रहणं सिध्यतीति किमर्थं बहुवचनयत्नः क्रियेत । यत्तु कृतस्तदेतन्न्यायाशङ्कयैव । अस्य चाविस्रम्भात् "आपो ङितां यै यास् यास् याम्"॥१।४।१७॥ इत्यत्र आप इव डापोऽपि ग्रहः; तेन मालायै इत्यत्रवत् सीमन्शब्दात् "ताभ्यां वाऽऽप् ङित्" ॥२।४।१५॥ इति डापि सीमायै इत्यत्रापि "आपो ङिताम्-"॥१।४।१७॥ इत्यनेन यैः सिद्धः ॥३३ ॥

## नानुबन्धकृतान्यसारूप्यानेकस्वरत्वानेकवर्णत्वानि ॥३४॥

असारूप्यं मिथोविसदृशरूपत्वं, तदनेकस्वरत्वमनेकवर्णत्वं चानुबन्धवशान्न स्युः । लक्षणे क्वचिदपि निषिद्धत्वाभावात्प्राप्तानामसारूप्यादीनां प्रतिषेधार्थोऽयं

न्यायः। तत्रासारूप्यं यथा। अणो डेनासरूपत्वं नास्तीत्यतो गोद इत्यत्र "आतो डोऽह्वावामः"॥५।१।७६॥ इति डविषये "कर्मणोऽण्"॥५।१।७२॥ इत्यण् "असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः"॥५।१।१६॥ इत्यनेनाननुमतत्वान्न स्यात्। अणि हि गोदाय इत्यनिष्टं रूपं स्यात्। अयं भावः। अपवादप्रत्ययेनोत्सर्गप्रत्ययस्यैकान्तेन बाधे प्राप्ते तावत् "असरूपोऽपवादे-"॥५।१।१६॥ इति सूत्रं कृतम्। अस्यार्थः। "आतुमोऽत्यादिः कृत्"॥५।१।१॥ इत्यतः प्रारब्धे कृत्प्रत्ययाधिकारे क्तेः प्राग् ये प्रत्यया वक्ष्यन्ते तेष्वपवादप्रत्ययस्य विषये उत्सर्गप्रत्यय एकान्ततो बाध्यते न, किन्तु विकल्पेन स्यादेव; यदि सोऽपवादप्रत्ययेन सहासदृशरूपः स्यादिति। यदि पुनरुत्सर्गप्रत्ययोऽपवादप्रत्ययेन सह सदृशरूपः स्यात्तदा सोपवादप्रत्ययेन बाध्यत एवेति च सामर्थ्याल्लभ्यते। इह चाण् उत्सर्गो डश्चापवादस्ततो डविषये अणप्यभविष्यद्यद्यनुबन्धकृतमसदृशरूपत्वमण्डयोरभविष्यत्, तत्तु नास्तीत्यतो डेनाण् बाधित एवेति। विस्तारकं त्वत्र "कृवृषिमृजिशंसिगुहिदुहिजपो वा"॥५।१।४२॥ इत्यनेन क्यपो विकल्पनम्। तद्धि पक्षे "ऋवर्णव्यञ्जनाद् घ्यण्"॥५।१।१७॥ इत्यौत्सर्गिकघ्यणर्थम्। स च घ्यण् एतन्न्यायाभावेऽनुबन्धेन क्यपोऽसरूपत्वात् "असरूपोऽपवादे-"॥५।१।१६॥ इत्यनेन सिद्ध एवेति कुतः पक्षे घ्यणर्थं क्यप्विकल्पनं कुर्यात्; यत्तु कृतं तदेतन्न्यायाद् घ्यण्क्यपोरसारूप्यं नास्तीत्यतोऽपवादेन क्यपा घ्यण् बाधिष्यते तथा च घ्यण् नायास्यति; ततश्च विकल्पोक्तिः क्रियते यथा पक्षे घ्यणप्यायातीति बुद्ध्यैव॥ अनेकस्वरत्वं यथा। डुपचींष् इति धातुपाठे पठितस्यापि पच्धातोरनुबन्धवशादनेकस्वरत्वाभावात्पपाचेत्यत्र परोक्षाया "धातोरनेकस्वरात्-"॥३।४।४६॥ इत्याम् न। स्मारकं त्वत्र "निन्दहिंसक्लिशखादविनाशिव्याभाषासूयानेकस्वरात्"॥५।२।६८॥ इति सूत्रे निन्दादिग्रहणम्। यदि ह्यनुबन्धेनानेकस्वरत्वं स्यात्तदा निन्दादयः सर्वेऽप्यनेकस्वरा एव; णिदु कुत्सायां हिसु हिंसायामित्यादिरीत्या धातुपाठे पाठात्। ततश्चानेकस्वरग्रहणेनैव गृहीतत्वान्न ते पृथगुच्येरन्। यत्तूक्तास्तज्ज्ञायते अनुबन्धवशेनानेकस्वरत्वाभवनान्निन्दादय एकस्वरा एवेति॥ अनेकवर्णत्वं यथा। अनुबन्धवशादनेकवर्णत्वाभावात् "वन्याङ् पञ्चमस्य"॥४।२।६५॥ इत्याङादेशस्य ङित्त्वेन

वर्णद्वयभवनेऽप्यनेकवर्णत्वाभावाद् धुणि भ्रमणे वन भक्तावित्याभ्यां "मन्वन्क्वनिप्-विच् क्वचित्"॥५।१।१४७॥ इत्यनेन वनि ध्वावा, वावा इत्यत्र "षष्ठ्याऽन्त्यस्य"॥७।४।१०६॥इति परिभाषया पञ्चममात्रस्यैव आङादेशो न तु "अनेकवर्णः सर्वस्य" ॥७।४।१०७॥ इति परिभाषया पञ्चमान्तस्य सर्वस्य धातोः। यदि त्वाङोऽनेकवर्णत्वमभविष्यत्तदा "अनेकवर्णः सर्वस्य"॥७।४।१०७॥ इति वचनादखण्डस्य धातोरयमादेशोऽभविष्यत् । ज्ञापकं त्वत्र करीषस्येव गन्धोऽस्य "वोपमानात्"॥७।३।१४७॥ इति इसमासान्ते, करीषगन्धिः कश्चित्तस्यापत्यं पौत्रादि स्त्री "ङसोऽपत्ये" ॥६।१।२८॥ इत्यणि, "वृद्धिः स्वरेष्वादेः-"॥७।४।१॥ इति वृद्धौ, "अवर्णेवर्णस्य" ॥७।४।६८॥ इति इलोपे, "अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्तस्य ष्यः" ॥२।४।७८॥ इत्यनेनाणः ष्यादेशे, "आत्"॥२।४।१८॥ इति आपि, कारीषगन्ध्या; तस्याः पुत्रः कारीषगन्धीपुत्र इत्यादौ ष्याया ईवादेशविधायके "ष्यापुत्रपत्योः केवलयोरीच् तत्पुरुषे"॥२।४।८३॥ इति सूत्रे ष्यायाः स्थानित्वाद् "भिस ऐस्" ॥१।४।२॥ इत्यादिवत् ष्याया ईचिति भेदनिर्देशे युक्तेऽपि ष्या इत्यस्य सम्पूर्णस्य ईच्रूप आदेशः स्यादित्येवमीचः सर्वादेशत्वार्थं ष्यैव ईच् स्यादित्यभेदनिर्देशस्तथाहि । यद्यनुबन्धेनानेकवर्णत्वं स्यात्तदा ईचोऽनेकवर्णत्वात् ष्याया ईच् इति भेदनिर्देशेऽपि "अनेकवर्णः सर्वस्य"॥७।४।१०७॥ इति परिभाषया ईचः सर्वादेशत्वं सिध्यत्येवेति कुतस्तदर्थमभेदनिर्देशं कुर्यात् । यत्तु कृतस्तदनुबन्धवशादनेकवर्णत्वं न स्यादित्यत एव । आद्यांशे चायं स्याद्वादी, तेन पिताकृत्वा गत इत्यत्र पितृशब्दात् "ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः"॥१।४।८४॥ इत्यनेन यः सेर्डाः कृतः, यश्च द्वितीयाकृत्य क्षेत्रं गत इत्यत्र तीयान्तात् "तीयशम्बबीजात्कृगा कृषौ डाच्"॥७।२।१३५॥ इत्यनेन डाच्प्रत्यय आनीतस्तयोर्डाडाचोरनुबन्धापेक्षया असरूपत्वं जातमेव । तत एव पिताकृत्वेत्यादौ डा इत्येतदन्तस्य "ऊर्याद्यनुकरणच्विडाचश्च गतिः"॥३।१।२॥ इति प्राप्ताया गतिसंज्ञाया अभवनाद् "गतिक्वन्यस्तत्पुरुषः"॥३।१।४२॥ इति समासाभवनेन पूर्वोत्तरपदव्यवस्थाया अभावात् "अनञः क्त्वो यप्"॥३।२।१५४॥ इति क्त्वो यबादेशो नाभूत्। द्वितीयाकृत्येत्यादौ तु डाजन्तस्य "ऊर्यादि-"॥३।१।२॥ इति गतिसंज्ञाभवनाद् "गतिक्वन्य-"

॥३।१।४२॥ इति समासे जाते, पूर्वोत्तरपदव्यवस्थाभवनाद् "अनञः क्त्वः-" ॥३।२।१५४॥ इतिक्त्वोयबादेशोऽभूदेव। शेषांशयोस्तु स्याद्वादिता नाविरस्ति॥३४॥

## समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि ॥३५॥

यथाप्रयोगदर्शनं क्वचिदिति शेषः। समासान्तः, आगमः, संज्ञानिर्दिष्टं, ज्ञापकनिर्दिष्टं, गणनिर्दिष्टं, नञ्निर्दिष्टं च कार्यमित्येतानि षड् यथाप्रयोगदर्शनमनित्यान्यनियतानि। व्याकरणसूत्रैर्विहितान्यपि क्वचिन्न स्युरपि क्वचिच्च यथा व्याकरणसूत्रैर्विहितानि तथैव न स्युः; किन्त्वन्यथापि स्युरित्यर्थः। सर्वं वाक्यं सावधारणमिति न्यायात्समासान्तादीनां नित्यत्वे एव प्राप्ते तन्निषेधार्थोऽयं न्यायः। तत्र समासान्तो यथा। बह्व्य आपो यस्मिन् तद्बह्वपं सरः; अत्र "ऋक्पूः पथ्यपोऽत्"॥७।३।७६॥ इत्यत् समासान्तः। अनित्यत्वाच्च बह्व्य आपो येषु सरस्सु तानि बह्वाम्पि, बह्वम्पि, इत्यादौ "ऋक्पूः-"॥७।३।७६॥ इत्यत् समासान्तः प्राप्तोऽपि न स्यात्। समासान्तानित्यत्वस्य सूचकं तु "ऋक्पूः पथ्यपोऽत्"॥७।३।७६॥ इति निर्देश एव। अत्समासान्ते जाते हि पथ्यपादिति निर्दिश्येत ॥ १ ॥ आगमो यथा। पक्त्वा, पटिता; अत्र पटेः सेट्त्वात् नित्यं प्राप्तोऽपि वेट्। पक्ता, पचिता; आस्कन्तव्यमास्कन्दितव्यमित्यत्र पचिस्कन्द्योरनुस्वारेत्त्वादनिट्त्वेऽपि वेट्। तथा धावेरूदित्त्वाद्वेट्त्वेऽपि गतौ क्तयोर्नित्यमिट्; धावितः, धावितवान्। शुद्धौ तु नेट्; धौतः, धौतवान्। तथा जभेस्तिवि जम्भतीत्यत्र "जभः स्वरे"॥४।४।१००॥ इति नागमः। जञ्भीतीत्यत्र तु न, अनित्यत्वात्। तथा कमेर्णिङि आनशि मागमे, कामयमानः। मागमस्यानित्यत्वादभवने कामयान इत्यपि। आगमानित्यत्वस्य सूचाचणं त्विड्नागममागमविकल्पनादियत्नाकरणम्। तथाहि। पक्त्वा पटितेत्यादि प्रयोगेष्विडागमादीनां विकल्पादि दृश्यते। यच्चैतेषामर्थे विकल्पादिसूत्रं किमपि न कृतं तदेतन्न्यायाशयैव। एतदनुसारेणाग्रेऽपि यत्नाकरणं तस्य ज्ञापकत्वं च भाव्ये ॥ २ ॥ संज्ञानिर्दिष्टं यथा। चकासामासेत्यादौ परोक्षेति संज्ञानिर्दिष्टो "धातोरनेकस्वरात्-"॥३।४।४६॥ इत्याम्। अनित्यत्वाच्च ददरिद्रौ इत्यत्र परोक्षेति संज्ञानिर्दिष्टत्वात् "धातोरनेकस्वरात्-"॥३।४।४६॥ इत्याम् प्राप्तोऽपि न स्यात्। एतत्सूचाचञ्चु तु "आतो णव औः"॥४।२।१२०॥ इत्यत्र

ओकारेणैव पपावित्यादिप्रयोगसिद्धावपि औविधानम् । तद्धि ददरिद्रावित्यस्य सिद्ध्यर्थं कृतम् । अन्यथा "अशित्यस्सन्णकचूणकानटि"॥४।३।७७॥ इत्याकारलोपे ददरिद्रो इति प्राप्तेः । यदि च दरिद्रातेर्णव आम् ऐकान्तिकः स्यात्तदा दरिद्राञ्चकारेत्येव भवनादौत्वस्यानवकाशत्वादौत्वं नाकरिष्यदेव । यत्तु कृतं तदामादेशस्य संज्ञानिर्दिष्टविधित्वेनानित्यत्वाद्यदा औत्वस्यावकाशः सम्भवी तदा ओत्वविधाने ददरिद्रो इति माभूत्किन्तु ददरिद्रौ इत्येव भवतादित्येवमर्थमेव । तदेवमिमं न्यायांशं विनाऽनुपपद्यमानमौत्वस्यावकाशसम्भवमन्तरेणानुपपद्यमानमौत्वविधानमिमं न्यायांशं सूचयति ॥ ३ ॥ ज्ञापकं सौत्रनिर्देशगणपाठादि । तन्निर्दिष्टं यथा । "दशैकादशादिकश्च"॥६।४।३६॥ इति सौत्रनिर्देशेन दशैकादशेति शब्दस्यादन्तत्वसिद्ध्या दशैकादशान् गृह्णातीति स्यात् । सौत्रनिर्देशसिद्धस्यादन्तत्वस्य एतन्न्यायेनानित्यत्वाच्च दशैकादश गृह्णातीत्यप्यबाधितमेव । सूचाचतुरं त्वस्य "पूर्वपदस्थान्नाम्न्यगः॥२।३।६४॥ इत्यत्राग इति । तथाहि । ऋगयनमित्यत्र णत्वनिषेधार्थं तावदग इत्युक्तम् । णत्वनिषेधश्च "शिक्षादेश्चाण्"॥६।३।१४८॥ इति सूत्रोक्ते शिक्षादिगणे ऋगयनमिति नान्तपाठरूपाज्ज्ञापकादपि सिद्ध्यति । परं ज्ञापकनिर्दिष्टस्य णत्वनिषेधस्य एतन्न्यायादनित्यत्वं स्यात्तच्च नेष्टमित्यतस्तस्य नित्यत्त्वार्थमग इत्युक्तम् । अस्यांशस्योदाहरणं सौत्रनिर्देशरूपज्ञापकनिर्दिष्टापेक्षया दर्शितम् । ज्ञापकं तु गणपाठरूपज्ञापकनिर्दिष्टापेक्षया दर्शितम् ॥ ४ ॥ गणनिर्दिष्टं यथा । कुटिता, कुटितुं इत्यादौ "कुटादेर्ङिद्वदञ्णित"॥४।३।१७॥ इति कुटादिगणनिर्दिष्टं ङित्त्वं प्रत्ययस्य जातमित्यतो धातोर्न गुणः । तस्यैवानित्यत्वं यथा । व्यचत् व्याजीकरणे, अस्य थवि, विव्यचिथ; अत्र द्वित्वे सति पूर्वस्य "ज्याव्येव्यधिव्यचिव्यथेरिः"॥४।१।७१॥ इति इत्वे, "कुटादेर्ङिद्वदञ्णित्"॥४।३।१७॥ इति गणनिर्दिष्टत्वेन ङित्त्वस्यानित्यत्वात्थवो ङित्त्वाभवनेन धातोर्यस्य "व्यचोऽनसि"॥४।१।८२॥ इति य्वृत्त । ततश्च विविचिथेति न स्यात् । समर्थकं त्वत्र य्वृन्निषेधार्थं यत्नाकरणम् ॥ ५ ॥ न ञ्निर्दिष्टं यथा । क्रुङ् उ आस्ते क्रुङ्ङ्वास्ते, किम् उ आवपनं किम्वावपनं; अत्र वस्य "अञ्वर्गात्स्वरे वोऽसन्"॥१।२।४०॥ इत्यसत्त्वात्स्वरे परे ङस्य "ह्रस्वा-

न् ङणनो द्वे”॥१।३।२७॥ इति द्वे रूपे जाते, मस्य तु पुरो व्यञ्जनाभावात् “तौ मुम-”॥१।३।१४॥ इत्यनेनानुस्वारानुनासिकौ नाभूताम्। असद्भावस्य नञ्निर्दिष्टत्वेनानित्यत्वात्तु तद् उ अस्य मतं तद्‌व्वस्य मतमित्यादौ “ततोऽस्याः”॥१।३।३४॥ इति वस्य द्वित्वम्। उन्मीलकं त्वत्र “व्याप्तौ स्सात्”॥७।२।१३०॥ इति द्वितीयः सः। अयं ह्यग्निसादित्यादौ षत्वनिषेधज्ञापनार्थः। एतन्न्यायांशाभावे चाऽत्र षत्वस्य प्राप्तिरेव नास्ति; सस्य “वृत्त्यन्तोऽसषे”॥१।१।२५॥ इति सूत्रेण पदादित्वात्। तथाहि। “वृत्त्यन्तोऽसषे”॥१।१।२५॥ इत्यस्य तावदयमर्थः। वृत्त्यन्तः पदसंज्ञो न स्यात् असषे। सस्य षत्वे कर्त्तव्ये तु पदसंज्ञो न स्यादिति न; किन्त्वप्राप्ताऽपि पदसंज्ञा तस्य स्यादेवेति प्रत्युत विधिः। ततः स्सातः प्रत्ययत्वादप्राप्तमपि पदत्वमसषे इत्यंशेन विहितम्। ततश्च सस्य पदादित्वात् षत्वप्राप्तिरेव नास्ति “नाम्यन्तस्था-”॥२।३।१५॥ इति सूत्रेण पदमध्यस्थस्यैव सस्य षत्वविधानादिति कुतस्तन्निषेधज्ञापनाय द्विसकारपाठं कुर्यात्। केवलमसषे इति नञ्निर्दिष्टः पदत्वविधिरनित्यस्तेन कदाचित् स्सातः पदत्वाभवने सः पदादिर्न स्यादपि। ततश्च यदा पदादिर्न स्यात्तदा सस्य पदमध्यस्थत्वसम्भवात् षत्वस्य प्राप्तौ तन्निषेधज्ञापनार्थं द्विसकारपाठः कृतस्तदेवमिमं न्यायांशं विनाऽनुपपद्यमानां षत्वप्राप्तिं विनाऽनुपपद्यमानः षत्वनिषेधज्ञापनार्थो द्विसकारपाठ इमं न्यायांशमुन्मीलयति ॥ ६ ॥ अदृढश्चायं न्यायस्तेन केचिदेव समासान्तादयो अनित्यत्वाद्यथाप्रयोगदर्शनं क्वचिद् भवन्ति क्वचिन्न भवन्ति च। अन्ये तु समासान्तादयः षडपि स्वविषयं प्राप्य स्युरेवेति नित्या एव। तेषां षण्णामप्युदाहरणानि यथा; “इच् युद्धे”॥७।३।७४॥ इति इच् समासान्तः; केशाकेशि इत्यादौ स्यादेव। १। “स्वराच्छौ”॥१।४।६५॥ इति नागमः; कुण्डानि इत्यादौ स्यादेव। २। स्वरसंज्ञानिर्दिष्टम्, “इवर्णादेरस्वे स्वरे-”॥१।२।२१॥ इति यत्वं, दध्यत्रेत्यादौ स्यादेव। ३। “सप्तमी चोर्द्ध्वमौहूर्त्तिके”॥५।४।३०॥ इति सौत्रनिर्देशरूपज्ञापकनिर्दिष्टा उत्तरपदवृद्धिरूर्द्ध्वमौहूर्त्तिकशब्दे स्यादेव। ४। “अजादेः”॥२।४।१६॥ इति सूत्रे अजादिगणनिर्दिष्ट आप्, अजा इत्यादौ स्यादेव। ५। “अनवर्णा नामी”॥१।१।६॥ इति सूत्रे नामिसंज्ञायामवर्णवर्जनं नञ्निर्दिष्टमपि नियतमेवेति ॥ ३५ ॥

## पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥३६॥

पूर्वमुक्तानि बाधकसूत्राणि वक्ष्यमाणबाध्यमध्येऽनन्तरान् विधीन् प्रतिषेधन्ति न तु व्यवहितान्। व्यवहितानामपि प्रतिषेधकत्वे प्राप्तेऽयं न्यायः। यथा "श्लिषः" ॥३।४।५६॥ इति सक् अनन्तरं पुष्याद्यङं बाधते, नतु व्यवहितं भावकर्म्मञि-चम्। तेन आश्लिक्षत्कन्यां चैत्रः; अत्राङ् न स्यात्। आश्लेषि कन्या चैत्रेणे-त्यत्र तु ञिच् स्यादेव। उल्लासकं त्वस्य सक् अङ् ञिच् सूत्राणामेवमुप-न्यासक्रम एव। तथाहि। अङ्ञिचोरपवादस्तावत्सक् तत्राप्यङ् बाधितुमि-ष्टो न तु ञिच्। तथा चाङ्सूत्रादनु सक्सूत्रं चेत् क्रियते तदा बाध्योक्तेरनु बाध-कोक्तिरिति न्यायानपेतः समर्थपक्ष आदृतः स्यात्। अनिष्टो ञिच्बाधोऽपि च मध्येऽपवादाः पूर्वानिति न्यायबलाट्टलति। एवं सत्यपि यद्बाधकोक्तेरनु बाध्यो-क्तिरित्यसमर्थपक्ष आदृतस्तदेतन्न्यायादेवेष्टसिद्धिर्भविष्यतीत्याशयैव। अयं चाप्र-तिष्ठस्तेन "संयोगात्"॥२।१।५२॥ इतीयादेशः शिश्रियुरित्यादौ, "योऽनेकस्वरस्य" ॥२।१।५६॥ इत्यनन्तरसूत्रविहितं यत्वं यथा बाधते; तथा यवक्रियावित्यादौ "क्विब् वृत्तेरसुधियस्तौ"॥२।१।५८॥ इति व्यवहितेनापि सूत्रेण विहितं यत्वं बाधते॥३६॥

## मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ॥ ३७ ॥

वर्त्तमाना इति शेषः। उक्तवक्ष्यमाणबाध्यमध्ये वर्त्तमानानि बाधकसूत्राणि प्राग्विधीन् बाधन्ते नतूत्तरान्। उत्तरेषामपि प्रतिषेधकत्वे प्राप्तेऽयं न्यायः। यथा। "ब्रह्मभ्रूणवृत्रात् क्विप्"॥५।१।१६१॥ इत्यनेन भूतकाले विहितः क्विप् ब्रह्महा इत्यादौ प्रागुक्तान् "कर्मणोऽण्"॥५।१।७२॥ इत्यणं, "ब्रह्मादिभ्यः"॥५।१।८५॥ इति टकं, "हनो णिन्"॥५।१।१६०॥ इति णिनं च बाधते; नतु वक्ष्यमाणं "क्त-क्तवतू"॥५।१।१७४॥ इति क्तवतुम्। तेन भूतेऽर्थे वाच्ये ब्रह्मघातः, ब्रह्मघ्नः, ब्रह्म-घातीति क्रमादण्टक्णिन्रूपाणि न स्युः। ब्रह्महतवानिति क्तवतुरूपं तु स्यादेव। अस्य च स्थापकमीदृक्प्रयोगा एव। नश्वरता त्वस्य न स्मर्यते। एवमुत्तरन्यायत्रयस्यापि वाच्यम् ॥ ३७ ॥

## यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ॥३८॥

उपदेशः कथनं प्रवर्त्तनमित्यर्थः। यस्य सूत्रस्य यत्र प्रवर्त्तने किंचित्फलं नास्ति तत्सूत्रं तत्र बाध्यते इति कोऽर्थः न प्रवर्त्त्यते। लोके निष्फला अपि मेघवृष्ट्यादयो भवन्तो दृश्यन्ते, लक्षणे तु तथा निषेधार्थोऽयं न्यायः। यथा "तनित्यजियजिभ्यो डद्" (उणादि-८९५) इत्यौणादिके डद्प्रत्यये; तद्, त्यद्, यद् इति शब्दाः सिद्धाः सन्ति। अत्र दस्य पुनः "धुटस्तृतीयः"॥२।१।७६॥ इति दविधिः प्राप्नोति परं निष्फल इत्यतो न क्रियते। तथा संचस्कारेत्यादौ स्कृ स्कृ इति द्वित्वे, "अघोषे शिटः"॥४।१।४५॥ इत्याद्यस्सटो लुकि, तत्स्थाने पुनः पुनः स्सट् तल्लुक् च प्राप्नुतः, परं तौ न क्रियेते, व्यर्थत्वात्। अस्योन्मेषकं त्वीदृग्रूपसिद्धिरेव। निष्फले हि कृतस्य करणे रूपाणि कदापि न सिध्येयुः, क्रियाऽनुपरमप्रसङ्गात्। एवं च यत्र क्वापि क्रियाऽनुपरमः प्रसज्यते तत्रैतन्न्यायप्रवृत्तिरिति लक्ष्यते॥३८॥

## यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते ॥३९॥

निमित्तं प्रयोजनं फलमिति यावत्। यथा तच्चारु इत्यादौ दस्य तृतीयविधिः क्रियत एव नतु बाध्यते, निमित्तसद्भावात्। तथाहि। "धुटस्तृतीयः" ॥२।१।७६॥ इत्यसदधिकारविहितस्य दत्वस्य तावत् "चजः कगम्"॥२।१।८६॥ इति परकार्ये कर्त्तव्ये असत्त्वात्तत्स्थाने "तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ"॥१।३।६०॥ इति कृतं जत्वमप्यसदभूत्। ततस्तत्स्थाने "अघोषे प्रथमोऽशिटः"॥१।३।५०॥ इति कृतं चत्वमप्यसदभूत्। तथा च गत्वकत्वे नाभूताम्। अस्योज्जीवकं त्वीदृग्रूपसिद्धिरेव। तथाहि। यदि तावदयं न्यायो न स्यात्तदा दस्य दत्वाकरणे तदसत्त्वाभवनेन गत्वकत्वकरणस्य निवारयितुमशक्यत्वात्तक्चारु इत्यादिरूपं स्यान्नतु तच्चारु इत्यादि ॥ ३९ ॥

## येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः॥४०॥

नाप्राप्ते इत्यत्र भावे क्तस्ततो येनेति कर्तुस्तृतीया। येन विधिना नाऽप्राप्तं किन्तु प्राप्तमेव तस्मिन् सति यस्यैकान्तेन प्राप्तौ सत्यामित्यर्थः, यो बाधकविधिरारभ्यते स तस्यैवैकान्तेन प्राप्तिमतो बाध्यविधेर्बाधकः स्यात्। यस्तु क्वचित् प्राप्नोति क्वचिच्च न, तस्य प्राप्त्यप्राप्तिमतो बाध्यविधेर्बाधको न स्या-

दित्यर्थः । प्राप्त्यप्राप्तिमतोऽपि विधेर्बाधकत्वे प्राप्तेऽयं न्यायः । यथा विद्वत्कुलं, विद्वान्, हे विद्वन् इत्यादौ तावत् सर्वत्र सस्य "सो रुः"॥२।१।७२॥ इति रुत्वं प्राप्नोत्येव । स्वनुडुत्कुलम्, अनड्वान्, हे अनड्वन् इत्यादौ च सर्वत्र हस्य "हो धुट्पदान्ते"॥२।१।८२॥ इति ढत्वं प्राप्नोत्येव। "पदस्य"॥२।१।७९॥ इति संयोगान्तलोपस्तु विद्वान्, हे विद्वन्, अनड्वान्, हे अनड्वन् इत्यादौ प्राप्नोति, नागमस्यागमनेन संयोगभवनात्। विद्वत्कुलं, स्वनडुत्कुलमित्यादौ तु न प्राप्नोति। घुटोऽभावान्नागमानागमनेन संयोगाभवनात्। एवं सति च रुत्वढत्वयोः, संयोगान्तलोपस्य च बाधनार्थं "स्रंस्ध्वंस्क्वस्सनडुहो दः"॥२।१।६८॥ इति दत्वसूत्रं प्रारब्धम्। परं तद्दत्वसूत्रमेकान्तप्राप्तिमती रुत्वढत्वे एव बाधितुं शक्नोत्येतन्न्यायात्, नतु प्राप्त्यप्राप्तिमन्तं संयोगान्तलोपम् । तेन विद्वत्कुलम्, स्वनडुत्कुलमित्यादौ क्रमात् रुत्वं ढत्वं च बाधित्वा दत्वमेव जातम्। विद्वान्, हे विद्वन्, अनड्वान्, हे अनड्वन् इत्यादौ तु दत्वसूत्रेण संयोगान्तलोपो बाधितुं न शेके; तेन संयोगान्तलोप एवाभूत् । व्यञ्जकं त्वस्य क्वसः सिति विशेषणम् । तथाहि। "स्रंस्ध्वंस्-"॥२।१।६८॥ इत्यनेन क्वसः सो दविधिस्तावद्यथा सो रुत्वं बाधते तथा संयोगान्तलोपमपि यदि बाधत एव तदा क्वसः सन्तत्वं न क्वापि व्यभिचरतीति किमर्थं सिति विशेषणं क्रियते । यत्तु कृतं तज्ज्ञायते दविधिरेतन्न्यायात् संयोगान्तलोपं प्राप्ताप्राप्तत्वान्न बाधत इति । ततो यत्र संयोगान्तलोपः स्यात्तत्र क्वसोः सन्तत्वं व्यभिचरतीत्यतः सिति विशेषणं सार्थकम् । तेन च विद्वान्, हे विद्वन् इत्यादौ नकारस्य प्राप्नुवतो दविधेरभवनं सिद्धम्, यदि तु क्वसः सिति विशेषणं कृतं नाभविष्यत्तदा विद्वान्, हे विद्वन्, इत्यादावपि क्वस्वन्तत्वसद्भावादत्रापि नकारस्य दत्वं प्रासंक्ष्यदेव॥ अतः परमेतद्वक्ष्यस्कारोपान्त्यन्यायावधि सर्वे बलाबलोक्तिन्याया वक्ष्यन्ते ॥ ४० ॥

## बलवन्नित्यमनित्यात् ॥४१॥

यद्यस्मिन् कृते अकृतेऽपि च प्राप्नोति तत्तदपेक्षया नित्यम् । यत्तु अकृते प्राप्नोति नतु कृते तदनित्यम् । तयोर्युगपत्प्राप्तौ नित्यं कार्यमनित्याद्बलवदिति कोऽर्थः प्रथमं प्रवर्त्तते। यथा अकार्ष्टेत्यादौ,"धुड्ह्रस्वाल्लुगनिटस्तथोः"॥४।३।७०॥

इति सिज्लुकः प्रथमं नित्यत्वात् "सिचि परस्मै समानस्याङिति"॥४।३।४४॥ इति वृद्धिः स्यात्, पश्चाच्च ह्रस्वाभावान्न सिज्लुक्। अभिव्यञ्जकं त्वस्य कलिहलिशब्दयोर्णौ प्रथमत एव "अन्त्यस्वरादेः"॥७।४।४३॥ इत्यनेन इकाररूपस्यान्त्यस्वरस्य लुग्भवतु; अन्त्यस्वरादिलुचो नित्यत्वादेतन्न्यायेन बलवत्वात्। परं पटुलघुशुचिरुच्यादिशब्दानां णावनित्यामप्यन्त्यस्वरस्य वृद्धिं कृत्वैव नित्याऽप्यन्त्यस्वरादि लुक्कार्या नत्वन्यथेत्यस्यार्थस्य व्यवस्थापनाय "नामिनोऽकलिहलेः"॥४।३।५१॥ इत्यत्र कलिहलिवर्जनोपायकरणम्। तद्धि कलिहल्योरिव पटुलघ्वादिशब्देष्वपि नित्यत्वादेतन्न्यायेन बलवत्वाण्णावन्त्यस्वरादिलुगेव या प्रथमं प्राप्नोति सैव प्रथममेव मा प्रवर्त्ततामित्येतदर्थम्। अयं भावः। कलिहल्योः कलिं हलिं वा आख्यदिति ङपरे णौ "असमानलोपे सन्वल्लघुनि ङे"॥४।१।६३॥ "लघोर्दीर्घोऽस्वरादेः"॥४।१।६४॥ इत्याभ्यां प्राप्तौ सन्वद्भावदीर्घौ न दृश्येते। यथा अचकलत्, अजहलदिति। तच्च सुसम्भवमेव। नित्यत्वादेतन्न्यायेन बलवत्त्वात्प्रथममेवान्त्यस्वरस्य इकारस्य लुकि समानलोपित्वभवनात्। यत्तु पटुलघ्वादिशब्दानां पटुं लघुं शुचिं रुचिं वा आख्यदिति ङपरे णौ "असमानलोपे-"॥४।१।६३॥ इत्यादिसूत्रैः सन्वद्भावादि दृश्यते। यथा अपीपटत्, अलीलघत्, अशूशुचत्, अरूरुचदित्यादि। तद् दुःसम्भवं दृश्यते। तत्रापि "अन्त्यस्वरादेः"॥७।४।४३॥ इत्यस्य नित्यत्वादेतन्न्यायेन बलवत्त्वादन्त्यस्वरस्य उकारेकाररूपस्य लुकि समानलोपित्वापातात्। ततोऽपीपटदित्यादौ समानलोपित्वानापातार्थं कश्चिदुपायः कृतो विलोक्यते इति विचिन्त्य सूरिभिः "नामिनोऽकलि-"॥४।३।५१॥ इति वृद्धिसूत्रे कलिहलिवर्जनं कृतम्। तेन चैवं व्यवस्थापितम्। कलिहलिवर्जानां सर्वेषां पटुलघ्वादिनाम्यन्तशब्दानां णौ नित्यामप्यन्त्यस्वरादिलुचं बाधित्वा प्रथमं वृद्धिरेव क्रियते पश्चात्तु अन्त्यस्वरादिलुक्। कलिहल्योस्तु प्रथमतोऽप्येतन्न्यायबलप्राप्तोऽन्त्यस्वरादिलुगेव भवतु न कश्चिन्निषेद्धेति। तथा च पटूादीनां प्रथमतो वृद्धिमेव कृत्वा तदनु औकारैकाररूपान्त्यस्वरलुक्करणेन समानलोपित्वाभवनात्सन्वद्भावादिसिद्ध्या अपीपटदित्यादि सुखेन सिद्धम्। तदेवं पट्वादीनां प्रथमतो वृद्धेरेव सम्पादनार्थं यत्कलिहलिवर्जनोपायः सूरिभिः कृतस्तदेवंकरणाभावे नित्यत्वा-

देतन्न्यायेन बलवत्त्वादन्त्यस्वरादिलुक एव सर्वत्र प्रथमत एव प्रवृत्ति भवन्तीमाशङ्क्यतन्निवारणार्थमेव । यदित्वेष न्यायो नाभविष्यत्तदाऽन्त्यस्वरादिलुचो बलवत्त्वाशङ्काया अप्यभावान्नानिष्टार्थेति न्यायेन यथाशिष्टप्रयोगं सर्वाण्यपि रूपाण्युपायं विनाऽप्यसाधयिष्यन्त । कथम् । अचकलदित्यादीनि कलिहल्योः प्रथमत एवान्त्यस्वरादिलुक्करणेनासाधयिष्यन्त; अपीपटदित्यादीनि तु पट्वादीनां प्रथमतो वृद्धिं कृत्वा पश्चादन्त्यस्वरादिलुक्करणेनेति । ततश्च यदेतन्न्यायाशङ्कितैः सूरिभिः पट्वादिषु प्रथमं वृद्धेर्व्यवस्थापनार्थं कलिहलिवर्जनयत्नः कृतः स एतन्न्यायज्ञापक इति व्यक्तमेव । यायावरश्चायम् । नित्यादन्तरङ्गमित्याद्यैर्बाध्यमानत्वात् ॥ ४१ ॥

## अन्तरङ्गं बहिरङ्गात् ॥४२॥

बलवदिति अत्रोत्तरत्र च सम्बन्धः । व्याख्या तु प्राग्वत् । यथा त इन्द्रं वृक्ष इन्द्रमित्यत्र क्रमेण जस इत्वे ङौ च कृते "समानानां तेन-"॥१।२।१॥ इति इन्द्रेकारेण सह जसो ङेश्चेकारस्य प्राप्तात्पदद्वयापेक्षत्वेन बहिरङ्गाद्दीर्घात्प्रथमम् "अवर्णस्येवर्णादिना-"॥१।२।६॥ इत्येत्त्वमेव स्यात् । एकपदापेक्षत्वेनान्तरङ्गत्वात् । स्फुटीकारकं त्वस्य "वृत्त्यन्तोऽसषे"॥१।१।२५॥ इति निर्देशस्तथाहि । अत्र तावद् वृत्त्यन्तशब्दपुरःस्थस्य रोः उत्वे कृते सति उभयं प्राप्नोति; पूर्वेण सह उत्वं, पुरःस्थेन असषे इत्यस्य अकारेण सह वत्वं च । तत्र पदद्वयाश्रितत्वाद्बहिरङ्गं वत्वं बाधित्वा एकपदापेक्षत्वादन्तरङ्गमोत्वं यन्निर्दिष्टं तदेतन्न्यायबलाशयैव । निर्बलश्चायम् । वार्णात्प्राकृतं, लुबन्तरङ्गेभ्यः, अन्तरङ्गाच्चानवकाशमित्याद्यैर्निरुध्यमानत्वात् ॥ ४२ ॥

## निरवकाशं सावकाशात् ॥ ४३ ॥

निर्सहशब्दावत्राल्पबह्वर्थौ; निर्धनः सधन इत्यादिवत् । ततश्चाल्पविषयं कार्यं बहुविषयात्कार्याद्बलवदिति कोऽर्थः तद्बाधित्वा स्वयं प्रवर्त्तते । यथा "एद्बहुस्भोसि"॥१।४।४॥ इत्यस्य भिसि भ्यसि च विषयः । "भिस ऐस्"॥१।४।२॥ इत्यस्य तु भिस्येव । ततो वृक्षैः इत्यादौ परमपि "एद्बहुस्भोसि"॥१।४।४॥ इति

बाधित्वा निरवकाशत्वाद् "भिस ऐस्"॥१।४।२॥ इत्येव प्रवर्त्तते। "एद्बहुस्भ्-"॥१।४।४॥ इत्यस्य एभिः, एभ्य इत्यादौ सावकाशत्वात्। स्पष्टीकारकं त्वस्य "भिस ऐस्"॥१।४।२॥ इति सूत्रमेव। तथाहि। एतन्न्यायाभावेन यदि वृक्षैः इत्यादावपि "एद्बहुस्भ्-"॥१।४।४॥ इत्येत्त्वमेव स्यात्तदा "भिस ऐस्"॥१।४।२॥ इति सूत्रं कुर्यादेव न। तस्य प्रवृत्त्यवकाशाभावात्। यत्तु कृतं तदेतन्न्यायेन "भिस ऐस्"॥१।४।२॥ इत्यस्य बलवत्त्वं, तत एव वृक्षैरित्यादावस्य सूत्रस्य प्रवृत्तिं च सम्भाव्यैव; अन्यथा तत्करणनैरर्थक्यात्। अबलता त्वस्य नास्ति ॥ ४३ ॥

## वार्णात्प्राकृतम् ॥४४॥

प्रकृतिरत्र धातुरूपा ग्राह्या न नामरूपा; तत्कार्याणां वार्णेष्वेवान्तर्भावात्। वर्णसम्बन्धिनः, कोऽर्थः, वर्णमुच्चार्य विहितात् कार्यात्प्रकृतिमुच्चार्य यत्कार्यमुक्तं तद्बलवत्। अन्तरङ्गं बहिरङ्गादित्यस्यापवादोऽयम्। यथा ऊवतुः, ऊवुः इत्यत्र वेंग् तन्तुसन्ताने इत्यस्य "यजादिवचेः किति"॥४।१।७९॥ इति य्वृति द्वित्वे च उकारद्वयावस्थाने सति वेंग् धातुसम्बन्ध्युकारद्वयाश्रिततया प्रकृत्याश्रितत्वात् पूर्वव्यवस्थितत्वाच्चान्तरङ्गं "समानानां तेन-"॥१।२।१॥ इति दीर्घत्वं प्रथमं प्राप्नोति। पश्चात्प्रत्ययाकारनिमित्तकतया प्रत्ययाश्रितत्वात् द्वितीयोकारसम्बद्धतया बहिर्व्यवस्थितत्वाच्च बहिरङ्गो "धातोरिवर्ण-"॥२।१।५०॥ इत्युव् न प्राप्नोति, अन्तरङ्गं बहिरङ्गादिति न्यायात्। तथाकरणे च उवतुः, उवुः इत्यनिष्टं रूपं प्रसज्यते। परमन्तरङ्गं बहिरङ्गादिति न्यायं बाधित्वा एतन्न्यायाद्बहिरङ्गोऽपि "धातोरिवर्ण-"॥२।१।५०॥ इत्युव् प्रथमं स्यात्; धातुरूपप्रकृतेर्नाम गृहीत्वा विहितत्वेन प्राकृतत्वात्। पश्चाच्चान्तरङ्गमपि "समानानां तेन-"॥१।२।१॥ इति दीर्घत्वम्; समानरूपं वर्णमुच्चार्य विहितत्वेन वार्णत्वात्। व्यञ्जकं त्वस्यान्तरङ्गं बहिरङ्गादिति न्यायप्रसक्तानामुवतुः, उवुः इति रूपाणां निषेधनार्थं यत्नाकरणम्। दुर्बलश्चायम्। उत्तरन्यायस्यैतदपवादत्वात् ॥ ४४ ॥

## य्वृद् य्वृदाश्रयं च ॥४५॥

य्वृद् य्वृदाश्रितं च कार्यं वार्णमपि प्राकृताद्बलवत्। यथा उपश्वेः क्विव उप-

शूयेत्यत्र त्तवो यपि, "ह्रस्वस्य तः पित्कृति"॥४।४।११३॥ इति तागमं ह्रस्वान्तप्रकृत्याश्रितत्वात् प्राकृतमपि बाधित्वा सस्वरान्तस्थारूपवर्णाश्रितत्वाद्वार्णमपि "यजादिवचेः-"॥४।१।७९॥ इति य्वृदभूत् । तदन्वपि च प्राकृतमपि तागमं बाधित्वा य्वृतो "दीर्घमवोऽन्त्यम्"॥४।१।१०३॥ इति दीर्घ एवाभूत्; य्वृदाश्रितकार्यरूपत्वात्तस्य । प्रकटीकारकं त्वस्येदृक्प्रयोगा एव । अबलिष्ठता त्वस्य न स्पष्टतमेति ॥ ४५ ॥

## उपपदविभक्तेः कारकविभक्तिः ॥४६॥

बलवतीति योगः । यथा नमस्यति देवानित्यत्र "शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः"॥२।२।६८॥ इति नमोयोगलक्षणां चतुर्थीं बाधित्वा कर्मणि कारकविभक्तिर्द्वितीया स्यात्। ज्ञतिदं त्वस्य प्राग्वत्। अनोजस्वी चायम्। "क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः"॥२।२।२७॥ इति सूत्रे यस्मै कोप इत्यनिर्दिश्य यं प्रति कोप इति निर्देशात् । तथाहि । अत्र तावत् कुप्यतिना योगादनेनैव सूत्रेण यदः सम्प्रदानसंज्ञा संभवाच्चतुर्थी प्राप्नोति; प्रतिना योगात् "भागिनि च प्रतिपर्यनुभिः"॥२।२।३७॥ इत्यनेन द्वितीया च। यदि चायं न्याय ओजस्वी स्यात्तदोपपदविभक्तिं द्वितीयां बाधित्वा कारकविभक्तेश्चतुर्थ्या भवने यस्मै प्रति कोप इति निर्दिश्येत । चतुर्थ्यागमनादनु प्रतिशब्दस्य व्यर्थकीभूतत्वान्निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेन तत्प्रयोगस्यापि निवृत्तौ यस्मै कोप इति वा निर्दिश्येत। परमेतस्यानोजस्वित्वाच्चतुर्थीं बाधित्वा द्वितीयैवात्राजनीत्यतो यं प्रतीति निर्दिष्टम् ॥ ४६ ॥

## लुबन्तरङ्गेभ्यः ॥ ४७ ॥

अन्तरङ्गेभ्योऽपीत्यपिरत्राध्याहार्यः । बहिरङ्गाऽपि लुप् अन्तरङ्गानपि विधीन् बाधित्वा बलवत्त्वात्प्राक् प्रवर्त्तते । यथा गर्गस्यापत्यानि वृद्धानि "गर्गादेर्यञ्" ॥६।१।४२॥ इति यञि, गर्गाः; अत्र प्रकृत्याश्रितत्वादन्तरङ्गामपि "वृद्धिः स्वरेष्वादेः-"॥७।४।१॥ इति वृद्धिं बाधित्वा प्रत्ययाश्रितत्वाद्बहिरङ्गाऽपि "बहुष्वस्त्रियाम्"॥६।१।१२४॥ इति यञो लुबेव प्रथमं स्यात् । पश्चात्तु न वृद्धिर्ञ्णित्प्र-

त्ययस्य लुब्भवनात् । ख्यातिदं त्वस्य "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्"॥२।१।११॥ इत्यत्र स्याद्यधिकारेणैव सर्वप्रयोगेषु सिद्ध्यत्सु त्वदीयः, मत्पुत्र इत्याद्यर्थं प्रत्ययोत्तरपदग्रहणम् । तथाहि । त्वदीयः, मत्पुत्र इत्यादौ तावद्युष्मद् अस् ईय स्; अस्मद् अस् पुत्र स् इति स्थिते ऐकार्थ्यविवक्षायामन्तर्वर्त्तिन्या विभक्तेर्लुप् प्राप्नोति; सा चातीव बहिरङ्गा, बहिरङ्गैकार्थ्यापेक्षत्वात् । कथम् । ऐकार्थ्यस्य तावत् प्रकृतिप्रत्ययौ पदद्वयं वाऽपेक्षमाणत्वेन स्फुटमेव बहिरङ्गत्वम् । ततो बहिरङ्गमैकार्थ्यमपेक्ष्यमाणायाः समासान्तर्वर्त्तिविभक्तिलुपोऽतीव बहिरङ्गत्वं युक्तमेव । त्वमादेशौ तु विभक्तिमात्राश्रितत्वादन्तरङ्गाविति स्यादिद्वारेणैव तौ सिध्यतस्तथापि यत्प्रत्ययोत्तरपदग्रहणं कृतं तज्ज्ञापयत्यन्तरङ्गेभ्योऽपि कार्येभ्यो लुब्बलवतीति; तेन स्यादेः प्रथममेव लुब्भवनात्तद्द्वारेण त्वमादेशौ न सिध्यत इत्यतः प्रत्ययोत्तरपदग्रहणं सफलम् । अस्थामता त्वस्य नावलोक्यते ॥ ४७ ॥

## सर्वेभ्यो लोपः ॥ ४८ ॥

लोपशब्दस्य लुप्लुकोर्वाचकत्वेऽपि लुपः पूर्वन्याये उक्तत्वाल्लोपशब्देनात्रादर्शनमात्ररूपा लुग् ग्राह्या; गोबलीवर्दन्यायात् । तथाच क्विबादीनाम् "अप्रयोगीत्"॥१।१।३७॥ इत्यनेन एत्यपगच्छतीति इत् इति सान्वर्थसंज्ञाकरणाद्यददर्शनं तदपि "न वृद्धिश्चाविति क्ङिल्लोपे"॥४।३।११॥ इति सूत्रे लोपशब्देन यथा संगृहीतमस्ति तथाऽस्मिन्न्यायेऽपि संगृहीतं द्रष्टव्यम् । ततश्चायमर्थः । लुग्विधिः सर्वविधीन् बाधित्वा बलवत्त्वात् प्राक् प्रवर्त्तते । यथा अबुद्धेत्यत्र "धुड्ह्रस्वाद्-"॥४।३।७०॥ इत्यनेन सिचः सर्वेभ्यः प्रथमं लोपाद् "गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये"॥२।१।७७॥ इत्यनेनादेश्चतुर्थत्वं न । नच लुप्तस्यापि सिचः स्थानिवद्भावेन आदेश्चतुर्थत्वं करिष्यते इति वाच्यम् । चतुर्थत्वविधेः सकारादिप्रत्ययाश्रितत्वाद्वर्णविधित्वेन तस्मिन् कर्त्तव्ये स्थानिवद्भावाप्राप्तेः । तथा शं सुखं तत्र तिष्ठतीति क्विपि शंस्थाः कश्चित् । अत्र स्थाधातोराकारस्य "ईर्व्यञ्जनेऽयपि"॥४।३।९७॥ इति ईत्वं; क्विपो अदर्शनस्य सर्वकार्येभ्यः प्रथमं भवनात् । ईत्वसूत्रे च व्यञ्जनशब्दस्य साक्षाद्व्यञ्जनप्रतिपत्तये ग्रहणात् । स्फातिदं त्वस्य "सस्तः सि"॥४।३।९२॥ इत्यत्र विषयसप्तमीव्याख्यानम् । तथाहि ।

यदि तावत्सीत्यत्र निमित्तसप्तमी व्याख्यायते तदा वसेरद्यतनीतामि अवात्ता-मित्यादौ सिजुत्पादानन्तरमेतन्न्यायाल्लोपविधेर्बलीयस्त्वेन पूर्वमेव "धुड्ह्रस्वाद्-" ॥४।३।७०॥ इत्यनेन सिज्लोपात् "सस्तः सि"॥४।३।९२॥ इति सस्तो न सिध्यति। नाप्यत्र सिज्लोपस्य स्थानिवद्भावं कृत्वा सस्तः कर्तुं शक्यते । "सस्तः सि"॥४।३।९२॥ इत्यनेन चिकीर्ष्यमाणस्य तद्विधेर्निमित्तभूतसकाररूपवर्णाश्रितत्वाद्वर्णवि-धित्वेन स्थानिवद्भावाप्राप्तेरित्याशङ्क्य सूरिभिः सीत्यत्र विषयव्याख्यानं कृतम् । ततश्च वसेरद्यतनीतामि अवात्तामित्यादौ सिज्विषय एव "सस्तः सि"॥४।३।९२॥ इति सस्य तत्वे, ततः सिचि, तस्य लुकि, स्थानिवद्भावे च "व्यञ्जनादेर्वोपान्त्य-स्यातः"॥४।३।४७॥ इति वृद्धिः सिद्धा । नचात्रापि प्राग्वत् स्थानिवद्भावो न प्राप्स्यतीति वाच्यम् । सिचो विशिष्टवर्णसमुदायरूपत्वाद्वर्णरूपत्वाभावेन तदाश्रिताया वृद्धेर्वर्णविधित्वाभावात् स्थानिवद्भावस्य सुतरां प्राप्तेरिति । इह च न्याये लोपशब्देन यदि लुबपि व्याख्यायते तदा पूर्वन्यायं विनाऽपि सरति । परं पूर्वाचार्यैरसौ पृथगुक्त इत्यतोऽत्रापि तथैवोचे। कृशश्चायम्; उत्तरेण जीय-मानत्वात् ॥ ४८ ॥

## लोपात्स्वरादेशः ॥ ४९ ॥

बलवानिति योज्यम्। एवमग्रेतनन्यायसप्तकेऽपि। लोपशब्दश्चात्रापि लुग्वा-ची, पूर्वापवादत्वादस्य । यथा श्रीर्देवताऽस्य "देवता"॥६।२।१०१॥ इत्यणि, श्रायं हविरित्यत्र परमपि "अवर्णेवर्णस्य"॥७।४।६८॥ इति ईकारलुकं बाधित्वा स्वरादेशो वृद्धिरभूत्। अस्य व्यक्तिदं तु वृद्धिसूत्रस्य, "अवर्णेवर्णस्य"॥७।४।६८॥ इति सूत्रा-त्प्राग्विधानम् । तथाहि । यद्ययं न्यायो न स्यात्तदा श्रायमित्यादिसिद्ध्यर्थं, "अवर्णेवर्णस्य"॥७।४।६८॥ इत्यस्याग्रे "वृद्धिः स्वरेष्वादेः-"॥७।४।१॥ इति वृद्धिसूत्रं कुर्यात्तथा च परत्वादेव प्रथमं वृद्धिः सिध्येद् । यत्तु तथा न कृतं तदेतन्न्यायशयैव । अस्य च कार्श्यं, नानिष्टार्था शास्त्रप्रवृत्तिरिति न्याये वक्ष्यते ॥ ४९ ॥

## आदेशादागमः ॥ ५० ॥

यथा अर्पयतीत्यत्र ऋधातोर्णौ वृद्धिमादेशरूपां बाधित्वा प्रथमं प्वागमस्ततः "पुस्पौ"॥४।३।३॥ इति गुणरूप आदेशः सिद्धः। अस्य प्रादुष्करणं चैतदर्थं यत्नाकरणम्। अस्य च क्षामत्वाद् द्वयोः कुलयोरित्यत्र द्विशब्दात् "अनाम्स्वरे नोऽन्तः"॥१।४।६४॥इत्यनेन न नागमः, किन्तु "आद्वेरः"॥२।१।४१॥ इत्यत्। नन्वत्र परत्वादन्तरङ्गत्वाच्च नागमं बाधित्वा "आद्वेरः"॥२।१।४१॥ इत्यत् इत्युक्तमस्ति "अनाम्स्वरे-"॥१।४।६४॥ इत्यस्य न्यासे; तत्कथमेतन्न्यायानित्यतोदाहरणमिदं सङ्गच्छते। सत्यम्। परं यद्येष न्यायो बलिष्ठः स्यात्तदा परत्वेऽन्तरङ्गत्वे च सत्यपि "आद्वेरः"॥२।१।४१॥ इत्यत्वं बाधित्वा नागम एव स्यात्; एतन्न्यायस्य विशेषविधिरूपत्वात्। यत्तु नाभूत्तदस्याबलिष्ठत्वादेव ॥ ५० ॥

## आगमात्सर्वादेशः ॥ ५१ ॥

पूर्वापवादोऽयम्। यथा प्रियातिसृणः कुलात्; अत्र सर्वादेशे तिसरि कृते सति नागमः सिद्धः। आविष्करणं चास्य "ऋतो रः स्वरेऽनि"॥२।१।२॥ इत्यत्र तिस्रादिऋतो रत्वविधावनीतिशब्देन नकारविषयवर्जनोक्तिस्तथाहि। यद्ययं न्यायो न स्यात्तदा स्वरादौ स्यादौ परे प्राग्न्यायेन पूर्वं नागमस्यैव भवनान्नागमव्यवधाने च तिस्राद्यादेशाभवनात्कस्य ऋतो रत्वविधौ नकारविषयो वर्ज्येत। तथापि यदेवं कृतं तदेतन्न्यायात्तिस्रादेः प्रथमं भवनं तदनु नागमविषयभवनं च संभाव्यैव। ननु नागमं विनाऽपि प्रियतिसृणामित्यादावामो नाम्विषये तिस्रादे रत्वं निषेद्धुमनीति नकारविषयवर्जनं कृतं भावि। मैवम्। यतस्तन्मात्रार्थत्वे, अनामीत्येवासन्दिग्धार्थमुच्येत। यत्त्वनीति साधारणशब्देन नकारविषयवर्जनं कृतं तन्नागमापेक्षयैव। अस्थेमा त्वस्य न दृश्यते, उत्तरस्य च॥ ५१ ॥

## परान्नित्यम्॥५२॥

"स्पर्द्धे"॥७।४।११९॥ इति परिभाषापवादोऽयम्। यथा युष्मानस्मान् वा आचक्षाणेन युष्या अस्या; अत्र युष्मदस्मज्ज्यां णिजि "त्र्यन्त्यस्वरादेः"॥७।४।४३॥ इत्यद्लुकि, क्विपि, "अप्रयोगीत्"॥१।१।३७॥ इति तल्लुकि, "णेरनिटि"॥४।३।८३॥ इति णिज्लुकि, टाप्रत्यये, पराभ्यामपि त्वमादेशाभ्यां प्रागेव नित्यत्वाद् "टाङ्यो-

सि यः"॥२।१।७॥ इति मस्य यत्वं सिद्धम् । यत्वं हि प्रथमं युष्म् अस्म् इत्येतयोर्मस्य प्राप्नोति; त्वमादेशभवनानन्तरं तु त्वमयोरकारस्य यत्वं प्राप्नोतीत्यतोयत्वस्य नित्यत्वम् । अस्य न्यायस्य ज्ञप्तिस्तु मा भवानटन्तं प्रायुक्त इति मा भवानटिटदित्यादौ नित्यमपि द्विर्वचनं बाधित्वा अनित्योऽपि प्रागेव "उपान्त्यस्यासमानलोपिशास्वृदितो ङे"॥४।२।३५॥ इति ह्रस्वः स्यादित्यस्यार्थस्य ज्ञप्त्यै ओणेर्ऋदित्करणात् । तथाहि । मा भवानोणिणदित्यादौ ऋदित्वादुपान्त्यह्रस्वनिषेधो यथा स्यादित्येवमर्थं तावदोणेर्ऋदित्त्वं कृतम् । यदि च नित्यत्वात्पूर्वमेव "स्वरादेर्द्वितीयः"॥४।१।४॥ इति द्वितीयांशस्य द्वित्वं स्यात्तदा ओकारस्यानुपान्त्यत्वादेव ह्रस्वत्वस्याप्राप्तिरिति किं तन्निवृत्त्यर्थेन ऋदित्करणेन । यत्तु ऋदित्त्वं कृतं तज्ज्ञापयति पूर्वं द्वित्वं न स्यात्, किन्तु सर्वत्र ह्रस्व एव पूर्वं स्यादिति । तथाच मा भवानटिटदित्यादि सिद्धम् । ततश्च यद्ययं न्यायो नाभविष्यत्तदेत्थं ह्रस्वप्राथम्यज्ञप्त्यै ओणेर्ऋदित्करणयत्नं सूरिर्नाकरिष्यत्; परत्वादेव ह्रस्वप्राथम्यसिद्धेः । केवलमेतन्न्यायेन परादपि नित्यस्य बलवत्वान्नित्यं द्वित्वमेव प्रथमं भविष्यति नत्वनित्य उपान्त्यह्रस्वः । तथाच माभवानटिटदित्यादिप्रयोगा न सेत्स्यन्तीत्याशङ्क्य तेषां सिद्ध्यर्थं ह्रस्वप्राथम्यज्ञप्त्यै ओणेर्ऋदित्त्वयत्नः कृतः॥५२॥

## नित्यादन्तरङ्गम्॥५३॥

अनित्यमपीति शेषः । यथा प्रेजुः प्रोपुरित्यत्र यज्वपोर्य्वृद् य्वृदाश्रयं चेति न्यायात्प्रथमं य्वृति, द्वित्वे, पदद्वयापेक्षत्वेन बहिरङ्गान्नित्यादप्येत्वादोत्वाच्च प्रथममेवानित्योऽप्येकपदाश्रयत्वेनान्तरङ्गत्वाद्दीर्घ एव स्यात् । अस्य ख्यातिकृत्तु "आशीः-"॥३।३।१३॥ इति सूत्रनिर्देशस्तथाहि । अत्र तावत् सेर्लोपे आशिस् इति स्थिते सोरुत्वे विसर्गः प्राप्नोति; "पदान्ते"॥२।१।६४॥ इति दीर्घश्च । तत्र एतन्न्यायान्नित्यमपि विसर्गं बाधित्वा पूर्वव्यवस्थितत्वेनान्तरङ्गत्वात् प्रथमं दीर्घस्ततो विसर्गः । एतन्न्यायाभावे तु पूर्वन्यायेन प्रथमं विसर्गे पश्चाद्रेफाभावाद् दीर्घाभवने, "आशीः-"॥३।३।१३॥ इति निर्देशासम्भव एव । नचायमूर्जेस्त्वलोऽग्रेतनेन ग्रस्यमानत्वात्॥ ५३ ॥

## अन्तरङ्गाच्चानवकाशम् ॥ ५४ ॥

बहिरङ्गमपीति शेषः । यथा त्वम्, अहम्, अत्र प्रकृतिमात्रादेशत्वेनान्तरङ्गाभ्यामपि त्वमादेशाभ्यां प्रागेव प्रकृतिप्रत्ययादेशत्वाद्बहिरङ्गावपि त्वमहमादेशौ निरवकाशत्वात्स्याताम्। अस्य स्फातिकृत्तु "त्वमहं सिना प्राक् चाकः"॥२।१।१२॥ इति सूत्रकरणम् । तथाहि । त्वं अहमित्यत्रापि यद्यन्तरङ्गत्वात्त्वमादेशावेव स्यातां तदा "त्वमहं सिना-"॥२।१।१२॥ इति सूत्रं प्रवृत्त्यवकाशाभावात् कुर्यादेव न । यत्तु कृतं तदेतन्न्यायात् सौ परे त्वमादेशौ बाधित्वा त्वमहमादेशावेव भविष्यत इत्याशयैव। याद्दच्छिकता त्वस्य नास्ति ॥ ५४ ॥

## उत्सर्गादपवादः ॥ ५५ ॥

यथा आपचन्त्यस्मिन्निति आपाकः; अत्रौत्सर्गिकस्य "पुंनाम्नि घः"॥५।३।१३०॥ इति घस्यापवादो "व्यञ्जनाद् घञ्"॥५।३।१३२॥ इति घञेव बलवत्त्वात् स्यात् । प्रादुष्कारकं चास्य गोचरादीनां "गोचरसंचरवहव्रजव्यजखलापणनिगमबकभगकषाकषनिकषम्"॥५।३।१३१॥ इति सूत्रेण निपातनम् । तद्धि निपातनाभावे एतन्न्यायादौत्सर्गिकं घं बाधित्वा अपवादत्वाद् घञेव मा प्रसाङ्क्षीदित्यतः कृतम् । अपराक्रमश्चायम् । उत्तरेणैतदेकान्तस्य त्रास्यमानत्वात् ॥ ५५ ॥

## अपवादात् क्वचिदुत्सर्गोऽपि ॥५६॥

यथा मख गतौ, मखान्ति स्वर्गं गच्छन्त्यनेनेति मखः। मठ निवासे, मठन्ति निवसन्ति छात्रादयोऽत्रेति मठः; इत्यादौ "व्यञ्जनाद् घञ्"॥५।३।१३२॥ इति घञमपवादमपि बाधित्वा बलवत्त्वादौत्सर्गिकः "पुंनाम्नि-"॥५।३।१३०॥ इति घः स्यात्। अस्याविष्कारकं तु मखमठादिसिद्धौ यत्नान्तराकरणम्। अनित्यता त्वस्य न संभवति ॥ ५६ ॥

## नानिष्टार्था शास्त्रप्रवृत्तिः ॥५७॥

शास्त्रस्येति कोऽर्थः, सूत्रस्य न्यायस्य वाऽनभिप्रेतार्थसिद्धौ प्रवृत्तिर्न कार्या। शिष्टप्रयोगासिद्ध्यर्थमेव तत्सद्भावात्। अनिष्टप्रयोगसिद्धिप्रतिबन्धार्थोऽयं न्यायः। तत्र सूत्रस्य यथा । नयतेर्गित्त्वात्फलवत्कर्तृविवक्षयाऽऽत्मनेपदे सिद्धेऽपि "कर्तृ-

स्थामूर्त्ताप्यात्"॥३।३।४०॥ इति सूत्रं यत्कृतं तत्तावन्नियमार्थम् । नियमश्चायम् । कर्तृस्थामूर्त्ताप्यादेव नयतेरात्मनेपदं स्यात् । यथा श्रमं विनयते; शमयतीत्यर्थः । कर्तृस्थामूर्त्ताप्यत्वाभावे तु फलवत्कर्त्तर्यपि न स्यात् । यथा चैत्रस्य मन्युं विनयति, गडुं विनयति, बुद्ध्या विनयतीति । अयं च नियमः "कर्तृस्था-" ॥३।३।४०॥ इति सूत्रे अर्थविशेषानुक्तावपि शमयतिक्रियार्थस्यैव नयतेर्ज्ञेयो नत्वन्यार्थस्य; इत्थमेव शिष्टानामिष्टत्वात् । ततश्चैवं व्यवस्थितम् । शमयतिक्रियार्थान्नयतेर्यद्यात्मनेपदं स्यात्तदा कर्तृस्थामूर्त्ताप्यत्वसद्भावे एव स्यान्न तु तदभावे फलवत्कर्तृविवक्षयाऽपीति । तेन शमयतिक्रियातोऽन्यार्थे वर्त्तमानान्नयतेः सर्वत्र फलवत्कर्तृविवक्षाऽविवक्षाभ्यामात्मनेपदपरस्मैपदे सिद्धे । यथा अजां ग्रामं नयते नयति वा ॥ श्री आदिनाथ इत्यादिष्वपि यो यत्वाद्यभावः सोऽपि यदि शिष्टसंमतस्तदाऽनेन न्यायेन सिद्धो ज्ञेयः ॥ न्यायस्य यथा ॥ लोपात्स्वरादेश इति न्यायश्चिकीर्ष्यते इत्यादौ चिकीर्ष इति स्थिते "क्यः शिति"॥३।४।७०॥ इति क्ये परे सनो "दीर्घश्च्वि-"॥४।३।१०८॥ इति दीर्घरूपाय स्वरादेशाय नोत्सहते; दीर्घस्य शिष्टानामनिष्टत्वात्; ततश्च सनो "अतः"॥४।३।८२॥ इत्यल्लोप एव स्यात् । प्रबोधकं त्वस्य तत्र तत्र तत्तद्विशेषणानुक्तिरेव । तथाहि । "कर्तृस्था-"॥३।३।४०॥ इति सूत्रे शमयत्यर्थस्य नयतेरिति विशेषणं; लोपात् स्वरादेश इति न्याये च "दीर्घश्च्वि-"॥४।३।१०८॥ इति दीर्घवर्जः स्वरादेश इति विशेषणं यन्नोक्तं, तदेतन्न्यायाशयैवेति । अस्य चानात्यन्तिकत्वात् "इदमदसोऽक्येव"॥१।४।३॥ इत्यत्रानिष्टनियमापोहार्थमेवकारप्रयोगस्तथाहि । "इदमदस-"॥१।४।३॥ इत्यस्य नियमसूत्रमात्रत्वं तावदेवकारं विनाऽपि सिद्धम् । कथम् । इमकैः, अमुकैरित्यत्र "भिस ऐस्"॥१।४।२॥ इत्यनेनैव ऐसि सिद्धे यदेतत्सूत्रं कृतं तन्नियमार्थमेव; सिद्धे सत्यारम्भ इति न्यायादिति । परमत्र नियमप्रकारौ द्वौ संभवतः । इदमदस एवाकि भिस ऐस् नत्वन्यशब्देभ्य इत्येकः । इदमदसोऽक्येव सति भिस ऐस् नत्वको अभावे इति द्वितीयः । तत्राद्योऽनिष्टस्तकैर्विश्वकैरित्यादावपि भिस ऐस् दर्शनात् । द्वितीयस्त्विष्टः । एभिरमीभिरित्यत्र भिस ऐसो अदर्शनात् । ततोऽस्यैव व्यवस्थापनार्थमक्येवेत्येवकारः प्रयुक्तः । यदि चायं न्याय आत्यन्तिकः

स्यात्तदा अनेनैव न्यायेनानिष्टनियमापोहो भावी; तद्भवने च पारिशेष्यादिष्ट-नियम एव भविष्यतीति कुतस्तदर्थमेवः प्रयुज्यते ॥ ५७ ॥

## इति प्राक्तनीं न्यायवृत्तिं क्वचित् क्वचिदुपजीव्य कृता प्रभुश्रीहेमचन्द्राचार्यसमुच्चितसप्तपञ्चाशन्मितन्यायबृहद्वृत्तिः ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते सांप्रतम् ॥
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक आद्य एष रचितः संपूर्णताभाजनम् ॥ १ ॥

ग्रन्थमानम् १००१ अक्षराणि २९ ॥

---

अथ स्वसमुच्चितन्याया विव्रियन्ते ।

## प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम् ॥ १ ॥

अत्र प्रकृतिर्धातुरूपा नामरूपा च संभवति । स्वार्थिकप्रत्ययान्तानामिति; प्रकृतीनामिति शेषः । प्रकृतीनां केवलत्वे, स्वार्थिकप्रत्ययान्तत्वे च, बहुः शब्दभेदः स्यात्ततः शब्दभेदादन्यस्य कथनेऽन्यग्रहणं न प्राप्नोतीत्यतोऽयं न्यायः । तत्र धातुरूपा प्रकृतिर्यथा "विनिमेयद्यूतपणं पणिव्यवहोः"॥२।२।१६॥ इत्यत्र पणीत्युक्तेः पणेः केवलस्यैव ग्रहणं यद्यपि प्राप्नोति तथापि स्वार्थिकायप्रत्ययान्तस्यापि स्यात् । तेन शतस्य शतं वा अपणिष्टेत्यादाविव, शतस्य शतं वा अपणायीदित्यादावपि "विनिमेयद्यूत-"॥२।२।१६॥ इत्यनेन व्याप्यस्य वा कर्मत्वं सिद्धम् । नामरूपा यथा । ग्रामात्परस्मिन् देशे वसतीत्यादौ केवलपरशब्दयोगे इव ग्रामात्परस्ताद्वसतीत्यादौ "परावरात् स्तात्"॥७।२।११६॥ इति सूत्रविहितस्वार्थिकस्तात्प्रत्ययान्तपरशब्दयोगेऽपि ग्रामशब्दात् "प्रभृत्यन्यार्थ-"॥२।२।७५॥ इति दिक्शब्दयोगलक्षणा पञ्चमी सिद्धा । अस्य ज्ञापकं तु नियमार्थं सर्वादिगणे डतरडतमप्रत्ययोपादानम् । तथाहि । डतरडतमोपादाने तावदयं भावः । डतर-

डतमौ प्रत्ययौ । प्रत्ययानां च केवलानां सर्वादित्वासंभवात्प्रत्ययः प्रकृतिमाक्षिपतीति कृत्वा येभ्यो यत्तत्किमन्यैकशब्देभ्यः स्वार्थिकौ डतरडतमौ संभवतस्ते यदादिशब्दा डतरडतमान्ता इह डतरडतमशब्देन गृह्यन्ते। तेन यतरस्मै यतमस्मादित्यादिषु स्मायादयः सिद्धाः। इदं च डतरडतमोपादानं नियमार्थमित्युक्तं सूरिणा । नियमश्चैवम् । यदि सर्वादीनां स्वार्थिकप्रत्ययान्तानां प्रकृतिसर्वादित्वद्वारेण सर्वादित्वं स्यात्तदा डतरडतमान्तानामेव स्यान्नत्वन्यस्वार्थिकप्रत्ययान्तानाम्। तेन प्रकृष्टार्थे स्वार्थिकतमपि, सर्वतमाय सर्वतमात्; अत्र सर्वादित्वाभावात् स्मैस्मातौ नेति । इत्थं चान्यस्वार्थिकप्रत्ययान्तानां सर्वादित्वापोहार्थं डतरडतमग्रहणयत्नस्तदा क्रियते यद्यविशेषेण सर्वस्वार्थिकप्रत्ययान्तानां सर्वादित्वप्राप्तिः कथमपि स्यात् । तत्प्राप्तिश्च तेषामेतन्न्यायादेवास्ति; प्रकारान्तराभावात् । तदेवमेतन्न्यायबलात्सर्वस्वार्थिकप्रत्ययान्तानां सर्वादिशब्दानां प्रकृतिसर्वादित्वद्वारेण सर्वादित्वे प्राप्नुवति सति डतरडतमेतरस्वार्थिकप्रत्ययान्तानां सर्वादित्वं निषेद्धुं यद् डतरडतमोपादानं सर्वादिगणे कृतं तदेतन्न्यायाविनाभावित्वादेतन्न्यायज्ञापकमिति व्यक्तमेव । अनित्यश्चायम् । तेन पणायतीत्यादौ पणिधातोरिदित्त्वेऽपि नात्मनेपदम् । अनित्यताज्ञापकं तु कामयते इत्यादावात्मनेपदार्थं कमेर्णिङो ङित्करणम् । अस्यैकान्तिकत्वे हि कमेर्ङित्त्वेनैवात्रात्मनेपदं सिद्धमिति कुतस्तदर्थं णिङो ङित्त्वं कुर्यात् ॥ १ ॥

## प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ॥२॥

ग्रहणमिति अत्रोत्तरत्र च संबन्धः। यत्र विवक्षितशब्दः प्रत्ययरूपोऽप्रत्ययरूपश्च संभवेत्तत्रासौ प्रत्ययरूप एव ग्राह्यो नत्वप्रत्ययरूपः । उभयोर्ग्रहणे प्राप्ते व्यवस्थार्थोऽयं न्यायः । एवमुत्तरन्यायत्रयेऽपि वाच्यम । यथा "कालात्तनतरतमकाले"॥३।२।२४॥ इत्यस्मिन् सप्तम्यलुब्विधायिसूत्रे तरतमौ प्रत्ययौ ग्राह्यौ, नतु तरति ताम्यतीत्यचि व्युत्पन्ने नाम्नी। अस्य ख्यापकं तु सूत्रे अविशिष्टोक्तिस्तथाहि । तरतमौ तावदत्र प्रत्ययावभीष्टौ, नतु नाम्नी । पूर्वाह्णेतरां, पूर्वाह्णेतमामित्यादिप्राच्यप्रयोगेषु प्रत्यययोरेव तयोर्दर्शनात्; तथापि यत्सूत्रे निर्विशेषमूचे, तदेतन्न्यायाश्रयैव। अस्यास्थैर्याच्च "स्त्रीदूतः"॥१।४।२९॥ इत्यादौ "नारी"॥२।४।७६॥

इत्यादिङीप्रत्ययान्तवत्तरीत्याद्या अव्युत्पन्नत्वेन प्रत्ययरहिता अपि ईदन्ता ग्राह्याः। अस्थैर्यख्यापकं तु "धातोरिवर्ण-"॥२।१।५०॥ इति सूत्रे साक्षात् प्रत्ययग्रहणम्॥२॥

## अदाद्यनदाद्योरनदादेरेव ॥ ३ ॥

धातोरिति शेषः। यत्र विवक्षितधातुरदादिगणसत्कोऽन्यश्च संभवेत्तत्रान्यो ग्राह्यो नत्वदादिसत्कः। यथा "उपान्वध्याङ्वसः"॥२।२।२१॥ इत्यत्र वस्तेर्व्युदासेन वसतिरेवाग्राहि। स्थापकं त्वस्य "शासस्हनः शाध्येधिजहि"॥४।२।८४॥ इत्यत्रास्तेरादादिकस्य ग्रहणसिद्ध्यर्थं शासहन्साहचर्यबलग्रहणम्। तद्ध्येतन्न्यायादसत्यस्यत्योर्ग्रहणं मा प्रसाङ्क्षीदित्यतः कृतम्। अस्य चाध्रुवत्वात् "ऋह्रीघ्राघ्रात्रोन्दनुदविन्तेर्वा"॥४।२।७६॥ इत्यत्र भौवादिकस्येव आदादिकस्यापि ऋधातोर्ग्रहः ॥ ३ ॥

## प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्यैव ॥ ४ ॥

प्रकरणेनार्थात्स्वाधिकारेण चरतीति वाक्ये "चरति"॥६।४।११॥ इत्यनेनेकणि प्राकरणिकं स्वाधिकारोक्तं प्रत्ययादि; अन्याधिकारोक्तं तु विवक्षितसूत्रापेक्षया अप्राकरणिकम्। तत्रोभयोर्ग्रहणे संभवति सति स्वाधिकारेणोक्तमेव प्रत्ययादि ग्राह्यं नत्वन्याधिकारोक्तम्। यथा "इञ इतः"॥२।४।७१॥ इति ङीसूत्रे "यञो डायन् च वा"॥२।४।६७॥ इत्यतः प्रारब्धात्तद्धिताधिकारात्ताद्धितीय एवेञ् ग्राह्यो नतु "प्रश्नाख्याने वेञ्"॥५।३।११९॥ इति कृत्सूत्रोक्तः। तेन सुतङ्गमेन निर्वृत्ता "सुतङ्गमादेरिञ्"॥६।२।८५॥ इतीञि सौतङ्गमी; अत्र ङीः स्यात्। प्रश्नाख्यानयोस्तु न स्यात्। तत्र प्रश्ने यथा। हे चैत्र कां त्वं कारिमकार्षीः। आख्याने यथा। पृष्टः प्रत्याह; सर्वां कारिमकार्षम्। अत्र कारिशब्दादिञन्ताद् ङीप्राप्तिरस्ति परमप्राकरणिकत्वेन कृदिञ्प्रत्ययस्य "इञ इतः"॥२।४।७१॥ इति सूत्रे अग्रहणान्नात्र ङीः। अस्य च रोपकं "द्रेरञणोऽप्राच्यभर्गादेः"॥६।१।१२३॥ इति सूत्रे "शकादिभ्यो द्रेर्लुप्"॥६।१।१२०॥ इति सूत्राद् द्रावनुवर्त्तमानेऽपि पुनर्द्रिग्रहणम्। तद्धि एतन्न्यायात्प्राकरणिकस्यैव द्रेरञणोऽनेन लुब्भाविनी, नाप्राकरणिकस्येत्याशङ्क्य द्विविधस्यापि द्रेरञणोऽनेन लुब्भवतादित्येवमर्थं कृतम्। अयं भावः। "द्रेर-

ञण-"॥६।१।१२३॥ इति सूत्रमपत्याधिकारेऽस्ति। एका च द्रिसंज्ञा तत्रास्ति, साऽस्य सूत्रस्यापत्याधिकारस्थस्य प्राकरणिकी; अन्या च द्रिसंज्ञा शस्त्रजीविसङ्घाधिकारे-ऽस्ति । साऽस्याप्राकरणिकी । अधिकारद्वयस्यापि च द्रिसंज्ञका अञणप्रत्यया अस्मिन् सूत्रे अधिकृतास्तेन मद्रस्यापत्यं स्त्री "पुरुमगधकालिङ्गशूरमसद्विस्वरादण्" ॥६।१।११६॥ इत्यनेन द्रिसंज्ञेऽणि "द्रेरञण-"॥६।१।१२३॥ इति तल्लुपि, प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते इति न्यायाच्च लुप्तेऽप्याणि "अणञेय-" ॥२।४।२०॥ इति ङ्यां, मद्री । अत्र यथा "द्रेरञण-"॥६।१।१२३॥ इत्यनेनापत्यार्थस्य द्रिसंज्ञस्याणो लुप् स्यात्तथा पर्शूरित्यत्र शस्त्रजीविसंघार्थस्यापि । तथाहि । पर्शुर्नाम काचित्, तस्या अपत्यानि बहवो माणवकाः "पुरुमगध-"॥६।१।११६॥ इत्याणि, "शकादिभ्यो द्रेः-"॥६।१।१२०॥ इति तल्लुपि च पर्शवः । ते शस्त्रजीविसङ्घः स्त्रीत्वविशिष्टो विवक्षितः "पर्श्वादेरण्"॥७।३।६६॥ इत्यनेन द्रिसंज्ञोऽण्; तस्यापि "द्रेरञण-"॥६।१।१२३॥ इत्यनेन लुप् । ततश्च "उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ्"॥२।४।७३॥ इत्यूङि, पर्शूरिति । अस्य चास्थास्नुत्वात् जॄष्धातोरद्यतनीदिप्रत्यये अजरत् इत्यादावाख्यातसंबन्धिनि "ऋदिच्छ्वि-" ॥३।४।६५॥ इत्यङ्प्रत्यये परे "ऋवर्णदृशोऽङि"॥४।३।७॥ इत्यनेन यथा गुणः स्यात्तथा जरणं जरा इत्यादौ "षितोऽङ्"॥५।३।१०७॥ इत्यनेन विहिते कृत्संबन्धिन्यप्यङि परे गुणः सिद्धः ॥ ४ ॥

## निरनुबन्धग्रहणे सामान्येन ॥ ५ ॥

सामान्येनेति निरनुबन्धसानुबन्धयोरित्यर्थः । वैसदृशात्सानुबन्धस्य ग्रहणे अप्राप्तेऽयं न्यायः । यथा स्वः; कः; अत्र "रः पदान्ते विसर्गस्तयोः"॥१।३।५३॥ इति रस्य रोश्च विसर्गः सिद्धः। आरोपकं त्वस्य "अरोः सुपि रः"॥१।३।५७॥ इत्यत्र रुवर्जनम् । तद्धि तत्र "रः पदान्ते-"॥१।३।५३॥ इत्यधिकारादेतन्न्यायेनोभयोरपि रयोर्ग्रहणे प्रसक्ते सति कृतम् । अस्थेयांश्चायम् । निरनुबन्धग्रहणे न सानुबन्धकस्येत्यपि न्यायसद्भावात् ॥ ५ ॥

## साहचर्यात्सदृशस्यैव ॥ ६ ॥

अव्यभिचारिणा व्यभिचारी यन्नियम्यते तत्साहचर्यम्; तस्माच्च सदृश एव ग्राह्यो नत्वसदृशः। इष्टग्रहणसिद्ध्यर्थोऽयं न्यायः। यथा "क्त्वातुमम्"॥१।१।३५॥ अत्र क्त्वातुमोः कृतोः साहचर्यात् कृदम् ग्राह्यो नतु द्वितीयैकवचनम्। बोधकं त्वस्याविशिष्टोक्तिरेव। अस्थैर्यत्वाच्चास्य "वत्तस्याम्"॥१।१।३४॥ इत्यत्र न केवलं वत्तसिसाहचर्यात्तद्धितस्यैव आमो अव्ययत्वं स्यात् किन्तु परोक्षास्थानजस्यापि; तेन इदमनयोरातिशयेन किमिति किंतराम्; अत्र किं शब्दात् "द्वयोर्विभज्ये च तरप्"॥७।३।६॥ इत्यनेन तरपि, "किन्त्याद्येऽव्ययादसत्त्वे तयोरन्तस्याम्"॥७।३।८॥ इत्यनेन तरपोऽन्तस्य आमादेशे च यथा तस्य आमोऽग्रे "अव्ययस्य"॥३।२।७॥ इति सेर्लुप् स्यात्तथा पाचयांचक्रुषा इत्यत्र परोक्षास्थानजस्याप्यामोऽग्रे "अव्ययस्य"॥३।२।७॥ इत्यनेन टाया लुप् सिद्धः॥ ६॥

## वर्णग्रहणे जातिग्रहणम्॥ ७॥

एकवर्णग्रहणे तज्जातीयो अनेकोऽपि ग्राह्य इत्यर्थः। अमुकवर्णस्येत्येक-वचननिर्देशे एकस्यैव ग्रहणं प्राप्नोति न द्वयोरित्यतोऽयं न्यायः। यथा रंरम्यते इत्यादौ रमेरकारपुरस्थैकानुनासिकान्तत्वे सति यथा "मुरतोऽनुनासिकस्य"॥४।१।५१॥ इति म्वागमः स्यात्तथा हम्मतेर्यङि जंहम्म्यते इत्यादावप्यनुनासिकजाति-ग्रहणाद् हम्मतेरकारपुरःस्थानुनासिकद्वयान्तत्वेऽपि सति "मुरतः-"॥४।१।५१॥ इति म्वागमः सिद्धः। देशकं त्वस्य जंहम्म्यते इत्यादीनां सिद्ध्यर्थं यत्नान्तरानुप-देशनम्। अस्यास्थैर्याच्च क्वचिद्वर्णग्रहणे जातिग्रहणं स्याच्च न स्याच्च। यथा सुपूर्वस्य घिणुङ् ग्रहणे इत्यस्य उदित्वान्नागमे तस्य "तवर्गस्य श्चवर्ग-"॥१।३।६०॥ इति णत्वे घिण्णूरूपाद्धातोः "मन्वन्-"॥५।१।१४७॥ इति वनि, "वन्याङ् पञ्चमस्य" ॥४।२।६५॥ इत्यत्र पञ्चमजातिग्रहणाण्णद्वयस्याप्याङादेशे आङो ङित्वेन गुणा-भावाद्यत्वे सुघ्यावा इति स्यात्। जातिग्रहणाभवने त्वन्त्यस्यैव णस्य आत्वे तथाच णकारयोगरूपनिमित्तनिवृत्त्या निमित्ताभाव इति न्यायादाद्यणस्य णत्व-निवृत्तौ सुघिनावा इत्यपि स्यात्। अस्थैर्यप्रतिष्ठापकं त्वस्य काष्ठतङ्क्षि कुलानी-त्यादौ नागमार्थं "धुटां प्राक्"॥१।४।६६॥ इति बहुवचनम्। तथाहि। बहुवचनं किलानेकधुट्रूपधुट्जातिग्रहणसिद्ध्यर्थं न्यस्तम्। एतन्न्यायस्थैर्ये च धुट् इत्येक-

वचनेनापि बहवोऽपि धुटो लभ्येरन्निति किमर्थं बहुवचनं प्रयुज्येत॥ इह च न्याये वर्णग्रहणे इत्युपलक्षणम्। तेन विशिष्टवर्णसमुदायग्रहणेऽपि क्वचिज्जात्याश्रयणं सिद्धम्। यथा चोरयन्तं प्रायुक्त अचूचुरत् इत्यत्र णिजातिरेवाश्रिता। तथाहि। चुरण् इत्यस्मात् "चुरादिभ्यः-"॥३।४।१७॥ इति णिचि गुणे चोरि इति जातं; तस्माच्च चोरयन्तं प्रायुक्तेति णिग्। अद्यतनीदि; "णिश्रि-"॥३।४।५८॥ इति ङः। अत्र णिद्वयमस्ति परं यो णिर्धातोरग्रे स ङपरो न, यस्तु ङपरः स धातोरनन्तरो न। तेन चो इत्यस्य "उपान्त्यस्यासमान-"॥४।२।३५॥ इति ह्रस्वो न प्राप्नोति, ङपरे णौ तस्य विधानात्। यदि च "णेरनिटि"॥४।३।८३॥ इत्यनेन एको णिर्लुप्यते, तदा ङपरणिः पुरःस्थः स्यात्परं धातोः समानलोपित्वमापद्यते, तेनाप्युपान्त्यह्रस्वो न प्राप्नोति। परं "उपान्त्यस्यासमान-"॥४।२।३५॥ इत्यादिसूत्रेषु णाविति णिजातिराश्रीयते; तेनात्र णिद्वयेनापि एक एव णिर्ङपरो गण्यते। यदि च द्वावपि णी निमित्ततयैव संगृहीतौ, तदा णिलोपेन समानलोपित्वमपि न स्यात्। णेरन्यस्य समानस्य लोपे हि समानलोपित्वं स्याद्यथा कलिमाख्यत् अचकलत् इत्यत्र कलिशब्दसंबन्धिन इकारस्य "त्र्यन्त्यस्वरादेः"॥७।४।४३॥ इत्यनेन लोपे समानलोपित्वं जातं, ततोऽत्र प्रस्तुते समानलोपित्वाभावाच्चो इत्यस्य ह्रस्वे तदनु चु इति द्वित्वे पूर्वस्य "लघोर्दीर्घोऽस्वरादेः"॥४।१।६४॥ इति दीर्घे च अचूचुरदिति सिद्धम्॥ ७॥

## वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते॥ ८॥

ऋकारमध्येऽर्द्धमात्रो रेफोऽग्रे पश्चाच्च तुरीयः स्वरभागोऽस्ति। एवं ऌकारेऽर्द्धमात्रो ल इत्याद्यपि वाच्यमिति वृद्धाः प्राहुः। ततश्च यथा गोविक्रये क्रियमाणे मांसविक्रयनियमो न भज्यते; गवि मांसबुद्धेरभावात्; तथा ऋऌग्रहणे तन्मध्यस्थरलयोर्ग्रहणं न प्राप्नोति ताभ्यां रलबुद्धेरनुत्पादनादित्यतोऽयं न्यायः। यथा प्रलीयमानमित्यादिवत् प्रक्ऌप्यमानमित्यादावपि ऌकारव्यवधाने तदेकदेशभूतलकारेणापि व्यवधानादलचटेति निषेधेन "स्वरात्"॥२।३।८५॥ इति प्राप्तं णत्वं नाभूत्। व्यञ्जकं त्वस्य प्रक्ऌप्यमानमित्यादौ णत्वं निषेद्धुं यत्नान्तराकरणम्। अस्याध्रौव्याच्च कृतः, कृतवानित्यादौ "रदादमूर्च्छमदः क्तयोर्दस्य च"॥४।२।६९॥

इति प्राप्तं क्तयोस्तो नत्वं नाभूत् । रग्रहणेन ऋमध्यस्थरेफस्याग्रहणात् । अध्रौव्यव्यावर्णकं तु "रषृवर्णात्-"॥२।३।६३॥ इत्यत्र रेफऋवर्णयोर्ग्रहणम् । अस्य ध्रौव्ये हि ऋवर्णमध्येऽपि रेफ एवास्तीति रेफग्रहणेनापि सरति । अत एव पाणिनिना णत्वसूत्रे रषाभ्यामित्येवोक्तं, ऋवर्णादपि तन्मध्यस्थरेफाश्रयं णत्वं भविष्यतीत्याशयेन ॥ ८ ॥

## तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९ ॥

श्नादिप्रत्यये एकस्मिन्ननेकस्मिन्वाऽन्तःपतितेऽपि सति धात्वादेर्यथोक्तं कार्यं स्यादेव । प्रत्ययेऽन्तःपतिते सति धातोः खण्डितत्वबुद्धेरुत्पादात् खण्डीभूतस्य च तस्य कपालरूपतापन्नकलशस्य जलाहरणादिकार्ये इव धातुकार्ये अप्राप्तेऽयं न्यायः। तत्रैकस्मिन् यथा। अरुणत्; अत्र श्नेऽन्तःपतितेऽपि रुधेः प्रागट् सिद्धः। अनेकस्मिन् यथा। अतृणेट्; अत्र श्ने ईति चान्तःपतितेऽपि तृहेः प्रागट्। नचाडेव प्रथममानेष्यते तथाच कैतन्न्यायावकाश इति वाच्यम्। कृतेऽन्यस्मिन् धातु-प्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट्चेति न्यायसद्भावेनाटः प्रथममनागमनात् । अभिव्यञ्जकं त्वस्य "त्वमहं सिना-"॥२।१।१२॥ इत्यत्र प्राक्चाक इति। तथाहि । युष्मदस्मदोरकि सौ तावत् त्वकमहकमिति रूपे इष्टे । यदि च "त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक्"॥७।३।२९॥ इत्यनेनाक् प्रथममानीयते तदैतन्न्यायात्साकोऽपि युष्मदस्मदोर्युष्मकदस्मकद्रूपयोस्त्वमहमादेशः स्यात्तथा चाकः श्रवणं न स्यादित्यत एतन्न्यायाशङ्कयाऽकः श्रवणार्थं प्राक् चाक इत्युक्तम् । अस्यानैकान्तिकता तु नालोक्यते ॥ ९ ॥

## आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ १० ॥

आगमा ये आदिशब्देनान्तशब्देन वा निर्दिष्टाः। यथा "अड् धातोरादिर्ह्यस्तन्यां चामाङा"॥४।४।२९॥ इति "अनाम्स्वरे नोऽन्तः"॥१।४।६४॥ इत्यादि। ते आगमा इति बहुवचनस्यातन्त्रत्वादेको द्व्यादयोऽपि वा यद्गुणीभूता इति गुणशब्दस्य लक्षणयाऽवयववाचित्वाद् यस्यावयवीभूताः स्युस्तद्ग्रहणेन गृह्यन्ते इति कोऽर्थस्तस्य केवलस्य यत्कार्यमूचे तत्तस्य सागमस्यापि स्यात्। आदिशब्देनान्तशब्देन च

निर्देशस्य फलदर्शनार्थोऽयं न्यायः । तत्रैको यथा । प्रण्यपतत् । अत्राट्सहितेऽपि पतौ "नेर्ङ्मादा-"॥२।३।७९॥ इति नेर्नो णः सिद्धः । द्वौ यथा । प्रतिपूर्वस्य पतेर्यङ्लुपि दिवि "व्यञ्जनाद्देः सश्च दः"॥४।३।७८॥ इति तल्लुकि प्रण्यपनीपत् इत्यादावट आदिशब्दनिर्दिष्टत्वेन, न्यश्चान्तशब्दनिर्दिष्टत्वेनागमत्वात्तद्युतस्यापि पतेः पतिग्रहणेन ग्रहणात्तस्मिन् परे "नेर्ङ्मादा-"॥२।३।७९॥ इति नेर्नो णः । नन्वत्रागमयुतस्य पतेर्ग्रहणं सिध्यतु, पकारयुतस्य तु कथं ग्रहणं, पकारस्य द्विरुक्तिजस्यानागमत्वात् । उच्यते । तस्य अव्यवधायित्वमग्रेतनन्याये वक्ष्यते । एवमग्रेतनोदाहरणेऽप्याशङ्क्यं समाधेयं च । त्रयो यथा । प्रनिपूर्वस्य यमेर्यङ्लुपि अद्यतनी दिप्रत्यये, प्रण्यर्यंयंसीदित्यादावडागमम्वागमसागमयुतेऽपि यमो परे, "अकखाद्यषान्ते पाठे वा"॥२।३।८०॥ इत्यनेन नेर्नो णः । अस्य गमकं तु, सेटः क्वसोरुषादेशाय "क्वसुष्मतौ च"॥२।१।१०५॥ इत्येतद्व्यतिरिक्तयत्नाकरणम् । तथाहि । "क्वसुष्मतौ च"॥२।१।१०५॥ इत्यनेन तावदनिटः क्वसोरुषादेशे बभूवुषीत्यादि सिध्यतु; परं पेचुषीत्यादौ "घसेकस्वरातः क्वसोः"॥४।४।८२॥ इत्यनेनेड्भवनेन क्वसोः सेट्त्वादिटश्चादृश्यमानत्वात्तल्लोपाय, सेटः क्वसोरुषादेशाय वा सूत्रं कार्यम् । यत्तु किमपि न कृतं तदेतन्न्यायात्सेटोऽपि क्वसोरुषादेशः "क्वसुष्मतौ च"॥२।१।१०५॥ इत्यनेनैव सेत्स्यतीत्याशयैव । अस्य च व्यभिचारित्वाद् "वेः स्कन्दोक्तयोः"॥२।३।५१॥ इति षत्वसूत्रे स्कन्दग्रहणेनाट्सहितस्य स्कन्दो अग्रहणाद्व्यस्कन्ददित्यादौ षत्वं नाभूत् । व्यभिचारित्वप्रतिष्ठापकं तु "उपसर्गात्सुग्सुवसोस्तुस्तुभोऽट्यप्याद्वित्वे"॥२।३।३९॥ इति सूत्रे अट्यपीति । तथाहि । अभ्यषुणोदित्यादावड्व्यवधानेऽपि षत्वार्थं तावदट्यपीत्युक्तम् । यदि चायमव्यभिचारी स्यात्तदा सुग्ग्रहणेनाट्सहितस्यापि सुगो ग्रहणसिद्धेरटा व्यवधानाभवनादट्यपीति न वक्तव्यं स्यात् । यत्तूक्तं तदस्य व्यभिचारित्वात् सुग्ग्रहणेनाट्सहितस्यापि सुगो ग्रहणासिद्ध्याऽटो व्यवधायित्वसंभावनयैव ॥ आगमोऽनुपघातीत्यपि न्यायोऽस्ति । यथा भवानित्यत्र नागमे कृते अतुरन्तुरूपो जातस्तथापि नागमस्यानुपघातित्वात् "अभ्वादेरत्वसः सौ"॥१।४।९०॥ इत्यनेनात्वन्तलक्षणो दीर्घः स्यादेवेति । परं सोऽप्यत्रैवान्तर्भावनार्हः; समानफलत्वात् । तथाहि । अनुपघातीत्यस्य

तावदयमेवार्थो यत्स्वव्यवधानहेतुकं यथाप्राप्तकार्याणामुपघातमागमो न करोतीति। यदि चागमानामवयवत्वेनावयविग्रहणेन ग्रहणं सिद्धं तदा अव्यवधायित्वादनुपघातित्वं स्फुटमेव ॥ १० ॥

## स्वाङ्गमव्यवधायि ॥ ११ ॥

स्वमङ्गं द्विरुक्तादिकं धात्वादेर्निजाङ्गिनः कार्ये कर्त्तव्ये व्याघातं न कुर्यात्। स्वाङ्गत्वस्य ह्येतावदेव फलमिति ज्ञप्त्यर्थोऽयं न्यायः। यथा संचस्कारेत्यत्र सम् कृ इति स्थितेऽन्तरङ्गत्वात्प्रथमं स्सटि, ततश्च तदवसरप्राप्ते "स्सटि समः"॥१।३।१२॥ "लुक्"॥१।३।१३॥ इति सूत्रे बाधित्वा परत्वान्नित्यत्वाद्धातुमात्राश्रयत्वेनान्तरङ्गत्वाच्च णवि तदाश्रिते द्वित्वादौ च कृते संचस्कृ इति स्थिते एतन्न्यायबलाद् धात्वङ्गेन द्वित्वजचकारेण समो व्यवधानाभवनान्निमित्ताभाव इति न्यायप्राप्ता स्सटोनिवृत्तिर्नाजनि। यतः सम्कृगोरानन्तर्यमेव स्सटोनिमित्तम्; ततश्च द्वित्वेन व्यवधाने स्वीक्रियमाणे सत्यानन्तर्याभावात् स्सटोनिवृत्तिः प्राप्नोत्येव। प्रमापकं त्वस्य "नेर्ङ्मादा-"॥२।३।७९॥ इति सूत्रस्य "द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा"॥२।३।८१॥ इति सूत्रानन्तरोपन्यासं; तत्र द्वित्वेऽपीत्यनुवर्त्तनं चाकृत्वा "नेर्ङ्मादा-"॥२।३।७९॥ इति सूत्रे ङ्मादिधातूनां सामान्यनिर्देशः। तथाहि। नेर्णत्वं तावत् प्रणिपततीत्यादिवत् प्रणिपपातेत्यादावपीष्टम्। तच्च तदैव सिध्यति यदि "नेर्ङ्मादा-"॥२।३।७९॥ इति सूत्रं "द्वित्वेऽप्यन्तेऽप्यनितेः-"॥२।३।८१॥ इति सूत्रानन्तरं क्रियते, तत्र च द्वित्वे ऽपीत्यनुवर्त्त्यते। एवं हि द्वित्वेऽप्यद्वित्वेऽपि च ङ्मादिधातुषु परेषु निर्विवादं नेर्णः सिध्यति। यत्तु तथा न कृतं किन्तु सामान्येन ङ्मादिधातव एव पठितास्तज्ज्ञायते प्रणिपततीत्यादिवत्प्रणिपपातेत्यादावपि "नेर्ङ्मादा-"॥२।३।७९॥ इत्यनेनैव णत्वं सेत्स्यति; द्वित्वजस्य पस्य धातोः स्वाङ्गत्वात्स्वाङ्गमव्यवधायीति च न्यायसद्भावादित्याशयैव। स्वाङ्गमिति किम्। पराङ्गस्य तु व्यवधायित्वमेव यथा स्यात्। तेन संचस्कारेत्यत्रैव धात्वङ्गेन द्वित्वेन समस्सटोर्व्यवधानं स्यादेव। तेन च "स्सटि समः"॥१।३।१२॥ "लुक्"॥१।३।१३॥ इति सूत्राभ्यां समो मस्य सकारलुकौ न। अस्य च व्यभिचारित्वाद् "वेः स्कन्दोक्तयोः"॥२।३।५१॥ इति षत्वसूत्रे द्वित्वसहितस्य स्कन्दो ग्रह-

हृणाद्विचिस्कन्त्सतीत्यादौ न षत्वम् । सव्यभिचारत्वप्रतिष्ठापकं तु प्रतितष्ठावित्यादौ द्वित्वव्यवधानेऽपि षत्वार्थं "स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि"॥२।३।४०॥ इति सूत्रे द्वित्वेऽपीत्युक्तिः । सा हि द्वित्वे कृते सति तस्य स्वाङ्गत्वेऽप्येतन्न्यायस्य सव्यभिचारत्वाद्व्यवधायित्वं भविष्यतीत्याशङ्कया कृता । पूर्वन्यायश्चास्यैव प्रपञ्चः; आगमानामप्यवयवतया स्वाङ्गत्वाव्यभिचारात् ॥ ११ ॥

## उपसर्गो न व्यवधायी ॥ १२ ॥

उपसर्गस्य धातोः प्राक् प्रयोग इत्येतावदेव "धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च"॥३।१।१॥ इति सूत्रेण नियमितं न पुनस्तदवयवत्वमित्यतो विभक्त्यन्तत्वेन पृथक्पदत्वाच्चोपसर्गस्य व्यवधायित्वे प्राप्तेऽयं न्यायः। यथा 'उक्षां प्रचक्रुर्नगरस्य मार्गान्'। अत्र "गुरुनाम्यादेः-"॥३।४।४८॥ इत्यामादेशे कृते आमन्तस्य कृगश्च प्रेण न व्यवधानम्। अयं भावः। कृभ्वस्ति चानु तदन्तमित्यत्रानुशब्दस्य तावदयमर्थः। व्यवहितो विपर्यस्तो वा कृभ्वस्तीनां प्रयोगो न कार्यः, किन्त्वनन्तर एवाग्रे एव च कार्य इति । यदि चात्र प्रेण व्यवधानं स्यात्तदाऽयं प्रयोगोऽसाधुरेव स्यात् । परमेतन्न्यायबलेन प्रेण व्यवधानाभवनात् साधुरेवेति। अनुमापकं त्वस्य कर्मणः पराद्गायतेष्टक्विधायके "गायोऽनुपसर्गाट्टक्"॥५।१।७४॥ इति सूत्रे उपसर्गवर्जनम् । तद्धि साम गायतीति टकि सामगी स्त्री इत्यादाविव, साम संगायतीति सामसंगायीत्यत्र सोपसर्गाद्गायतेष्टक् मा भूत्किन्तु "कर्मणोऽण्"॥५।१।७२॥ इत्यणेव भवतादित्येवमर्थं कृतम्। यदि चायं न्यायो न स्यात्तदा गायष्टक् इत्यपि सूत्रे कृते साम संगायतीत्यत्र टक्प्राप्तिरेव नास्ति; समा व्यवधानेन गायः कर्मणः परत्वाभावादित्युपसर्गवर्जनं व्यर्थमेव स्यात्। तथापि यदुपसर्गवर्जनं कृतं, तदेतन्न्यायात्कर्मगायत्योरुपसर्गेण व्यवधानं न भविष्यति। तथाच सामगीत्यत्रवत्, साम संगायीत्यत्रापि टक्प्राप्त्या सामसंगीत्यनिष्टं रूपमापत्स्यते इत्याशङ्कयैव । अयं च नैकान्तिकस्तेन समागच्छतीत्यत्र आङा व्यवधानात् "समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः"॥३।३।८४॥ इत्यात्मनेपदं न ॥ १२ ॥

## येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्॥ १३ ॥

यत्र येन वर्णादिनाऽवश्यं व्यवधानं स्यान्नत्वव्यवधानं, तत्र तद्व्यवधानेऽपि तत्कार्यं स्यादेव । अप्राप्ते प्रापणार्थोऽयं न्यायः। एवमुत्तरयोरपि वाच्यम्। यथा चार्वी गुर्वीत्यादौ स्वरोकारयोरेकव्यञ्जनान्तरितत्वेऽपि "स्वरादुतो गुणादखरोः"॥२।४।३५॥ इति ङीः सिद्धः । स्वरात्परस्याव्यवहितस्य उतो गुणवाचिशब्देष्वसंभवात । निवेदकं त्वस्य "स्वरादुत-"॥२।४।३५॥ इति सूत्रे स्वरादुत इत्युक्तिरेव । तथाहि । स्वरात्परो य उकारस्तदन्ताद्गुणवाचिनाम्नः खरुवर्जितात् स्त्रियां ङीर्वा स्यादिति ह्येतत्सूत्रार्थः । यदि चायं न्यायो न स्यात्तदा स्वरात्परस्य अव्यवहितस्य उकारस्य गुणवाचिशब्देषु कुत्राप्यसंभवादत्र स्वरादुत इत्युक्तिर्वैयर्थ्यादसङ्गतैव स्यात । तथापि यत्सा कृता तत्स्वरोकारयोरवश्यंभाविन एकव्यञ्जनव्यवधानस्यैतन्न्यायबलादगणने स्वरात्पर उकार इत्युक्तिर्नासङ्गता भाविनीत्याशयैवेति ॥ तथा खरुवर्जनमप्यस्य ज्ञापकम् । तथाहि । स्वरात्परो य उकारस्तदन्तान्नाम्नो ङीः स्यादित्युक्ते खरुशब्दाद् ङीप्रसङ्ग एव नास्ति; स्वरोकारयोर्व्यञ्जनेन व्यवधानात्। तथापि यत् खरुवर्जनं कृतं, तज्ज्ञापयति स्वरोकारयोरेकव्यञ्जनव्यवधानमवश्यं स्यादेवेति कृत्वा एतन्न्यायबलादेकव्यञ्जनव्यवधानं सदपि न गण्यते इति । तथाच खरुशब्देऽप्येकेनैव व्यञ्जनेन व्यवधानसद्भावात् "स्वरादुत-"॥२।४।३५॥ इत्यप्युक्ते ङीप्रसङ्गः स्यादिति हेतोः खरुवर्जनम्। येन नाव्यवधानमिति किम्। ज्युंङ् गतौ इत्यस्माण्णिगि सनि च जुज्यावयिषति; अत्र निमित्तभूताया अवर्णान्ताया अन्तस्थाया जेन व्यवधानाद् द्वित्वे सति पूर्वस्य उकारस्य "ओर्जान्तस्थापवर्गेऽवर्णे"॥४।१।६०॥ इति इर्न, यतो यत्राव्यवधानं न संभवत्येव तत्रैव व्यवहितमाद्रियते नान्यत्र। "ओर्जान्तस्था-"॥४।१।६०॥ इत्यत्र तु यियविषतीत्यादावव्यवहितोऽप्यन्तस्था संभवति; ततो जुज्यावयिषतीत्यत्र व्यवहितान्तस्थाया न ग्रहणम् । अस्यानात्यन्तिकता तु नाभाति ॥ १३ ॥

## ऋकारापदिष्टं कार्यं ऌकारस्यापि ॥ १४ ॥

यथा कृपौङः सनि "वृद्भ्यः स्यसनोः"॥३।३।४५॥ इति परस्मैपदे चिक्लृ-

प्सति; अत्र निर्निमित्तत्वात्प्रथमं "ऋरलृलं कृपोऽकृपीटादिषु"॥२।३।९९॥ इति ऋत लृत्वे पश्चाद् द्वित्वे "ऋतोऽत्"॥४।१।३८॥ इत्यनेन लृतोऽप्यत् सिद्धः । संवादकं त्वस्य "दूरादामन्त्रस्य-"॥७।४।९९॥ इति सूत्रे ऋवर्जस्वरस्य प्लुतत्वमुक्त्वाऽपि पुनर्लृग्रहणम् । तद्धि ऋनिषेधे एतन्न्यायाद् लृनिषेधोऽपि मा प्रसाङ्क्षीदित्यतः कृतम् । चलश्चायम् । "ऋलृति ह्रस्वो वा"॥१।२।२॥ इत्यत्र ऋलृतोरुभयोरुक्तेः । यद्यपि च "दूरादामन्त्रस्य-"॥७।४।९९॥ इत्यस्य वृत्तौ ऋवर्णग्रहणे लृवर्णस्यापीति रीत्याऽयं न्यायः पठितोऽस्ति; तथापि लृकारस्य प्रायः क्वचित्प्रयोगायोगाद् ऋकारापदिष्टं लृकारस्यापीत्येवात्रोचानम् । "ऋरलृलम्-"॥२।३।९९॥ इत्यस्य न्यासे एवमपि पाठदर्शनाच्च ॥ १४ ॥

## सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि ॥ १५ ॥

तदादेशस्येत्यनेन भूतपूर्वकस्तद्वदुपचार इति न्यायस्यैव प्रपञ्चोऽयमिति ज्ञेयम् । यतो यः किल सकारादेशः शकारः स भूतपूर्वकरीत्या सकार एव गण्यते इत्येवास्य तात्पर्यम् । उदाहरणं यथा । षस्च् गतौ । अस्य "षः सोष्ट्यैष्ठिवष्वष्कः"॥२।३।९८॥ इति षस्य से "सस्य शषौ"॥१।३।६१॥ इति स्चः सस्य शे यङ्लुपि दिवि "व्यञ्जनादेः-"॥४।३।७८॥ इति तल्लुक्येतन्न्यायात् "संयोगस्यादौ स्कोर्लुक्"॥२।१।८८॥ इति सकारादेशस्य शस्य लुकि, चस्य कत्वे च असासक् इति सिद्धम् । तदादेशस्येति किम् । भवान् शेते; अत्र शस्य "ङ्नः सः-"॥१।३।१८॥ इति न त्सः । ज्ञापकं त्वस्य "ङ्नः सः त्सोऽश्चः"॥१।३।१८॥ इत्यत्र श्चवर्जनम् । तद्धि भवान् श्चोततीत्यादौ शस्य त्सत्वाभावार्थम् । एतन्न्यायाभावे च शस्य त्सत्वप्राप्तिरेव नास्ति "ङ्नः सः-"॥१।३।१८॥ इति भणनात् । एवं सत्यपि यत् श्चवर्जनं कृतं तदेतन्न्यायं ज्ञापयति । ननु श्चवर्जनेन सकारापदिष्टं शकारस्यापीत्येतावन्मात्रस्यैव ज्ञप्तिः कृता; श्चमध्ये अविशिष्टस्यैव शकारस्य दर्शनात् । तेन तदादेशस्येत्यंशस्यान्यत्किमपि ज्ञापकं वाच्यम् । मैवम् । अस्यैव ज्ञापकस्य अखण्डस्यापि न्यायस्य ज्ञापने सामर्थ्यसद्भावात् । कथमिति चेत् । उच्यते । अश्च इत्यनेन तावत् श्च्युत्यादीनां श्चो वर्ज्यते; नत्वन्यः कश्चिदसंभवात् । तस्मिंश्च श्चे शः सकारादेश एवास्ति; "सस्य शषौ"

॥१।३।६१॥ इत्यनेन तस्य कृतत्वात् । ततश्च सकारादेशस्यैव श्वस्थशकारस्य सकारकार्यं ज्ञापयता श्चवर्जनेनाखण्डोऽप्ययं न्यायो ज्ञापित एव । चञ्चलता त्वस्य न नश्चेतासि चञ्चूर्यते ॥ १५ ॥

## ह्रस्वदीर्घापदिष्टं कार्यं न प्लुतस्य ॥ १६ ॥

ह्रस्वदीर्घस्थाननिष्पन्ने प्लुते भूतपूर्वकस्तद्वदिति न्यायेन ह्रस्वदीर्घनाम्नोच्चारोक्तकार्याणां प्राप्तौ तन्निषेधार्थोऽयं न्यायः । तत्र ह्रस्वापदिष्टं यथा । हेराज३न्निह । अत्र परत्वान्नित्यत्वाच्च "दूरादामन्त्रस्य-"॥७।४।९९॥ इत्यनेन पूर्वं प्लुते कृते तस्मात्परस्य नस्य "ह्रस्वान् ङणन-"॥१।३।२७॥ इति न द्वित्वम् । अत्रांशे ज्ञातिकरं त्वस्य "ह्रस्वान् ङणन-"॥१।३।२७॥ इति सूत्रे ह्रस्वादिति सामान्योक्तिरेव । तथाहि । अप्लुतरूपात् ह्रस्वात्तावत् ङणनां द्वित्वमिष्टम्; प्लुतरूपात्तु नेष्टम् । तथापि सूत्रे ह्रस्वादिति सामान्येनैव यदूचे तदेतन्न्यायाशयैव । दीर्घापदिष्टं यथा । "अदीर्घाद्विराम-"॥१।३।३२॥ इति सूत्रे दीर्घवर्जनेऽपि, दीर्घस्थाननिष्पन्नप्लुतस्यैतन्न्यायबलेन वर्जनं न जातम् । तथाच हे गो ३ त्त्रात, हे गो ३ त्रात इत्यत्र दीर्घस्थाननिष्पन्नप्लुतादपि परस्य तकारस्य "अदीर्घाद्विराम-"॥१।३।३२॥ इत्यनेन वा द्वित्वं सिद्धम् । ख्यातिकरं चास्य "अनाङ्माङो दीर्घाद्वा च्छः"॥१।३।२८॥ इत्यनेनैव सिद्धेऽपि दीर्घस्थाननिष्पन्नात् प्लुतात्परस्य छस्य द्वित्वविकल्पार्थं "प्लुताद्वा"॥१।३।२९॥ इति सूत्रकरणम् । तथाहि । आगच्छ भो इन्द्रभूते ३ च्छत्रमानय, आगच्छ भो इन्द्रभूते ३ छत्रमानयेत्यत्र छस्य द्वित्वविकल्पस्तावत् "अनाङ्माङ-"॥१।३।२८॥ इत्यनेनापि यद्यसेत्स्यत्तदैतदर्थं "प्लुताद्वा"॥१।३।२९॥ इति सूत्रं नाकरिष्यत् । परमेतन्न्यायात् "अनाङ्माङो दीर्घात्-"॥१।३।२८॥ इति दीर्घापदिष्टं कार्यं प्लुतस्य न भावीत्याशङ्क्यैव पृथक् "प्लुताद्वा"॥१।३।२९॥ इति सूत्रं कृतम् । अनित्यता त्वस्य नेक्ष्यते॥१६॥

## संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं न तदन्तस्य ॥ १७ ॥

संज्ञेति संज्ञासूत्राणि । प्रत्ययः किल प्रकृतिमाक्षिपति, प्रकृतिं विना प्रत्य-

यानुत्पत्तेरित्यतः प्रत्ययमात्रग्रहणेनापि तदन्तग्रहणे प्राप्ते तन्निषेधार्थोऽयं न्यायः। तत्र संज्ञाधिकारे यथा; "स्त्यादिर्विभक्तिः"॥१।१।१९॥ इत्यत्र स्त्याद्यन्तं विभक्तिरित्यर्थो न, किन्तु स्त्यादिरेव प्रत्ययो विभक्तिसंज्ञ इत्येवार्थः । स्फातिकरं त्वस्य संज्ञासूत्राधिकारस्थिते "तदन्तं पदम्"॥१।१।२०॥ इति सूत्रे अन्तशब्दस्तथाहि । यदि तावदयं न्यायांशो न स्यात्तदा सा पदमित्युक्तेऽपि प्रत्ययः प्रकृतिमाक्षिपतीति तदन्तविधिर्लभ्यत एवेति किमर्थमन्तशब्दः प्रयुज्येत । परमेतन्न्यायांशसद्भावात् "तदन्तं पदम्"॥१।१।२०॥ इत्यस्मिन् संज्ञासूत्रे तदन्तविधिर्न लप्स्यते इत्याशङ्कयात्रान्तशब्दः प्रयुक्तः । चपलता त्वत्रांशे न प्रतिभाति॥ उत्तरपदाधिकारे यथा। "न नाम्येकस्वरात्खित्युत्तरपदेऽमः"॥३।२।९॥ इति सूत्रादनुवर्त्तमानोत्तरपदाधिकारस्थे "कालात्तनतर-"॥३।२।२४॥ इति सूत्रे तनाद्याः प्रत्ययाः केवला एव ग्राह्याः, नतु तदन्तनामानि । संज्ञोत्तरपदाधिकार इति किम् । अन्यत्र तु प्रत्ययान्तस्यैव ग्रहः। यथा "नेमार्द्धप्रथमचरमतयायाल्पकतिपयस्य वा"॥१।४।१०॥ इत्यत्र तयायप्रत्ययान्तानामेव ग्रहणमस्ति । व्यक्तिकरं त्वस्योत्तरपदाधिकारस्थे "नत्रा खित्कृदन्ते रात्रेः"॥३।२।११७॥ इति सूत्रे अन्तशब्दस्तथाहि। यदि तावदयं न्यायांशो न स्यात्तदाऽत्रापि खित्कृतीत्येवोक्तेऽपि प्रत्ययः प्रकृतिमाक्षिपतीति तदन्तविधिर्लभ्यत एवेति किमर्थमन्तशब्दः प्रयुज्यते । परमेतन्न्यायांशसद्भावादत्र तदन्तविधिर्न लप्स्यते इत्याशङ्कयात्राप्यन्तशब्दः प्रयुक्तः । चटुलत्वाच्चात्र "नेन्सिद्धस्थे"॥३।२।२९॥ इत्यत्रोत्तरपदाधिकारेऽपीनन्तस्य ग्रहस्तेन स्थण्डिलशायीत्यत्र इनन्ते शायिनि परे "तत्पुरुषे कृति"॥३।२।२०॥ इत्यनेन प्राप्तायाः सप्तम्यलुपो निषेधोऽभूत् ॥ १७ ॥

## ग्रहणवता नाम्ना न तदन्तविधिः ॥ १८ ॥

निर्देशे सतीति शेषः । साक्षान्नामग्रहणेन यस्य यत्कार्यमूचे तत्कार्यं तस्य नाम्नः समासादिना समुदायान्तभूतस्य सतो न स्यात् । यथा सूत्रप्रधानो नडः सूत्रनडस्तस्यापत्यम् "अत इञ्"॥६।१।३१॥ इतीञि, अनुशतिकादित्वादुभयपदवृद्धौ, सौत्रनाडिः; अत्र सूत्रनडशब्दात् "नडादिभ्य आयनण्"॥६।१।५३॥ इत्यायनण् नाभूत् । ननु काऽत्र न्यायापेक्षा, सूत्रनड इत्यस्य नडादिभ्योऽ-

न्यत्वेनायनणः प्राप्तेरेवाभावात् । उच्यते । गवेन्द्र इत्यत्रवद् गवेन्द्रयज्ञ इत्यत्रे-न्द्रयज्ञशब्देऽपि परे इन्द्ररूपावयवप्राधान्यविवक्षया "इन्द्रे"॥१।२।३०॥ इत्यने-नात्र आदेशो यथा स्यात्तथाऽत्र नडरूपावयवप्राधान्याविवक्षायां सूत्रनडशब्दा-दप्यायनण् प्राप्नोति; परमेतन्न्यायेन निषिद्धत्वादेव न स्यात् । इत्थं चावयव-प्राधान्यविवक्षा यदि क्रियते तदैवास्य न्यायस्यावकाशः स्यात् । अन्यथा तु नामग्राहमुक्तं कार्यं तदन्तस्य क्वापि प्राप्नोत्येव नेति निरवकाशत्वमेवास्य न्यायस्य प्रसज्येत । ततश्च नामग्राहमुक्तस्य कार्यस्यावयवप्राधान्यविवक्षया तन्नामान्त-स्यापि प्राप्तौ तन्निषेधार्थोऽयं न्यायः । उपपादकं चास्य "मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते"॥२।४।१०२॥ इत्यत्रान्तेऽपीति । तथाहि । इदं तावन्मालभारीतिवदु-त्पलमालभारीत्यादावपि ह्रस्वसिद्ध्यर्थं कृतम् । यदि चावयवप्राधान्यविवक्षया माला-वदुत्पलमालेत्यादेरपि ह्रस्वः प्राप्नुवन् स्यात्तदा किमर्थमन्तेऽपीति कुर्यात । परं माले-त्यस्य नामग्राहं विहितो ह्रस्व एतन्न्यायादुत्पलमालेत्यादेर्न प्राप्नोतीत्यतोऽन्तेऽपीति करणं सफलम् । अस्य च तरलत्वात्, द्व्याश्रये 'प्रियासृजोऽसावपृणद्विडस्ना' (सर्ग २ श्लो० ६७) इत्यत्र प्रियासृजो द्विडस्ना इति स्थानद्वये समासान्तगस्याप्यसृजो "दन्त-पादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस् हृदसन् यूषन्नुदन् दोषन् यकञ्छकन्वा"॥२।१।१०१॥ इति वा असनादेशः । तरलत्वनिवेदकस्तु "केवल-सखिपतेरौः"॥१।४।२६॥ इत्यत्र केवलशब्दः । स हि प्रियसखौ नरपतावित्यादौ ङेरौत्वाभावार्थः । यदि चायं न्यायोऽतरलः स्यात्तदा सखिपतेरौरित्यपि सूत्रे कृते प्रियसखौ नरपतावित्यादौ औत्वनिषेधः सिध्यत्येवेति किमर्थं केवलशब्दः प्रयुज्येत; यत्तु प्रयुक्तस्तदेतन्न्यायस्य तरलत्वादेवेति ॥ उपपदविधिषु न तद-न्तविधिरित्यपि न्यायोऽस्ति । अस्यार्थः । यत्रामुकोपपदाद्धातोरमुकः प्रत्ययः स्यादिति विधीयते तत्र तदुपपदं यदि समासादिना अन्तर्भूतं स्यात्तदा स विधिर्न स्यात् । यथा योगक्षेमौ करोतीतिशीला योगक्षेमकरी; अत्र क्षेमश-ब्दस्य समासान्तगत्वात् "क्षेमप्रियमद्रभद्रात् खाण्"॥५।१।१०५॥ इत्यनेन क्षेमोपपदकृगो विहितौ खाणौ न । किन्तु "हेतुतच्छीलानुकूलेऽशब्दश्लोक-कलहगाथावैरचाटुसूत्रमन्त्रपदात्"॥५।१।१०३॥ इति ट एव । खाणोर्भवने तु

योगक्षेमंकरा, योगक्षेमकारीति च स्यात् । ज्ञापकं त्वस्य "नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्ताच्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञौ"॥५।१।१२८॥ इति सूत्रे तदन्तग्रहणम् । तथाहि । इदं तावदनग्नो नग्नोभवतीति नग्नंभविष्णुर्नग्नंभावुक इत्यादाविव, अननग्नो अनग्नो भवत्यनग्नंभविष्णुरनग्नंभावुक इत्यादावपि खिष्णुखुकञ्प्रत्ययार्थम् । यदि चोपपदाविधिषु न तदन्तविधिरिति न्यायो न स्यात्तदा अनग्नं भविष्णुरित्यादावपि नग्नशब्दादिरूपावयवप्राधान्यविवक्षया खिष्णुखुकञौ सिध्यत एवेति कुतस्तदर्थं तदन्तग्रहणं क्रियेत । यत्तु कृतं तदेतन्न्यायशङ्कयैवेति । परं ग्रहणवता नाम्नेति न्यायेनायमपि न्यायः स्वकुक्षावेव निक्षिप्तः । उपपदविधिष्वप्युपपदानां नामान्येव गृहीत्वा कार्याणामुक्तत्वात् ॥ तथा ग्रहणवता नाम्ना न तदादिविधिरित्यपि न्यायः सोदाहरणज्ञापकोऽर्थतो व्याकरणे दृश्यते । तथाहि । न्यङ्कुशब्दस्यौणादिकस्याव्युत्पत्तिपक्षे, न्यङ्कोर्मृगविशेषस्येदं नैयङ्कवं, न्याङ्कवमित्यत्र यथा "न्यङ्कोर्वा"॥७।४।८॥ इत्यनेन न्यङ्कुशब्दस्य यकारात्प्रागैकारो विकल्पेन स्यात्तथा न्यङ्कुचर्मण इदं न्याङ्कुचर्मणमित्यत्रावयवप्राधान्यविवक्षया प्राप्तोऽपि "न्यङ्कोर्वा"॥७।४।८॥ इत्यैकारविकल्पो न स्यात्; एतन्न्यायेन निषेधात् । ज्ञापकं चास्य "द्वारादेः"॥७।४।६॥ इत्यत्र द्वारादीनां तदादिविधेरवयवप्राधान्यविवक्षया प्राप्तस्याप्येतन्न्यायेन निषिद्धत्वात्तत्प्रतिप्रसवकरणार्थं "न्यग्रोधस्य केवलस्य"॥७।४।७॥ इति सूत्रकरणम् । तथाहि । द्वारे नियुक्त इति वाक्ये "तत्र नियुक्ते"॥६।४।७४॥ इत्यनेनेकणि दौवारिक इत्यत्र "द्वारादेः"॥७।४।६॥ इत्यनेन केवलस्य द्वारशब्दस्य वकारात्प्रागौकारो यथा स्यात्तथा द्वारपालस्यापत्यं दौवारपालिरित्यत्र द्वारशब्दादिकस्य द्वारपालेति रूपसमुदायस्यापि वकारात्प्रागौकार इष्टः; सचावयवप्राधान्यविवक्षया सिध्यन्नेवाभूत्, परं ग्रहणवता नाम्ना न तदादिविधिरिति न्यायेन निषिद्धस्ततो द्वारादीनां तदादिविधिरपि स्यात्। न्यग्रोधस्य तु तदादिविधिर्न स्यात् किन्तु केवलस्यैव स्यादित्यनया रीत्या द्वारादीनां तदादिविधिभवनज्ञापनार्थं "न्यग्रोधस्य केवलस्य"॥७।४।७॥ इति सूत्रं कृतम्। अस्यार्थोदि चैवम्। ञ्णिति तद्धिते परे न्यग्रोधशब्दस्य केवलस्य यो यकारस्तस्मात्प्रागैकारः स्यात् । यथा न्यग्रोधस्य विकारो

नैयग्रोधो दण्डः । केवलस्येति किम् । न्यग्रोधमूले भवा न्याग्रोधमूलाः शालय इति । तदयं भावः । द्वारादीनां तदादिविधिस्तावत्सूरेरिष्टः; न्यग्रोधस्य तु नेष्टः । यदि च ग्रहणवता नाम्ना न तदादिविधिरित्ययं न्यायो न स्यात्तदा न्यग्रोधशब्दं द्वारादिमध्ये एव पठित्वा एवमुच्यते; यदुत द्वारादीनामवयवप्राधान्यविवक्षा क्रियते, तेन तदादिविधिरपि स्यात् । न्यग्रोधस्य तु नानिष्टार्थेति न्यायादवयवप्राधान्यविवक्षाया अकरणेन केवलस्यैव स्यान्नतु न्यग्रोधादिसमुदायस्येति । एवं च यथेष्टमेव सर्वे प्रयोगाः सिध्येयुः । तथापि यत्सूरिणेत्थं न कृतं, तत्रायमेवाभिसन्धिर्यदुत विवक्षास्तदैव सफलीस्युर्यदि तासां बाधकः कश्चिन्न्यायो न स्यात् ; इह तु ग्रहणवता नाम्ना न तदादिविधिरिति न्यायोऽस्ति; तेन च न्यग्रोधस्य केवलस्यैव य ऐकारविधिरिष्यमाणोऽस्ति स एव सिध्यति; द्वारादीनां तु यस्तदादिविधिरिष्टोऽस्ति स प्रत्युत बाध्यते । तेन द्वारादीनां तदादिविधिभवनं कथमपि ज्ञापितं विलोक्यते इति विचिन्त्य तज्ज्ञापनार्थं "न्यग्रोधस्य केवलस्य"॥७।४।७॥ इति सूत्रं कृतम् । तेन च एवं ज्ञापितं, यदुत न्यग्रोधस्य केवलस्यैव स्यात् , द्वारादीनां तु तदादिविधिरपि स्यादिति । तदेवं द्वारादीनां तदादिविधिज्ञापनाय यत् "न्यग्रोधस्य केवलस्य" ॥७।४।७॥ इति सूत्रं कृतं तदेतन्न्यायशङ्कयैवेति । परमेतस्य न्यायस्येदृक् सूत्रपाठः साक्षात् क्वापि न दृष्ट इत्यतोऽसौ पृथग् न दर्शितः॥ १८ ॥

## अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १९ ॥

अन्-इन्-अस्-मन्-इत्येषां ग्रहणान्यर्थवताऽनर्थकेन च स्वेनेति शेषः । तदन्तविधिमनन्तादिविधिं प्रवर्त्तयन्ति । अनाद्यन्तानां कार्ये कर्त्तव्ये सार्थकवदनर्थका अप्यनादयो ग्राह्या इत्यर्थः । अर्थवद्ग्रहणे इत्यस्यापवादोऽयं न्यायः । तत्रान् सार्थको यथा । राजिधातोः "उक्षितक्षि-"(उणा-९००) इत्यौणादिके अनि, राजा । स्त्री चेद्राज्ञी, "स्त्रियां नृतोऽस्वस्रादेर्ङीः"॥२।४।१॥ इति ङीः । अनर्थको यथा । अश्नोतेः "षप्यशौभ्याम्-"( उणा-९०३ ) इत्यौणादिके तनि

अष्टन्; ततो बहुव्रीहौ प्रियाष्टूणः पश्य । उभयत्रापि "अनोऽस्य"॥२।१।१०८॥ इत्यनो अल्लोपः सिद्धः । इन् सार्थको यथा । दण्डोऽस्यास्ति "अतोऽनेकस्वरात्" ॥७।२।६॥ इतीनि, दण्डी । अनर्थको यथा । स्रगस्यास्ति "अस्तपोमायामेधास्रजो विन्"॥७।२।४७॥ इति विनि, स्रग्वी । उभयत्रापि "इन्हन्पूष-"॥१।४।८७॥ इति दीर्घः । अस् सार्थको यथा । आप्नोतेः "आपोऽपाप्ता-" (उणा-९६४) इत्यौणादिके असि, धातोरप्सरादेशे च, अप्सराः । अनर्थको यथा । खरस्येव नासिकाऽस्य "खरखुरान्नासिकाया नस्"॥७।३।१६०॥ इति नासिकाया नसादेशे, खरणाः । उभयत्रापि "अभ्वादेः-"॥१।४।९०॥ इति दीर्घः । मन् सार्थको यथा । स्यतेः "स्यतेरीच्च वा" (उणा-९१५) इत्यौणादिके मनि, स्यतेरात ईत्त्वे च; सीमा । अनर्थको यथा । महतो भावः "पृथ्वादेरिमन्वा"॥७।१।५८॥ इति इमनि, महिमा; तमतिक्रान्ता अतिमहिमा स्त्री । उभयत्रापि "मनः"॥२।४।१४॥ इति ङीनिषेधः। उपलक्षणादतुरपि सार्थकवदनर्थकोऽपि ग्राह्यः । तत्र सार्थको यथा । किं प्रमाणमस्य "इदं किमोऽतुरियूकियू चास्य"॥७।१।१४८॥ इत्यतुप्रत्यये किमः कियादेशे च कियान् । अनर्थको यथा । गावोऽस्य सन्ति "तदस्यास्त्यस्मिन्निति मतुः" ॥७।२।१॥ इति मतौ, गोमान् । उभयत्रापि "अभ्वादेः-"॥१।४।९०॥ इति दीर्घः । उद्भावकं त्वस्य न्यायस्यासूलक्षणेंऽशे "अभ्वादेरत्वस-"॥१।४।९०॥ इत्यत्राभ्वादेरिति ।तथाहि । पिण्डं ग्रसते इति क्विपि पिण्डग्र इत्यादौ, दीर्घनिषेधार्थं तावदभ्वादेरित्युक्तम्, तत्र च प्राप्तिरेव नास्ति; ग्रसतेरसोऽनर्थकत्वादर्थवद्ग्रहणे इति च न्यायात् । परमेतन्न्यायादनर्थकस्याप्यसो दीर्घप्राप्तिं संभाव्याभ्वादेरित्युक्तम् । न च पिण्डग्र इत्यादि विनाऽपि; स्त्रियमसत्यस्यति वेति क्विपि, स्त्र्यः इत्यादौ असूधातोर्दीर्घत्वनिषेधार्थं "अभ्वादेः-"॥१।४।९०॥ इत्युक्तं भावीति वाच्यम् । यत एतन्मात्रनिषेधार्थत्वे अनसोऽत्वस इति सूत्रं कृत्वा अस्धातुवर्जस्यासन्तस्येति व्याख्यायेत । यत्तु तथा अकृत्वा "अभ्वादेः-"॥१।४।९०॥ इति व्यापकं वचः प्रोचे, तत्पिण्डग्र इत्याद्यपेक्षयैवेति । अस्य च न्यायस्य इनंशे शैथिल्यात् सुपथी स्त्रीत्यत्र पथिन्शब्दस्यौणादिकत्वादव्युत्पत्तिपक्षे इनोऽनर्थकत्वात् "इनः कच्"॥७।३।१७०॥ इति कच् नाभूत् । एवं शेषांशेष्वपि ज्ञापकं शैथिल्यं चोन्नाव्यम् ॥१९॥

## गामादाग्रहणेष्वविशेषः ॥ २० ॥

यत्र गा-मा-दा इति सूत्रे निर्दिष्टं स्यात्तत्र गाङ् गतौ, गैं शब्दे इत्येतौ; मांक् माने, मांङ्क् मानशब्दयोः, मेंङ् प्रतिदाने इत्येते; दारूपाश्चाविशेषेण ग्राह्याः। लक्षणप्रतिपदोक्तयोरित्यादिन्यायानां यथायोगमपवादोऽयं न्यायः। तथैव चाग्रे दर्शयिष्यते। तत्र गाग्रहणे यथा गातेर्गायतेर्वा यङ्लुपि आशीःक्याति, जागेयाद्ग्रामं गीतं वा; अत्रोभयोरपि "गापास्थासादामाहाकः"॥४।३।९६॥ इति एः सिद्धः। अन्यथा गायतेर्गारूपस्य लाक्षणिकत्वाल्लक्षणप्रातिपदोक्तयोरिति न्यायेन प्रतिपदोक्तगारूपस्य गातेरेव ग्रहणं प्राप्नोति नतु गायतेः। यद्वा। कृत्रिमाकृत्रिमयोरिति न्यायात् कृत्रिमगारूपस्य गायतेरेव ग्रहणं प्राप्नोति, नतु गातेरिति। संभावकं त्वत्र "गायोऽनुपसर्गाट्टक्"॥५।१।७४॥ इत्यत्र गातिं निषेद्धुं गाय इति निर्देशः। अत्रांशे क्वचित् स्थगनीयश्चायम्। "गस्थकः"॥५।१।६६॥ इत्यत्र ग इति सामान्यनिर्देशेऽपि गाङं व्युदस्य गायतेरेव ग्रहणात् ॥ १ ॥ माग्रहणे यथा। मात्योर्मयतेश्च क्तयोर्मितः, मितवान्। अत्र "दोसोमास्थ इः"॥४।४।११॥ इति इः। संभावकं त्वत्र "ईर्व्यञ्जनेऽयपि"॥४।३।९७॥ इत्यस्य वृत्तौ मा इति मां-मांङ्-मेंङां ग्रहणमित्युक्तिः। एतन्न्यायांशाभावे हि मा इतिकथने अदाद्यनदाद्योरिति न्यायात्कृत्रिमाकृत्रिमयोरिति न्यायाद्वा मेंङ एव ग्रहणं प्राप्नोति नतु मात्योः। यद्वा। लक्षणप्रतिपदोक्तयोरिति न्यायात् मात्योरेव ग्रहणं प्राप्नोति नतु मेङः। तथा च मां-मांङ्मेङां ग्रहणमित्युक्तिरसङ्गतैव स्यात्। अत्राप्यंशेऽस्य परिप्लवत्वात् "मिमीमादामित्स्वरस्य"॥४।१।२०॥ इत्यत्र सामान्येन ग्रहणार्थं बहुवचनयत्नः कृतः। यदि ह्येष न्यायांशोऽपरिप्लवः स्यात्तदाऽनेनैव सामान्यग्रहणसिद्धेः किमर्थं बहुवचनयत्नः क्रियेतेति ॥ २ ॥ दाग्रहणे यथा। "प्राज्ज्ञश्च"॥५।१।७९॥ इत्यत्र ज्ञारूपसाहचर्याद्दारूपमेव प्रत्यत्राग्रहः कार्यो नतु दासंज्ञां प्रति इत्येतावदेव संसाध्य तदन्वेतन्न्यायबलादविशेषेण षड्भ्योऽपि दारूपेभ्यो डः कृतः। यथा डुदांग्क्, दाम् वा; धनप्रदः। दों; वृक्षप्रदः। देंङ्; पुत्रप्रदः। दांव्क्; केदारप्रदः। दैंव्; भाजनप्रद इति। एतन्न्यायांशाभावे तु अदाद्यनदाद्योरिति न्यायाद्दांग्क् दांव्क्वर्जानां चतुर्णामेव ग्रहणं प्राप्नोति। यद्वा। लक्षणप्रतिपदोक्तयोरिति न्याया-

द्वौं-देङ्-दैंव्वर्जानां त्रयाणामेव । यद्वा। कृत्रिमाकृत्रिमयोरिति न्यायादांग्क्-दाम्-दांव्क्वर्जानां त्रयाणामेवेति । सत्त्वावकरं त्वत्रांशे "दाट्धेसिशदसदोरुः"॥५।२।३६॥ इत्यत्र धयतेः पृथगुक्त्या दासंज्ञां प्रत्याग्रहोऽत्र न कार्य इत्येव वक्तुं शक्येऽपि षडपि दारूपा इह ग्राह्या इत्यप्युक्तिः । तथाहि । धयतेः पृथगुक्त्या तावद्दासंज्ञां प्रत्याग्रहस्य निरासोऽत्र सिध्यतु, दारूपषड्कग्रहस्तु कथं सिध्यति; अदाद्यनदाद्योरित्यादिन्यायैर्बहुविघ्नत्वात् । तथापि यद्दारूपाः षडपीह ग्राह्या इत्युक्तं तत्प्रस्तुतन्यायमदाद्यनदाद्योरित्यादिन्यायानामपवादं स्मृत्वैवेति । अत्रांशे पारिप्लवता त्वस्य न दृश्यते ॥ ३ ॥ स्वं रूपं शब्दस्येत्यस्य न्यायांशस्य प्रपञ्चोऽयं न्यायः । इतोऽग्रे बलाबलोक्तिन्याया दश ॥ २० ॥

## श्रुतानुमितयोः श्रौतो विधिर्बलीयान् ॥ २१ ॥

श्रुतः सूत्रे साक्षाच्छब्देनोक्तः; अनुमितः परिभाषया, पूर्वानुवृत्ताधिकारादिना वा आरोपितः । श्रुतानुमितयोरिति संबन्धे षष्ठी । विध्योरिति चात्र शेषः । तत्र तु निर्द्धारणे षष्ठी । श्रुतस्यायं "तस्येदम्"॥६।३।१६०॥ इत्यणि, श्रौतः । ततश्चैवमर्थः । श्रुतानुमितयोः सम्बन्धिनोर्द्वयोर्विध्योः संभवतोर्मध्ये श्रुतस्य विधिर्बलीयानिति स एव क्रियते । यथा "ॠतां क्ङितीर्"॥४।४।११६॥ तीर्णम् । अत्र श्रुतस्य ॠत एव इर्, नतु "अनेकवर्णः सर्वस्य"॥७।४।१०७॥ इति परिभाषया ॠदन्तधातोः सर्वस्य । यत ॠदन्तत्वमॄतामित्यस्य धातुविशेषणत्वेन "विशेषणमन्तः"॥७।४।११३॥ इति परिभाषया आरोपितत्वादनुमितमित्युच्यते । ततोऽनुमितस्य ॠदन्तत्वस्य विधिर्निर्बलत्वान्न क्रियते । ॠदन्तस्य विधिः क इति चेत् । उच्यते । इरोऽनेकवर्णत्वात् "अनेकवर्णः-"॥७।४।१०७॥ इति परिभाषया यदखण्डस्य ॠदन्तधातोरिर् प्राप्नोति स ॠदन्तत्वस्य विधिरिति । सत्ताकरं चास्य सूत्रे ॠतामॄत इत्यकृत्वा ॠतामित्येव निर्देशस्तथाहि । ॠतामित्यस्य तावद् ॠदन्तानामिति व्याख्या । इर् चादेशोऽनेकवर्णः । ततश्च "अनेकवर्णः-"॥७।४।१०७॥ इति परिभाषया सर्वस्य ॠदन्तधातोरिर् प्राप्नोति । इष्यते तु ॠमात्रस्यैव । तथाच "अनेकवर्णः-"॥७।४।१०७॥ इति परिभाषाया अवकाशनिरासाय ॠतामॄत इर् इति निर्देष्टुं युक्तम् । यत्तु ॠतामित्येव निर्दिष्टं तदेतन्न्या-

यात् श्रुतस्य ऋत एवेर् भावी, नत्वनुमितस्य ऋदन्तस्येत्याशयैव । अस्य चासार्वदिकत्वात् "मनोरौ च वा"॥२।४।६१॥ इत्यत्र वाशब्दो ङीप्रत्यये पूर्वाधिकारानुवृत्तत्वादनुमिते सम्बध्यते, नतु श्रुते औकारे । तेन मनोर्भार्या, धवयोगे "मनोरौ च वा"॥२।४।६१॥ इति वा ङ्यां, ङीयोगे औदैतोश्च मनावी, मनायी, मनुरिति त्रैरूप्यं सिद्धम्। औ चेत्यस्य वाशब्दसम्बन्धने तु ङीप्रत्ययस्य नित्यमेव भवनात्; मनावी, मनायी, मन्वी इति त्रैरूप्यं स्यात् ॥ निर्दिश्यमानस्यैवादेशाः स्युरित्यपि न्यायोऽस्ति । यथा "यस्वरे पादः-"॥२।१।१०२॥ इत्यत्र पाद इत्यस्य तावद् पादन्तस्येति व्याख्या । पादन्तस्येत्येतच्चाधिकृतस्य नाम्न इत्यस्य विशेषणम् । ततश्च पद्इत्यादेशस्यानेकवर्णत्वात् "षष्ठ्यान्त्यस्य"॥७।४।१०६॥ इति परिभाषां बाधित्वा "अनेकवर्णः सर्वस्य"॥७।४।१०७॥ इति परिभाषया पादन्तस्य नाम्नः सर्वस्य पद्भावः प्राप्नोति । परं पाद इत्येतावत एव स्यात्, तस्यैव सूत्रे निर्देशात् । यथा द्वौ पादावस्य द्विपात्; "पात्पादस्याहस्त्यादेः" ॥७।३।१४८॥ इत्यनेन पादस्य पाद्भावः । ततष्टायां तेन द्विपदा; अत्र "यस्वरे-पादः-"॥२।१।१०२॥ इत्यनेन पाद्इत्येतावत एव पद्भाव इति ॥ परं सोऽप्येतन्न्यायस्यांशभूत एव नतु पृथग्भूतः; तत्साध्यस्याप्यनेन सिद्धेः । कथमिति चेत् । उच्यते । "यस्वरे पादः-"॥२।१।१०२॥ इत्यत्र तावत् पूर्वाधिकारानुवृत्तं नाम्न इति पदं विशेष्यमस्ति, तस्य च पाद इति विशेषणम्; ततश्च "विशेषणमन्तः"॥७।४।११३॥ इति परिभाषया पादन्तस्येत्यर्थो लब्धः । परमिदं पादन्तत्वं परिभाषयाऽऽरोपितत्वादनुमितमित्युच्यते । ततश्च पादन्तस्य यो विधिः, पद्इत्यादेशस्यानेकवर्णत्वात् "अनेकवर्णः-"॥७।४।१०७॥ इति परिभाषया अखण्डस्य पादन्तस्य पद्इत्यादेशप्राप्तिरूपः स निर्बलत्वान्न क्रियते; किन्तु सूत्रे श्रुतस्य पाद्इत्येतावत एव यः पद्इत्यादेशविधिः स एव बलीयस्त्वात् क्रियते इति ॥ २१ ॥

## अन्तरङ्गानपि विधीन् यबादेशो बाधते ॥ २२ ॥

प्रत्ययाश्रितत्वात् पदद्वयापेक्षत्वाच्च बहिरङ्गोऽपीति शेषः । यथा प्रशम्य इत्यत्र "अहन्पञ्चमस्य क्विक्ङिति"॥४।१।१०७॥ इति दीर्घत्वं प्रकृत्याश्रितत्वा-

देकपदापेक्षत्वाच्चान्तरङ्गमपि बाधित्वा पूर्वं यप्; पश्चात्तु धुडादिप्रत्ययाभावान्न दीर्घत्वम्। ख्यातिदं त्वस्य प्रजग्ध्येतिसिध्यै "यपि चादो जग्ध्"॥४।४।१६॥ इत्यत्र यपि चेति वचस्तथाहि। यदि क्वि परे जग्धादेशः पश्चाच्च यप् क्रियते तदाऽपि प्रजग्ध्येति सिध्यत्येव; तथापि यद् यपि चेत्यूचे तदेतन्न्यायाद्यपः सर्व-कार्येभ्यः पूर्वं भवनादेव। आहुश्च—

तादौ किति जग्धि सिद्धे यपि चेति यदुच्यते।
ज्ञापयत्यन्तरङ्गाणां यपा भवति बाधनम्॥ १॥

कादाचित्कता त्वस्य न चित्ते चञ्चुरीति॥ २२॥

## सकृद् गते स्पर्द्धे यद्बाधितं तद्बाधितमेव॥ २३॥

गते इति धातूनामनेकार्थत्वाज्जाते; गत्यर्था ज्ञानार्था इति न्यायाज्ज्ञाते इति वा। द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोरेकत्रोपनिपातः स्पर्द्धः। द्वयोः सूत्रयोः स्पर्द्धे सति यत्सूत्रं केनापि हेतुना प्रथमं बाधितं तत्सूत्रं बाधित-मेवेति कोऽर्थः बाधकसूत्रप्रवृत्त्यनन्तरमपि न प्रवर्त्तते। यथा द्वयोः कुलयोः; अत्र द्वि ओस् इति स्थिते आदेशादागम इति न्यायात्प्रथमं "अनामस्वरे-"॥१। ४।६४॥ इति नोऽन्तः प्राप्तः; स च परत्वादन्तरङ्गत्वाच्च "आ द्वेरः"॥२।१।४१॥ इत्य-त्वेन बाधितस्ततस्तस्मिन् कृते, "एद्बहुस्-"॥१।४।४॥ इत्येत्वे च कृते, पुनः प्राप्तोऽपि नोऽन्तो न स्यात्। स्फातिदं चास्य "उदच उदीच्"॥२।१।१०३॥ इत्यत्र णिवर्जनम्। तद्धि उदञ्चमाचष्टे इति णौ, उदयतीति रूपसिद्ध्यर्थम्। तच्च उदीचादेशकरणा-दनु यदि "त्र्यन्त्यस्वरादेः"॥७।४।४३॥ इत्यन्त्यस्वरादिलुक् प्रवर्त्यते तदाऽपि सिध्यत्येव। परं विशेषविहितत्वेनान्त्यस्वरादिलोपात्प्रागेवोदीचादेशे पश्चाच्चै-तन्न्यायादन्त्यस्वरादिलुकोऽप्रवृत्तेरुदीचयतीत्येव स्यान्न तु उदयतीति। ततो णि-वर्जनं कृतम्। तथाच उदीचादेशं विनाऽन्त्यस्वरादिलुकैवोदयतीति सिद्धम्। अस्य चानिश्चितत्वात्प्रियतिसृणः कुलस्येत्यत्रागमात्सर्वादेश इति न्यायेन प्रथमं बाधितोऽपि नागमास्तिस्रादेशानन्तरं कृतः॥ २३॥

## द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधकः॥ २४॥

द्वित्वे सति यः पूर्वोऽवयवस्तस्य विकारेषु कर्त्तव्येषु यो बाधको विधिः स स्वं बाध्यविधिं बाधितुं न प्रभवति। स्पर्द्धे परः, बलवन्नित्यमनित्यादित्याद्यपवादोऽयम्। यथा अचीकरत्; अत्र "लघोर्दीर्घ-"॥४।१।६४॥ इति दीर्घविधिः परत्वे नित्यत्वे च सत्यपि सन्वद्भावं बाधित्वा पूर्वं न प्रवर्त्तते। प्रवृत्तौ त्वचाकरदिति स्यात्। प्रकाशकं चास्य "आगुणावन्यादेः"॥४।१।४८॥ इत्यत्र न्यादिवर्जनम्। तथाहि। वनीवच्यते, नरिनर्त्ति इत्यादावात्वाभावार्थं तावन्न्यादिवर्जनं कृतं, आत्वाभावश्चान्यथाऽपि सेत्स्यत्येव; न्यागमादेरात्वापवादत्वात्। परमेतन्न्यायान्न्यागमादय आत्वं बाधितुं नालं भविष्यन्ति। तथाच न्यागमादीनामात्वस्य च भवने वानीवच्यते, नारिनर्त्तीत्याद्यनिष्टरूपाणि भविष्यन्तीत्याशङ्क्यैव न्यादिवर्जनं चक्रे। अनिश्चयता त्वस्य न प्रतिभासते॥ २४॥

## कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट् च॥ २५॥

वृद्धिरिति सामान्योक्तेऽप्यत्राडागमबाधिका "स्वरादेस्तासु"॥४।४।३१॥ इति विहितैव ग्राह्या। अन्यथाऽटस्तया बाध्यस्तद्बाध्य इति विशेषणानुपपत्तेः। बलवन्नित्यमनित्यात्, अन्तरङ्गं बहिरङ्गादित्याद्यपवादोऽयं न्यायः। तत्र वृद्धिर्यथा। ऋंक् गतौ; ह्य० अन्; ऐयरुः। अधिपूर्व इंङ्क् अध्ययने; ह्य० अन्त; अध्यैयत। अत्र "धातोरिवर्ण-"॥२।१।५०॥ इति इयादेशे कृते, अकृतेऽपि च प्राप्नोतीति कृताकृतप्रसङ्गित्वेन नित्याऽपि वृद्धिरियादेशं कृत्वैव क्रियते। पूर्वं वृद्धौ हि आयरुरध्यायतेति स्यात्। अत्रांशे प्रत्यायकं त्वस्य; इंण्क् गतौ, अधिपूर्व इंक् स्मरणे, असक् भुवि, इत्येषां ह्य० अनि परे क्रमेण आयन्, अध्यायन्, आसन् इत्यादिरूपेषु यत्वाल्लुग्भ्यां पूर्वमेव, परत्वात् "स्वरादेस्तासु"॥४।४।३१॥ इति वृद्धौ सिध्यत्स्वप्येतद्रूपासिद्ध्यर्थं "एत्यस्तेर्वृद्धिः"॥४।४।३०॥ इति वृद्धिसूत्रकरणम्। तद्धि एतन्न्यायांशाभावे "स्वरादेस्तासु"॥४।४।३१॥ इत्यनेनैव वृद्धिसिद्धेर्व्यर्थमेव स्यात्। एतन्न्यायांशसद्भावे तु इंण्क्इंकोः क्रमेण "ह्विणोरप्विति-"॥४।३।१५॥ इति "इको वा"॥४।३।१६॥ इत्याभ्यां यत्वस्य, अस्तेः "श्नास्यो-

लुंक्"॥४।२।९०॥ इत्यल्लुक एव च प्राप्तेस्तत्करणादनु च स्वरादित्वाभावात् "स्वरादेस्तासु"॥४।४।३१॥ इति वृद्ध्यभवने आयन्नित्यादि न सिध्येदित्यतो यत्वाल्लुकोर्बाधनार्थं पुनः "एत्यस्तेः-"॥४।४।३०॥ इति वृद्धिसूत्रविधानं सार्थकम्। अत्रांशे अनियतश्चायम् । तेन सम्पूर्वं ऋं प्रापणे, ऋंक् गतौ वा, अस्माद्-द्यतन्यां "समो गमृच्छि-"॥३।३।८४॥ इत्यात्मनेपदे, समार्ष्टेत्यादौ "धुड्ह्रस्वात्-" ॥४।३।७०॥ इति प्राप्तात् सिज्लोपात्प्रागेव नित्यत्वाद् वृद्धिः । पश्चात्तु धुड्-ह्रस्वाभावान्न सिज्लोपः ॥ अड् यथा । अचीकरदित्यादौ प्रागुक्तहेतुना नित्योऽप्यल्पनिमित्तत्वादन्तरङ्गोऽपि चाडागमो "लघोर्दीर्घ-"॥४।१।६४॥ इति दीर्घे कृतैव क्रियते; पूर्वमटि हि स्वरादित्वाद्दीर्घो न स्यात् । अस्मिन्नंशे त्वस्य प्रत्यायकं "अड्धातोः-"॥४।४।२९॥ इति सूत्रे अन्विातिपदानुपन्यासस्तथाहि । यदि नित्यत्वादिहेतुना प्रथममट् करिष्यते, तदा धातोः स्वरादित्वभवनेन "लघोर्दीर्घ-"॥४।१। ६४॥ इत्यस्याप्रवृत्त्या अचीकरदित्यादि न सेत्स्यतीत्यतः सर्वकार्येभ्यः पश्चाद-ड्भवनार्थं "अड्धातोः-"॥४।४।२९॥ इति सूत्रे अन्विति पदं न्यस्यते तदा वरमितिजानताऽप्याचार्येण यत्तत्रान्विति पदं नोपन्यस्तं, तदन्विति पदोपन्यासं विनाऽप्यनेन न्यायांशेन सर्वकार्येभ्यः पश्चादेवाड् भविष्यतीत्याशयैव । अत्राप्यंशेऽनियतोऽयम् । "उपसर्गात्सुग्सुव-"॥२।३।३९॥ इति सूत्रे अट्यपी-त्युक्तेस्तथाहि । अभ्यषुणोदित्यादावड्व्यधानेऽपि षत्वार्थं तावदट्यपीत्युक्तम् । यदि चायं न्यायांशो नियतः स्यात्तदा षत्वस्य प्रथममेव भवनात्पश्चादड्भवने तद्व्यवधानेन न किञ्चिद्विनश्यतीत्यतोऽट्यपीति न वक्तव्यं स्यात् । यत्तूक्तं तदस्य न्यायांशस्यानियतत्वादेव ॥ २५ ॥

## पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात्सन्धिकार्यम् ॥ २६ ॥

अन्तरङ्गं बहिरङ्गादित्याद्यपवादोऽयम् । तत्र पूर्वपदकार्यं यथा । अग्निश्चेन्द्रश्च अग्नेन्द्रौ; अत्र पूर्वपदस्याग्नेरितो "वेदसहश्रुतावायुदेवतानाम्"॥३।२।४१॥ इत्यात्वमेव द्वन्द्वसमासापेक्षत्वाद्बहिरङ्गमपि प्रथमं क्रियते, नतु तदनपेक्षत्वादन्तरङ्गमपि "समानानां तेन-"॥१।२।१॥ इति दीर्घत्वरूपसन्धिकार्यम्। यदि त्वन्तरङ्गत्वात्प्रथमं तत् क्रियते तदा पूर्वोत्तरपदावयवजस्य इकारस्योभयस्थाननिष्पन्नोऽ-

न्यतरव्यपदेशभागिति न्यायाद्यदि अग्नी इत्येवंरूपपूर्वपदान्तत्वं व्यपदिश्यते, तदा तस्य "वेदसहश्रुता-"॥३।२।४१॥ इत्यात्वे, अग्नान्द्राविति । यदि तूत्तरपदादित्वं व्यपदिश्यते, तदा अग्न् इत्येवंरूपपूर्वपदान्तस्य नस्य आत्वे अगेन्द्रावित्युभयथाऽप्यनिष्टे रूपे स्याताम् । ततश्च आत्वरूपं पूर्वपदकार्यं कृत्वैव यथाप्राप्तं सन्धिकार्यं क्रियते । किंचात्र प्राप्तम्; "अवर्णस्येवर्णादिना-"॥१।२।६॥ इत्येत्त्वमिति । अस्योपपादकं तु "य्वः पदान्तात्प्रागैदौत्"॥७।४।५॥ इति सूत्रे वृद्धिप्राप्तौ सत्यामित्यधिकारानुवर्त्तनम् । तथाहि । अस्य सूत्रस्य तावदयमर्थः । क्ङिति तद्धितप्रत्यये परे इवर्णोवर्णयोर्वृद्धिप्राप्तौ सत्यां तयोरेव स्थाने यौ यकारवकारौ ताभ्यां प्राग् यथासंख्यमैदौतौ स्याताम् । यथा व्याकरणं वेत्त्यधीते वा "तद्वेत्त्यधीते"॥६।२।११७॥ इत्यनेनाणि, वैयाकरणः; स्वश्वस्यायं "तस्येदम्" ॥६।३।१६०॥ इत्यणि, सौवश्व इति । यदि चायं न्यायांशो न स्यात्तदा व्याकरणस्वश्वशब्दयोर्निष्पादनकाल एव यत्ववत्वभवनादिवर्णोवर्णयोः कथं वृद्धिप्राप्तिः स्यात्तदभावे च कथमेतत्सूत्रेण ऐदौतौ स्याताम् । परमनेन न्यायांशेन वि आकरण अण्; सु अश्व अण् इति स्थिते वि सु शब्दयोराणि, वृद्धिरूपं पूर्वपदकार्यमेव प्रथमं प्राप्स्यति नतु यत्ववत्वरूपं सन्धिकार्यमिति संभाव्य वृद्धिप्राप्तौ सत्यामित्यधिकारः सूरिणाऽनुवर्त्तयांचक्रे। तत्प्राप्तौ च सत्यां "य्वः पदान्तात्-"॥७।४।५॥ इति सूत्रकरणसामर्थ्याद् वृद्धिं बाधित्वा यत्ववत्वे एव स्यातां, तत ऐदौतौ चेति। अनैयत्यं त्वत्रांशे न दृश्यते ॥१॥ उत्तरपदकार्यं यथा। परमश्चासावयं च परमायम्; अत्रोत्तरपदस्येदमो "अयमियं पुंस्त्रियोः सौ"॥२।१।३८॥ इत्ययमादेश एव स्यादिपुंल्लिङ्गापेक्षत्वाद्बहिरङ्गोऽपि प्रथमं क्रियते, नतु तदनपेक्षत्वेनान्तरङ्गत्वात् "अवर्णस्येवर्णादिना-" ॥१।२।६॥ इत्येत्त्वरूपं सान्धिकार्यम् । यदि त्वन्तरङ्गत्वात् पूर्वं तत्क्रियते तदोभयस्थानानिष्पन्न इतिन्यायादेकारस्येदम्शब्दसम्बन्धितायामेकदेशविकृतस्यानन्यत्वात् एदम्इत्यस्यायमादेशे परमयमिति स्यात् । एतः पूर्वपदसंबन्धितायां तु एतः स्थितौ दम्इत्यस्यैव अवयवे समुदायोपचारेण इदम्रूपत्वव्यपदेशादयमादेशे परमेऽयमिति। द्वेधाऽपि चानिष्टापत्तिः । ततश्चायमादेशरूपमुत्तरपदकार्यं कृत्वैव यथाप्राप्तं सन्धिकार्यं क्रियते । किंचात्र प्राप्तम्; "समानानां तेन-"

॥१।२।१॥ इति दीर्घत्वमिति । अत्रांशे उपपादकं त्वग्नेन्द्रौ देवते अस्येति "देवता"॥६।२।१०१॥ इत्यणि, आग्नेन्द्रं सूक्तमित्यत्र प्रथमं पूर्वपदकार्यं कार्यमित्यस्यार्थस्यानेन न्यायेन स्थापितत्वात् "वेदसहश्रुता-"॥३।२।४१॥ इत्यनेनाग्नेरित आत्वकरणादनु अणि परे "देवतानामात्वादौ"॥७।४।२८॥ इत्युभयपदवृद्धौ प्राप्तायामिन्द्रशब्दरूपस्योत्तरपदस्य "आतो नेन्द्रवरुणस्य"॥७।४।२९॥ इत्यनेन वृद्धिनिषेधः; एतन्न्यायाभावे हि स व्यर्थ एव स्यात् । तथाहि । इन्द्रशब्दस्य तावद् द्वौ स्वरौ; तत्राद्यः सन्धिना ह्रियते; एतन्न्यायाभावेऽन्तरङ्गत्वात्प्रथमं "अवर्णस्येवर्णादिना-"॥१।२।६॥ इत्येत्त्वभवनात् । अपरश्चाणि परे परत्वात् "अवर्णेवर्णस्य"॥७।४।६८॥ इति लुका ह्रियते । तत इन्द्रशब्दस्य स्वराभावाद् वृद्धिप्राप्तेरेवाभावाद्व्यर्थस्तन्निषेधः स्यात् । एवं सति यत् स कृतस्तज्ज्ञापयति पूर्वमुत्तरपदकार्ये कृते पश्चात्सन्धिकार्यं कार्यम् । तथाच इन्द्रस्याद्यस्वरसद्भावात्सार्थको वृद्धिनिषेध इति । अत्रांशे चास्यानैयत्यात् परम इर्यस्य तस्य परमेः । अत्र इकारस्य "ङित्यदिति"॥१।४।२३॥ इत्येत्वरूपमुत्तरपदकार्यं प्रथमं न । तथा कृते हि परमैरित्यनिष्टं स्यात् ॥ २६ ॥

## संज्ञा न संज्ञान्तरबाधिका ॥ २७ ॥

यथा प्रस्थ इत्यत्र प्रस्य गत्युपसर्गसंज्ञयोः सद्भावाद् "गतिकन्यः-"॥३।१।४२॥ इति तत्पुरुषः, "उपसर्गादातोडोऽश्यः"॥५।१।५६॥ इति डश्च युगपदभूताम् । प्रभासकं त्वस्य प्रादीनां "धातोः पूजार्थ-"॥३।१।१॥ इत्युपसर्गसंज्ञाकरणम् । यदि हि "ऊर्याद्यनुकरण-"॥३।१।२॥ इत्यनन्तरसूत्रक्रियमाणया गतिसंज्ञयोपसर्गसंज्ञा बाध्यमाना स्यात्तदा निष्फलत्वादुपसर्गसंज्ञां कुर्यादेव न । यत्तु सा कृता तदेतन्न्यायात्तदबाधसंभावनयैव । अनिर्णयश्चायम् । "स्पृहेर्व्याप्यं वा"॥२।२।२६॥ इत्यत्र वाग्रहणात्तथाहि । यदि तावदयमैकान्तिकः स्यात्तदा कर्मसंप्रदानसंज्ञयोर्बाध्यबाधकभावाभावादुभयोरपि तयोः प्रवृत्तेर्विकल्पाकरणेऽपि विभक्तिद्वयेन चैत्रं चैत्राय वा स्पृहयतीति द्वैरूप्यं सिध्यत्येवेति किमर्थं विकल्पः क्रियते । तथापि यद्विकल्पः कृतस्तदेतन्न्यायस्यानिर्णयत्वेन संप्रदानसंज्ञया कर्मसंज्ञाया बाधसंभावनयैव ॥ प्रतिकार्यं संज्ञा भिद्यन्ते इत्यपि

न्यायोऽस्ति । अस्य चेत्थमवतारः । "करणं च"॥२।२।१९॥ इति सूत्रेण दिवः करणस्य युगपत्कर्मकरणसंज्ञयोर्विधानादक्षानक्षैर्वा दीव्यतीति द्वैरूप्यं सिद्धम् । तथा अक्षैर्देवयते मैत्रश्चैत्रेणेत्यत्राक्षशब्दस्य करणत्वात् तृतीया भवति; कर्मत्वाच्च "गतिबोधाहारार्थशब्दकर्मनित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम्"॥२।२।५॥ इति सूत्रेण प्राप्तं नित्याकर्मकलक्षणमणिक्कर्तुः कर्मत्वं न स्यात् । तथा अक्षशब्दस्य कर्मत्वादेव देवयतेः "अणिगि प्राणिकर्तृकानाप्याण्णिगः"॥३।३।१०७॥ इत्यनेन प्राप्तमकर्मकलक्षणं परस्मैपदं न स्यात् ॥ अत्राह परः । नन्वक्षैर्देवयते मैत्रश्चैत्रेणेत्यादौ संज्ञाद्वययौगपद्यं चरितार्थम्; ततोऽक्षानक्षैर्वा दीव्यतीत्यादौ सत्यपि संज्ञाद्वये स्पर्द्धे परत्वात्करणत्वहेतुका तृतीयैव भवितुमर्हति नतु द्वितीया ॥ अत्रोत्तरम् । सत्यमेतत् । परं प्रतिकार्यं संज्ञा भिद्यन्ते इति न्यायो यदा प्रयुज्यते तदा द्वितीयाऽपि स्यादेव । तथाहि । अस्य न्यायस्यार्थस्तावदयम् । कार्यं कार्यं प्रति संज्ञाऽभिधायकानि सूत्राणि भिद्यन्ते । अयं भावः । यद्यपि "करणं च"॥२।२।१९॥ इति सूत्रे युगपत्संज्ञाद्वयमस्ति, परमक्षानक्षैर्वा दीव्यतीति प्रयोगद्वयं यद् दृश्यते तत्सिद्ध्यर्थं प्रतिकार्यं संज्ञा भिद्यन्ते इतिन्यायेन "करणं च"॥२।२।१९॥ इति सूत्रमावृत्त्या द्विधा व्याख्यायते । यथा दिवः करणं कर्म स्यादिति । तथा दिवः करणं करणं स्यादिति । इयानेव चार्थश्चकारेण सूच्यते; अव्ययानामनेकार्थत्वात् । तत्राद्यव्याख्याने इदं सूत्रं कर्मसंज्ञाया एव विधायकं न तु करणसंज्ञाया इति कल्प्यते । एवं च सिद्धं निर्बाधमक्षान् दीव्यतीति । यतः स्पर्द्धे सति परत्वं चिन्त्यते; आद्यव्याख्यापक्षे च करणसंज्ञाया विधानस्यैवाभावेन तृतीयाप्राप्तेरप्यभावात्केन सह स्पर्द्ध इति । द्वितीयव्याख्या त्वक्षैर्दीव्यतीति प्रयोगस्य तवाप्यभिमतत्वेन निर्विवादैव । एतच्चैवं व्याख्याद्वयमक्षानक्षैर्वा दीव्यतीति प्रयोगद्वयसिद्ध्यर्थमेव कृतम् । ननु क्रियतां व्याख्याद्वयम्; आरोप्यतां च तद्बलादेकस्यापि सूत्रस्य सूत्रद्वयरूपत्वं; परं तस्मिन्नेव सूत्रद्वये विहितयोः कर्मकरणसंज्ञयोर्यः स्पर्द्धः स कथं निवर्त्तते; तदनिवृत्तौ च पूर्वेण "करणं च"॥२।२।१९॥ इति सूत्रेण विहितायाः कर्मसंज्ञायाः, परेण "करणं च" ॥२।२।१९॥ इति सूत्रेण विहितया करणसंज्ञया यो बाधः प्राप्नोति स केन बार्यते ।

उच्यते। यदा "करणं च"॥२।२।१९॥ इत्यस्य सूत्रद्वयरूपत्वमारोपितं नासीत्तदा स्पर्द्ध आसीद्यदा तु तस्य सूत्रद्वयरूपत्वमारोपितं तदाऽनयोः संज्ञयोः स्वस्वसूत्रनिष्ठत्वात् स्पर्द्धो निवर्त्तते । एकस्यापि गृहस्यान्तरा भित्तिप्रक्षेपादिना गृहद्वयरूपकरणे तन्निवासिसपत्न्योरिव । अन्यथा हि सूत्रद्वयरूपत्वारोपयत्नस्य व्यर्थतैवापद्येत । एवं च निवृत्ते स्पर्द्धे कः कस्य बाधां कुर्यादिति । तदत्रेदं तत्त्वम्। "करणं च"॥२।२।१९॥ इति सूत्रेण संज्ञाद्वयविधानमक्षैर्देवयते मैत्रश्चैत्रेणेत्यादौ चरितार्थम्। तेनाक्षानक्षैर्वा दीव्यतीत्यादावुक्तयुक्त्या तृतीयैव प्राप्नोति; प्रयोगश्च द्वितीयाया अपि दृश्यते; अतस्तत्समर्थनार्थं प्रतिकार्यं संज्ञा भिद्यन्ते इति न्यायबलं गृहीत्वैकस्यापि "करणं च"॥२।२।१९॥ इति सूत्रस्य भिन्नभिन्नव्याख्याभ्यां सूत्रद्वयरूपत्वमारोप्य तत्प्रथमसूत्रेण द्वितीयाऽप्यत्रानीयते इति । परमनेनापि प्रतिकार्यं संज्ञा भिद्यन्ते इति न्यायेन पूर्वोक्तयुक्त्या "करणं च"॥२।२।१९॥ इति सूत्रस्य भिन्नाभिन्नव्याख्याभ्यां सूत्रद्वयरूपत्वारोपणसामर्थ्यादुभयोरपि संज्ञयोः स्पर्द्धस्याभावोद्भावनेन कर्मसंज्ञायाः करणसंज्ञया अबाधनं व्यवस्थापयता संज्ञा न संज्ञान्तरबाधिकेति न्यायस्यैवार्थो भङ्ग्यन्तरेण समर्थित इति नासौ पृथग् दर्शितः ॥ २७ ॥

## सापेक्षमसमर्थम् ॥ २८ ॥

पदान्तरसापेक्षं पदं समासादिपदविधीन् प्राप्तुं नालम्। यथा ऋद्धस्य राज्ञः पुरुषः । अत्र राजशब्दस्य ऋद्धविशेषणसापेक्षत्वात्पुरुषशब्देन सह न समासः । अस्य प्रतिभासकं त्वीदृशेषु समासादि निषेद्धुं यत्नाकरणम् । "समर्थः पदविधिः"॥ ७।४।१२२॥ इति परिभाषायाः प्रपञ्चोऽयम्। अस्य विसंवादित्वाच्च देवदत्तस्य दासभार्येत्यादौ दासशब्दस्य देवदत्तस्येतिपदसापेक्षत्वेऽपि समासः। देवदत्तस्य यो दासस्तस्य भार्येति ह्यत्रार्थः। नचाग्रेतनन्यायेन देवदत्तपदसापेक्षस्यापि दासशब्दस्यात्र समास इति शङ्क्यम् । दासशब्दस्य क्रियया सह सामानाधिकरण्यप्रयोगाभावेना प्रधानत्वात्तत्र च प्रधानस्यैव सापेक्षत्वे समासाभ्यनुज्ञानात् ॥ २८ ॥

## प्रधानस्य तु सापेक्षत्वेऽपि समासः ॥ २९ ॥

यस्य क्रियया सह सामानाधिकरण्येन प्रयोगस्तत्प्रधानम् । यथा राजपुरुषोऽस्ति दर्शनीयः इत्यादौ समासात् प्रागवस्थायां पुरुषशब्दस्य स्वविशेषणदर्शनीयशब्दसापेक्षत्वेऽपि राजशब्देन सह तत्पुरुषः । य एव हि पुरुषत्वस्याधिकरणं स एवास्तीतिक्रियाया अपीति क्रियया सह सामानाधिकरण्यप्रयोगेण पुरुषशब्दस्य प्रधानत्वात् । विभासकं त्वस्य पुरुषोव्याघ्रः शूर इत्यादौ पुरुषव्याघ्रशब्दयोः समासाभावार्थं "उपमेयं व्याघ्राद्यैः साम्यानुक्तौ"॥३।१।१०२॥ इति सूत्रे साम्यानुक्तिग्रहणम् । तथाहि । व्याघ्र इव व्याघ्रः । तदनु पुरुषश्चासौ व्याघ्रश्च पुरुषव्याघ्र इत्यादौ "उपमेयं व्याघ्राद्यैः साम्यानुक्तौ"॥३।१।१०२॥ इत्यनेन पुरुषव्याघ्रशब्दयोः कर्मधारयसमास इष्यते। यदा त्वत्रैव व्याघ्रत्वोपचारकारणं शूरत्वमुपन्यस्यते। कथम्। शूरः पुरुषः; अतएव शूरत्वेन व्याघ्र इव व्याघ्र इति। तदा पुरुषो व्याघ्रः शूर इत्यत्र पुरुषव्याघ्रशब्दयोः कर्मधारयसमासो नेष्यते, ततस्तन्निवारणार्थं सूरिणा समाससूत्रे साम्यानुक्तिग्रहणं कृतम्। व्याख्यातं चैवम् । यदि साम्यहेतुः पदं नोपन्यस्यते तदा कर्मधारयसमासः स्यात्; इह तु साम्यहेतुः शूरपदं प्रयुक्तमित्यतो न समास इति । यदि च पुरुषशब्दस्य स्वविशेषणशूरशब्दसापेक्षतया असमर्थत्वात्पूर्वन्यायेनैवात्र समासाभावः सिध्यन् स्यात्तदा किमिति तदर्थं साम्यानुक्तिग्रहणं क्रियते । यत्तु कृतं तत्पूर्वन्यायबाधकस्यैतन्न्यायस्य सद्भावादेतन्न्यायेन शूरशब्दसापेक्षस्यापि पुरुषशब्दस्य प्रधानत्वाद्व्याघ्रशब्देन सह समासोऽनिष्टोऽपि भविष्यत्येवेत्याशङ्कयैव। अस्य विसंवादिता तु न वेद्यते । पूर्वन्यायस्यापवादश्चायमुत्तरश्च । अपि च । किं हि वचनान्न भवतीति न्यायस्य प्रपञ्चोऽयमुत्तरश्च ॥ २९ ॥

## तद्धितीयो भावप्रत्ययः सापेक्षादपि ॥ ३० ॥

यथा काकस्य कृष्णस्य भावः काकस्य कार्ष्ण्यमित्यादौ कृष्णशब्दात्काकशब्दसापेक्षादपि "पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च"॥७।१।६०॥ इति ट्यण् सिद्धः । समर्थकं त्वस्य "पुरुषहृदयादसमासे"॥७।१।७०॥ इति सूत्रे असमासे इति । अस्य सूत्रस्यार्थोदि तावदेवम्। असमासविषयात्पुरुषशब्दाद् भावे कर्मणि

वा वाच्ये अण् त्वतलौ च स्युः। यथा पुरुषस्य भावः कर्म वा पौरुषम्, पुरुषत्वं, पुरुषता। असमास इति किम्। परमस्य पुरुषस्य भावः परमपुरुषत्वमित्यादौ "भावे त्वतल्"॥७।१।५५॥ इति त्व एव स्यात्परमपौरुषमित्यण् तु न स्यादित्येतदर्थमसमासे इत्युक्तम्। यदि चायं न्यायो न स्यात्तदा समासविषयस्य पुरुषशब्दस्य परमशब्द-सापेक्षत्वेनासमर्थत्वादेवात्राण् न भविष्यति सापेक्षमसमर्थमिति न्यायादिति कि-मित्यणभावार्थमसमासे इति कुर्यात्। यत्तु कृतं तत् सापेक्षमिति न्यायबाधकैत-न्न्यायसद्भावादेव। अग्राह्यता पुनरस्य न दृश्यते ॥ ३० ॥

## गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः ॥ ३१ ॥

यद्यपि "नाम नाम्नैकार्थ्ये समासो बहुलम्"॥३।१।१८॥ इत्यनेन नाम्नो नाम्ना सह समास उक्तस्तथाऽप्यैकार्थ्ये इत्यनेन समासान्तर्वर्त्तिविभक्तिलुप्करणा-देवं ज्ञापितं यदुत विभक्त्यन्तानामेव समास इति। ततश्चोभयोरपि पदयोर्विभ-क्त्यन्तत्वे प्राप्ते कृदन्तस्योत्तरपदस्याविभक्त्यन्तत्वनियमार्थोऽयं न्यायः। तत्र गते-र्यथा। विकिरति पक्षाविति विष्किरी इत्यादौ पक्ष्यर्थमात्रापेक्षत्वेनान्तरङ्गत्वात्प्रथम-मेव "वौ विष्किरो वा"॥४।४।९६॥ इति स्सटि विस्किर इति स्थिते "ऊर्याद्य-नुकरण-"॥३।१।२॥ इति कृतगतिसंज्ञस्य वेः "नाम्युपान्त्यप्रीकृगृज्ञः कः"॥५।१।५४॥ इति कप्रत्ययान्तेन स्किरेत्यनेन सह "गतिक्वन्यः-"॥३।१।४२॥ इति तत्पुरुषस्ततो "असोङसिवूसहस्सटाम्"॥२।३।४८॥ इत्यनेन स्सटः सस्य षत्वे च विष्किरः पक्षी, ततः स्त्रीत्वविवक्षायामदन्तत्वात् "जातेरयान्तनित्यस्त्रीशूद्रात्" ॥२।४।५४॥ इति ङीः सिद्धः। यदि त्वेतन्न्यायानपेक्षणाद्विभक्त्यन्तेन स्किरेत्यनेन समास इष्यते तदा कर्मादिशक्तिसंख्याद्यपेक्षत्वेन बहिरङ्गाया विभक्तेरुत्पत्तेः प्रागेव स्त्रीत्वमात्रा-पेक्षत्वेनान्तरङ्गस्य आपः प्राप्तावदन्तत्वाभावात् ङीर्न स्यात्॥ १ ॥ कारकस्य यथा। चर्मणा क्रीयते स्म चर्मक्रीती इत्यादौ चर्मन् टा क्रीत इति स्थिते चर्मेत्यस्य करणकारकस्य क्रीतेत्यनेन सह "कारकं कृता"॥३।१।६८॥ इति तत्पुरुषः। ततः स्त्रीत्वविवक्षायां "क्रीतात्करणादेः"॥२।४।४४॥ इत्यनेन क्रीतशब्दाददन्ताद्

ङीः सिद्धः । यदि तु विभक्त्यन्तेन क्रीतइत्यनेन समास इष्यते तदा प्राग्वद-तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागेवापः प्राप्तावदन्तत्वाभावात् ङीर्न स्यात् । पूर्वपदस्य तु विभक्त्यन्तत्वनियमाच्चर्मक्रीतीत्यत्र पदत्वान्नस्य लोपः ॥ २ ॥ कृत्प्रत्ययवि-धायिसूत्रे ङसिनेत्येकदेशस्य समुदायोपलक्षणत्वेन संपूर्णपञ्चमीलाभात् "विशे-षणमन्तः"॥७।४।११३॥ इति परिभाषयाऽन्तशब्दलाभाच्च पञ्चम्यन्तेन पदेनोक्तं ङस्युक्तम् । तत्र ङसिनैवोक्तस्य यथा। कच्छं पिबतीति कच्छपी इत्यादौ कच्छ अम् प इति स्थिते, "नाम्नो गमः खड्डौ च विहायसस्तु विहः"॥५।१।१३१॥ इत्यतोऽधिकृतान्नाम्नः परस्य स्थादिधातोर्विहितो यः "स्थापास्नात्रः कः"॥५।१।१४२॥ इति कप्रत्ययस्तदन्तेन पेत्यनेन सह कच्छशब्दस्य "ङस्युक्तं कृता"॥३।१।४९॥ इति तत्पुरुषः । कच्छशब्दस्य नाम्न इति ङसिनोक्तत्वात् । ततः स्त्रीत्वविवक्षायां "जातेरयान्त-"॥२।४।५४॥ इत्यनेन कच्छपशब्दाददन्ताद् ङीः। यदि तु विभक्त्यन्तेन पेत्यनेन समासः स्यात्तदा प्राग्वदापः प्राप्तावदन्तत्वाभावाद् ङीर्न स्यात् । पञ्चमीभ्यसोक्तमप्युक्तयुक्त्या ङस्युक्तमेव । तस्य यथा । विषं धरतीति विषधरी इत्यादौ विष अम् धर इति स्थिते विषशब्दस्य "आयुधा-दिभ्यो धृगोऽदण्डादेः"॥५।१।९४॥ इति सूत्रे आयुधादिभ्य इति भ्यसोक्तस्यापि ङस्युक्तत्वादच्प्रत्ययान्तेन धरेत्यनेन सह "ङस्युक्तं कृता"॥३।१।४९॥ इति तत्पुरुषः । ततः स्त्रीत्वविवक्षायां "जातेरयान्त-"॥२।४।५४॥ इति ङीः । यदि तु विभक्त्यन्तेन धरेत्यनेन समासः स्यात्तदा प्राग्वददन्तत्वाभावाद् ङीर्न स्यात ॥ ३ ॥ कीर्त्तकं चास्य कारकांशे "क्रीतात्करणादेः"॥२।४।४४॥ इत्यनेना-दन्तात् क्रीताद् ङीविधिस्तथाहि । अत्र तावत्करणादेः क्रीतादित्युक्तम् ; करणस्य आद्यवयवत्वं च समासं विना न स्यात् । एतन्न्यायाभावे च यदि विभक्त्य-न्तेन क्रीतेत्यनेन समासः क्रियते, तदा क्रीतस्यादन्तत्वं न संभवति; अन्त-रङ्गत्वाद्विभक्त्युत्पत्तेः प्रागेवापः प्राप्तेः । एवं च सति यददन्तादित्युक्तं तज्ज्ञाप-यति, कारकाणां कृदन्तैरविभक्त्यन्तैरेव समास इति । गतिङस्युक्तांशयोस्त्वस्य कीर्त्तकं विष्किरी, कच्छपीत्यादौ ङीप्रतिबन्धकाब्निषेधयत्नाकरणम् । तथाहि । विष्किरीत्यादौ तावद् ङीः सूरेरिष्टः, स च तदैव स्याद्यदि आपा शब्दस्य अद-

न्तत्वं न व्याहन्यते । यदि चोत्तरपदस्य विभक्त्यन्तत्वमिष्यते तदा विभक्तिं बाधित्वा आपो भवनाददन्तत्वं व्याहन्यत एव । एवं सत्यपि यदापं निषेद्धुं यत्नो न कृतस्तदेतन्न्यायेनोत्तरपदस्याविभक्त्यन्तत्वनियमं, तत एव विभक्त्यानयनावसरप्रसक्तस्यापो निषेधसिद्धिं, तत एव विष्किरकच्छपादिशब्दानामदन्तत्वव्याघाताभवनसिद्धिं च संभाव्यैवेति । अदृढता त्वस्य न संभवति ॥ ३१ ॥

## समासतद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिः ॥ ३२ ॥

परार्थाभिधानं वृत्तिः । अयमर्थः । वृत्तिस्तावत् त्रेधा । समासवृत्तिस्तद्धितान्तवृत्तिर्नामधातुवृत्तिश्च । यथा राजपुरुषः; औपगवः; पुत्रकाम्यतीत्यादि । तत्र समासवृत्तौ समस्यमानपदानि, शेषवृत्त्योस्तु प्रकृतिप्रत्ययौ संभूय समुदायार्थं सह ब्रुवन्तीतिरीत्या परस्यान्यस्य कोऽर्थः स्वार्थातिरिक्तस्य समुदायार्थस्य यदभिधानं सा वृत्तिः । तत्र वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा येन नाप्राप्ते इति न्यायाद्वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन तस्यानुज्ञाऽनेन न्यायेनोच्यते । तथा वृत्तिपक्षे उत्सर्गापवादरूपयोर्वृत्त्योः संभवे उत्सर्गस्य नित्यमेव बाधश्चानेन न्यायेनोच्यते । तत्र समासवृत्तिर्यथा । कायस्य पूर्वोऽशः पूर्वकायः । अत्र "पूर्वापराधरो-"३।१।५२॥ इत्यनेनांशितत्पुरुषो वाक्यं च; नतु "षष्ठ्ययत्नाच्छेषे" ॥३।१।७६॥ इत्यौत्सर्गिकः कायपूर्व इति षष्ठीसमासः । अत्र चाद्येंऽशे समासानां वृत्तिर्विकल्पेनेति रूपे उद्भावकं "नित्यं प्रतिनाऽल्पे"॥३।१।३७॥ इत्यत्र नित्यमिति वचः । तद्ध्यनेन न्यायेन प्राप्तस्य विकल्पस्य निषेधार्थम् । तेन शाकस्याल्पत्वं शाकप्रति; अत्र समास एव स्यान्न तु वाक्यम् । अत एव प्रतिर्वाक्ये उक्तो न । द्वितीयांशे तु वृत्तिविषये नित्यैवापवादवृत्तिरिति रूपे "पारेमध्येऽग्रेऽन्तः षष्ठ्या वा"॥३।१।३०॥ इत्यत्र वाग्रहणमुद्भावकम् । तद्धि पक्षे औत्सर्गिकषष्ठीसमासानुज्ञार्थम् । तेन च पारेगङ्गमिति, "पारेमध्येऽग्रेऽन्तः"॥३।१।३०॥ इत्यनेनाव्ययीभावो, गङ्गापारमित्यत्र त्वेतन्न्यायांशनिषिद्धोऽपि वाग्रहणबलादौत्सर्गिकः "षष्ठ्ययत्नात्-"॥३।१।७६॥ इति षष्ठीतत्पुरुषो, गङ्गायाः पारमित्येतत्त्वाद्यन्यायांशबलाद्वा-

क्यमिति त्रैरूप्यं सिद्धम् । यदि चायं न्यायांशो न स्यात्तदा क्रमेणोत्सर्गापवादयोः प्रवृत्तेः पक्षे औत्सर्गिकः षष्ठीसमासोऽपि सिद्ध एवेति किमिति तदनुज्ञार्थं वाग्रहणं कुर्यात् । यत्तु कृतं तदेतस्य न्यायांशस्य शङ्कयैव ॥ १ ॥ तद्धितवृत्तिर्यथा । गर्गस्यापत्यं वृद्धं गार्ग्यः; अत्र "गर्गादेः-"६।१।४२॥ इति यञ्, वाक्यं च । नत्वौत्सर्गिको गार्गिरिति "अत इञ्"॥६।१।३१॥ इति इञ् । अत्र चाद्यांशे तद्धितानां वृत्तिर्विकल्पेनेति रूपे उद्द्योतकं "नित्यं ञजिनोऽण्"॥७।३।५८॥ इत्यत्र नित्यग्रहणम् । तद्ध्यनेन प्राप्तस्य विकल्पस्य निषेधार्थम् । तेन व्यतिहारेण व्यवक्रोशनं स्त्रीलिङ्गविवक्षायां "व्यतिहारेऽनीहादिभ्यो ञः"॥५।३।११६॥ इति ञे तदनु स्वार्थे "नित्यं ञजिनोऽण्"॥७।३।५८॥ इत्यणि ङ्यां च व्यावक्रोशी । अत्र केवलञान्तो व्यवक्रोशेति प्रयोगो न स्यात्किन्त्वण्सहित एव कोऽर्थः; यथा प्रज्ञ एव "प्रज्ञादिभ्योऽण्"॥७।२।१६५॥ इत्याणि, प्राज्ञ इत्यादौ स्वार्थिकाणादीनां वाक्यमप्यस्ति । तथाऽत्र व्यवक्रोशेति प्रयोगाभवनाद्व्यवक्रोशैव व्यावक्रोशी इति वाक्यं न स्यात् । द्वितीयांशे तु वृत्तिविषये नित्यैवापवादवृत्तिरिति रूपे "वोदश्वितः"॥६।२।१४४॥ इत्यत्र वाग्रहणमस्योद्द्योतकम् । तद्धि पक्षे औत्सर्गिकाणर्थम् । तेन च औदश्वित्कमित्यत्र "वोदश्वितः"॥६।२।१४४॥ इतीकण् । औदश्वितमिति चैतन्न्यायांशनिषिद्धोऽपि वाग्रहणबलादौत्सर्गिकः "संस्कृते भक्ष्ये"॥६।२।१४०॥ इत्यण् । उदश्विति संस्कृतमित्येतत्त्वाद्यन्यायांशबलाद्वाक्यमिति त्रैरूप्यं सिद्धम् । यदि चायं न्यायांशो न स्यात्तदा क्रमेणोत्सर्गापवादयोः प्रवृत्तेः पक्षे औत्सर्गिकोऽणपि सिद्ध एवेति किमिति तदनुज्ञार्थं वाग्रहणं कुर्यात् । यत्तु कृतं तदेतन्न्यायांशशङ्कयैव ॥ २ ॥ समासतद्धितवृत्तिव्यवस्थाऽनुवादमात्रपरश्चायं न्यायो नत्वनेन नव्यं किञ्चिद्व्यवस्थाप्यते । एतत्साध्यस्य तत्तत्सूत्रैरेव सिद्धेस्तथाहि । "नित्यं प्रतिना-"॥३।१।३७॥ इत्यत्र नित्यग्रहणेन तावदीदृग्वर्जसर्वसमासेषु वाक्यमपि स्यादिति सूचितम् । "पारेमध्ये-"॥३।१।३०॥ इति सूत्रस्थवाग्रहणेन चेदृंशि वर्जयित्वाऽन्यत्र क्वाप्यपवादसमासविषये उत्सर्गसमासो न स्यात्; ईदृक्षस्थानेषु त्वपवादसमासवदुत्सर्गसमासोऽपि स्यादेवेत्यसूचि । तथा "वाऽऽद्यात्"॥६।१।११॥ इति सूत्रात्प्रवृत्तेन

बाऽधिकारेण तद्धितवृत्तौ सर्वत्र वाक्यं स्यादेवेति ज्ञापितम् । "वोदश्वितः"॥६।२।१४४॥ इति वाग्रहणेन चेदंशि वर्जयित्वाऽन्यत्र क्वाप्यपवादतद्धितप्रत्ययविषये औत्सर्गिकस्तद्धितप्रत्ययो न स्यात्; ईदृक्षस्थानेषु त्वपवादतद्धितप्रत्ययवत् उत्सर्गतद्धितप्रत्ययोऽपि स्यादेवेत्यज्ञापीति । अत एवादार्ढ्यमस्य नास्ति। व्याकरणसूत्रसाधितकार्याणामदार्ढ्यासंभवात् ॥ ३२ ॥

## एकशब्दस्यासङ्ख्यात्वं क्वचित् ॥ ३३ ॥

एकशब्दस्य प्रसिद्धिस्तावत्संख्यात्वस्यैवास्तीत्यतस्तत्प्रतिरोधार्थोऽयं न्यायः। यथैकमह इत्यत्रैकशब्दस्य सदपि सङ्ख्यात्वं न गण्यते । ततश्च "अह्नः"॥२।१।७४॥ इत्यट्समासान्ते, "नोऽपदस्य तद्धिते"॥७।४।६१॥ इत्यन्त्यस्वरादिलोपे, "अहनिर्यूहकलहाः" (लिङ्गानु० पुं० १५।३) इति पुंस्त्वे प्राप्तेऽपि "-अहः सुदिनैकतः" ( लिङ्गानु० न० ८।२ ) इति विशेषविधिना क्लीबलिङ्गत्वे एकाहमिति सिद्धम् । यदि त्वेकशब्दस्य संख्यात्वं गण्यते, तदा "सर्वांशसंख्याऽव्ययात्" ॥७।३।११८॥ इत्यनेनाटि, अनेनैव चाह्नादेशे, "अर्द्धसुदर्शनदेवनमह्ना-" (लिङ्गानु० पुं० ११।१) इति पुंस्त्वे च, एकाह्न इत्यनिष्टं रूपं प्रसज्येत । प्रवर्त्तकं चास्य "संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत्" ॥७।३।११९॥ इत्यत्र चकारेण "सर्वांशसंख्याऽव्ययात्"॥७।३।११८॥ इति सूत्रात् संख्यानुवृत्तावप्येकशब्दग्रहणम् । क्वचिदिति वचनाच्च बहुषु स्थानेष्वेकशब्दस्य संख्यात्वं गण्यत एव । तेन एकधेत्यत्र "सङ्ख्याया धा"॥७।२।१०४॥ इति धाः सिद्धः। अनित्यता त्वस्य नास्ति ॥ ३३ ॥

## आदशभ्यः सङ्ख्या सङ्ख्येये वर्त्तते न सङ्ख्याने ॥३४॥

अष्टादशसङ्ख्याऽवधि तावद्दशन्शब्दप्रयोगः स्यात्तत आदशभ्य इति कोऽर्थो दशन्शब्दस्य प्रयोगावधि अष्टादशसङ्ख्याऽवधीति यावत् । ततश्चाष्टादशसङ्ख्यावधि सङ्ख्या सङ्ख्येयेन सह सामानाधिकरण्येन प्रयोज्येत्यर्थः । यथैको द्वौ त्रयो वा यावदष्टादश घटाः, न तु घटानामिति। आदशभ्य इति किम् । एकोनविंशत्यादिसङ्ख्या तु सङ्ख्येये, सङ्ख्याने च वर्त्तते । यथैकोनविंशतिर्घटा,

घटानां वा यावन्नवनवतिः; शतं सहस्रं लक्षं कोटिर्वा घटा, घटानां वेत्यादि। उद्बोधकं त्वस्य "सुज्वाऽर्थे सङ्ख्या सङ्ख्येये सङ्ख्यया बहुव्रीहिः"॥३।१।१९॥ इत्यत्र सङ्ख्येये वर्त्तमानया सङ्ख्यया सह समासविधानम्। तथाहि। यदि तावदयं न्यायो न स्यात्तदा अमुका सङ्ख्या सङ्ख्येयवर्त्तिनीति व्यक्तिः कथं ज्ञायेत। तदज्ञाने च कथं सङ्ख्यानवर्त्तिसङ्ख्यापरिहारेण सङ्ख्येयवर्त्तिसङ्ख्यया सह समासः क्रियेतेति। एतच्चोद्बोधकमादशभ्य इति पदं व्युदस्य शेषवाक्यापेक्षया योज्यम्। सङ्ख्येये वर्त्तमानाऽपि काऽपि सङ्ख्याऽस्तीत्येतावत एवार्थस्यानेनोद्बोध्यमाणत्वात्॥ अस्य चाप्रतिष्ठत्वात् "आसन्नादूर-"॥३।१।२०॥ इत्यनेन बहुव्रीहौ "प्रमाणीसङ्ख्याद् डः"॥७।३।१२८॥ इति डे च आसन्नदशा इति कोऽर्थः नवैकादश वा; अत्र आसन्ना दशेति कोऽर्थः दश सङ्ख्या येषामिति वाक्यं सिद्धम्॥ ३४॥

## णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद्भवति॥ ३५॥

णाविति निमित्तसप्तमी। यथा स्फुरत् णौ सनि, पुस्फारयिषति; अत्र "चिस्फुरोर्नवा"॥४।२।१२॥ इति आत्वस्य णौ निमित्ते सति कृतस्य स्थानिवद्भावात् स्फु इति द्वित्वं सिद्धम्। णावित्यत्र निमित्तसप्तमी किम्। श्वेः सन्परे णौ विषयभूते सत्यन्तरङ्गत्वात् "श्वेर्वा"॥४।१।८९॥ इत्यनेन प्रथमं य्वृति तदनु वृद्धावावादेशे च णौ निमित्ते सति कृतयोर्वृद्ध्यावादेशयोः स्थानिवद्भावात् शु इति द्वित्वे, शुशावयिषति। अत्र वृद्ध्यावादेशयोः स्थानिवद्भाववद् य्वृतोऽपि स्थानिवद्भावो मा भूत्; तस्य "श्वेर्वा"॥४।१।८९॥ इत्यनेन सन्परे णौ विषये कृतत्वात्। यदि तु णाविति सामान्येन सप्तमी व्याख्यायते तदाऽत्र य्वृतोऽपि स्थानिवद्भवने श्वि इति द्वित्वे शिशावयिषतीत्यनिष्टं रूपं स्यात्। प्रपञ्चकं चास्य युक् मिश्रणे, पूग्श् पवने; आभ्यां सनि यियविषति, पिपविषतीत्यादौ पूर्वस्य उत इत्वार्थमोः पयेऽवर्णे इत्येतावतैव सूत्रेण सरत्यपि; जुं गतौ सौत्रो धातुः, यौतिपुनाती तु प्रागुक्तावेव; एभ्यो णौ सनि जिजावयिषति, यियावयिषति, पिपावयिषतीत्यादौ ण्यन्तानामपि जवत्यादीनामुत इत्वार्थं "ओर्जान्तस्थापवर्गेऽवर्णे"॥४।१।६०॥ इति बृहत्सूत्रसूत्रणम्। तथाहि। यदि तावदयं

न्यायो न स्यात्तदा जिजावयिषतीत्यादिष्वन्तरङ्गत्वात्प्रथमं वृद्ध्यावादेशौ कृत्वा पश्चाद् द्वित्वे कृते "सन्यस्य"॥४।१।५९॥ इत्यनेनैव इत्वं सिध्यतीत्यतः किमर्थं "ओर्जान्तस्था-"॥४।१।६०॥ इति बृहत्सूत्रं क्रियेत । परमेतन्न्यायेन वृद्ध्यादेः सर्वस्य स्थानिवद्भवनात् "सन्यस्य" ॥४।१।५९॥ इत्यनेन इत्वासिद्धेरुत इत्वार्थं "ओर्जान्तस्था-"॥४।१।६०॥ इत्यादिबृहत्सूत्रमेतन्न्यायाशङ्कया सूत्रितम् । अनैष्ठिकश्चायम् । तेन यस्य णिनिमित्तकृतकार्यस्य स्थानिवद्भावश्चिकीर्ष्यते तदाऽऽधारभूतो वर्णो वर्णसमुदायो वा अवर्णवान् यदि स्यात्तदैवायं न्यायः स्फुरेन्नान्यथा । तेन कृतणश्चुरादित्वात् णिचि "कृतः कीर्त्तिः"॥४।४।१२२॥ इति कीर्त्तादेशे, अचिकीर्त्तत् ; अत्र की इत्येव द्वित्वं नतु कृ इति; कीर्त्त इतिवर्णसमुदायस्य ईकारवत्त्वादवर्णवत्त्वाभावेन स्थानिवद्भावाभवनात् । ननु कथमत्रैतन्न्यायप्राप्तिः णाविति निमित्तसप्तमी, व्याख्यानात्; कीर्त्तादेशस्य चानिमित्तमेव विधानात् । सत्यम् । परं येन विना यन्न स्यात्तत्तस्यानिमित्तस्यापि निमित्तमिति न्यायात् णिच्सन्नियोगान्यथाऽनुपपन्नस्य कीर्तादेशस्य णिज्निमित्तमेवेति वक्ष्यते । "स्थानीवावर्णविधौ"॥७।४।१०९॥ इति परिभाषायाः प्रपञ्चोऽयं न्यायः ॥ इतोऽग्रे उणादयोऽव्युत्पन्नानि नामानीति न्यायं यावदेकादश न्यायाः सर्वं वाक्यं सावधारणमिति न्यायस्यानित्यत्वप्रपञ्चभूताः ॥ ३५ ॥

## द्विर्बद्धं सुबद्धं भवति ॥३६ ॥

यदर्थं व्याकरणधातुपाठादौ प्रयत्नद्वयं कृतं तद् द्विर्बद्धं कार्यं सुबद्धमिति कोऽर्थः अव्यभिचारि स्यात् । यथा असूच् क्षेपणे; अद्य० दि, आस्थत् ; अत्राङो न व्यभिचारः; अस्यतेः "शास्त्यसूवक्तिख्यातेरङ्"॥३।४।६०॥ इति सूत्रे, पुष्यादौ च पाठात् । अन्येषां तु पुष्यादिपाठितधातूनां क्वचित्तद्व्यभिचारोऽपि । यथा भगवन्मा कोपीरिति बालरामायणे । अत्र पुष्यादित्वेऽप्यङ् न । अस्य चोपदर्शकं दंशेर्यङ्लुपि दंदशीतीत्यत्र नस्य लोपः केनापि सूत्रेणाविहितोऽपि स्यादेवेति ज्ञापनार्थं "गृलुपसदचरजपजभदशदहो गर्ह्ये"॥३।४।१२॥ इत्यत्र दशेति निर्देशे कृतेऽपि पुनस्तदर्थमेव "जपजभदहदशभञ्जपशः"॥४।१।५२॥ इत्यत्रापि दशेति निर्देशः। तथाहि। इह तावत्सूरिणैवमचिन्ति; ज्ञापकेन सकृज्ज्ञा-

पितो यो विधिः स दशैकादशशब्दस्यादन्तत्ववज्ज्ञात्वनित्यतामपि भजेत्; समासान्तागमेति न्यायात्। यस्तु द्विर्ज्ञाप्यते तस्य द्विर्बद्धं सुबद्धमिति न्यायादनित्यताभीर्न स्यादित्यतो द्विरिमं ज्ञापयामीति। यदि चायं न्यायो न स्यात्तदा द्विर्ज्ञापितस्यापि विधेरनित्यतामापतन्तीं को निषेद्धुं क्षमेत। यदि परमेतन्न्यायबलेनैव द्विर्ज्ञापितविधेर्दार्ढ्यं बभूव। एतेन सूरिमते दंदशीतीत्यत्र नस्य लोपः स्यादेव। एतन्न्यायस्यानित्यताश्रयणे तु द्विर्बद्धस्यापि नलोपस्याबद्धत्वात्; केषांचिन्मते नकारलोपाभवने दंदंशीतीत्यपि स्यात्तदपि च मतं सूरेः सम्मतमेव; "जपजभ-" ॥४।१।५२॥ इत्यस्य वृत्तौ साक्षादुक्तत्वात् ॥ ३६ ॥

## आत्मनेपदमनित्यम् ॥ ३७ ॥

आत्मनेपदं यथाशिष्टप्रयोगं क्वचित् प्राप्तमपि न स्यात्, क्वचिच्चाप्राप्तमपि स्यादित्यनित्यशब्दार्थः। तत्र प्राप्तमपि न स्यात् यथा। डुलभिंष् प्राप्तौ; सम्यक् प्रणम्य न लभन्ति कदाचनापि। क्लीबृङ् अधार्ष्ट्ये; कुरूद्द्योतं क्लीबदिनपतिसुधागौ तमसि मे। क्लिशिंच् उपतापे; परार्थे क्लिश्यतः सतः। षेवृङ् सेवने; स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः। भाषि व्यक्तायां वाचि; मिथ्या न भाषामि विशालनेत्रे। तथा तर्जिण् संतर्जने; तर्जयति। भर्त्सिण् संतर्जने; भर्त्सयति। शमिण् आलोचने; निशामयति। भलिण् आभण्डने; भालयति। कुत्सिण् अवक्षेपे; कुत्सयति। वञ्चिण् प्रलम्भने; वञ्चयति। विदिण् चेतनाख्याननिवासेषु; वेदयतीत्यादि। एषु धातूनामिङित्त्वेऽप्यात्मनेपदं नाभूत्। अप्राप्तमपि स्याद्यथा। षस्जं गतौ; प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु। सज्जमानमकार्येषु। अत्रेङित्त्वाभावेऽप्यात्मनेपदम्॥ भ्राजकं चास्य एजृङ्, भ्रेजृङ्, भ्राजि दीप्ताविति भ्राजेरात्मनेपदिषु पाठेऽपि; राजृग्, टुभ्राजि दीप्तावित्यत्र पुनः पाठः। तथाहि। भ्राजेरात्मनेपदिषु द्विः पाठस्तावद् द्विर्बद्धं सुबद्धमिति न्यायेनास्यात्मनेपदाव्यभिचारज्ञप्त्यर्थः। तज्ज्ञप्त्यर्थं चेयान् यत्नस्तदा क्रियते यदि कथंचिदात्मनेपदस्य व्यभिचरणं शङ्कितं स्यात्। यदि चायं न्यायो न स्यात्तदा कुतस्तद्व्यभिचरणशङ्कोत्पद्येत। यदि परमेतन्न्यायेन तद्व्यभिचरणशङ्कोत्पादाद् भ्राजेरात्मनेपदाव्यभिचारज्ञप्त्यर्थं द्विः पाठः कृतः सार्थक इति। अस्याध्रुवत्वाच्च

"इङितः कर्त्तरि" ॥३।३।२२॥ इति विहितमेवात्मनेपदं यथाप्रयोगदर्शनमनित्यं; नतु "क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसोहृवहश्चानन्योऽन्यार्थे"॥३।३।२३॥ इत्यादिसूत्रैर्विहितम् ॥ ३७ ॥

## क्विपि व्यञ्जनकार्यमनित्यम् ॥ ३८ ॥

प्राप्तमपि न भवतीत्यनित्यशब्दार्थः । तत्राख्यातक्विपि यथा । राजेवाचरति "कर्तुः क्विप् गल्भक्लीबहोडात्तु ङित्"॥३।४।२५॥ इति क्विपि, राजानतीत्यादौ क्विप्सत्कवकारव्यञ्जनद्वारप्राप्तस्य "नाम सिदय्व्यञ्जने"॥१।१।२१॥ इति पदत्वस्याभवनात् "नाम्नो नोऽनह्नः"॥२।१।९१॥ इति नस्य लुग् नाभूत् । कृत्क्विपि यथा । गीर्यते इति "क्रुत्संपदादिभ्यः क्विप्"॥५।३।११४॥ इति क्विपि; गिरौ, गिरः । अत्र प्राग्वत्प्राप्तपदत्वाभवनात् "पदान्ते"॥२।१।६४॥ इति दीर्घो न । सूचकं चास्य मित्रं शास्तीति मित्रशीरित्यादौ क्विपो व्यञ्जनादित्वात् "इसासः शासोऽङ्व्यञ्जने" ॥४।४।११८॥ इत्यनेनैव इसि सिध्यत्यपि, "क्वौ"॥४।४।११९॥ इति सूत्रकरणम् । तद्धि क्विप्येतन्न्यायाद्व्यञ्जनद्वारोक्तकार्यं न भविष्यतीत्याशङ्कयैव । क्विपश्चोपलक्षणत्वाद्विच्यपि व्यञ्जनकार्यमनित्यम् । यथा मुख्यमाचष्टे णिजि, "मन्वन्-"॥५।१।१४७॥ इति विचि मुख्य । तं मुख्यम्; अत्र विचि परे "य्वोः प्वय्व्यञ्जने लुक्" ॥४।४।१२१॥ इति यलुग् नाभूत् । नच णिलुचः स्थानिवद्भावाद्यलुक्प्राप्तिरेव नास्तीति वाच्यम्; यविधौ "न सन्धि-" ॥७।४।१११॥ इत्यनेन स्थानिवद्भावनिषेधात् । अनित्यता त्वस्य दर्शयितुं न शक्यते; यतो यदि क्विपि व्यञ्जनकार्यं किमपि जायमानं दृष्टं स्यात्तदा तदपेक्षया व्यञ्जनकार्यानित्यताया अनित्यतोच्यते; इह तु क्विपि व्यञ्जनकार्यं किमपि भवन्न दृश्यते ततः किमपेक्ष्यानित्यत्वस्यानित्यतोद्भाव्यताम् । ननु यद्येवं तर्हि क्विपि व्यञ्जनकार्यं न स्यादित्येव न्यायः पठ्यताम् । मैवम् । यतश्चिरन्तनानि न्यायसूत्राणि न केनापि परावर्त्तयितुं शक्यन्ते । अपि च । केचित् क्विपि किञ्चिद्व्यञ्जनकार्यं नित्यमपीच्छन्ति । तथाच जयकुमारः । पां पाने इत्यस्य क्विपि, "अप्रयोगीत्"॥१।१।३७॥ इति तल्लुकि, लुप्तेऽपि व्यञ्जनादौ प्रत्यये "ईर्व्यञ्जने-

ऽयपि"॥४।३।९७॥ इति ईत्वमिच्छन् पीरित्याह । तदपेक्षया न्याये अनित्यमित्युक्तं भावि । नानाव्याकरणसाधारणानि हि न्यायसूत्राणि ॥ ३८ ॥

## स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वान्यनित्यानि ॥ ३९ ॥

द्वन्द्वैकत्वं समाहारद्वन्द्वः । दीर्घत्वं च, सामान्योक्तेऽपि "भ्वादेर्नामिन-" ॥२।१।६३॥ इतिसूत्रविहितमत्र विवक्षितम् । ततः स्थानिवद्भावादीनि पञ्च अनित्यानीति यथाप्राप्ति सर्वत्र भवन्त्यपि, यथाप्रयोगदर्शनं क्वचिन्न भवन्तीत्यर्थः । स्थानिवद्भावादीनां च भवनोदाहरणानि सुलभान्येवेति नेहोच्यन्ते। अभवनोदाहरणानि त्वेवम् । तत्र स्थानिवद्भावे यथा । स्वादुशब्दात् स्वाद्वकार्षीदिति णिजि, असिस्वददित्यत्र उकारस्य वृद्धौ ततोऽन्त्यस्वरादिलुकि तस्य स्थानिवद्भावाभवनेन आकारस्योपान्त्यत्वात् "उपान्त्यस्यासमान-"॥४।२।३५॥ इति ह्रस्वः सिद्धः। स्थानिवद्भावानित्यत्वे उन्मीलकं तु, मालामाख्यत् अममालदित्यादावन्त्यस्वरादिलुकः स्थानिवद्भवने आकारस्योपान्त्यत्वाभावादेव ह्रस्वनिषेधे सिध्यत्यपि "उपान्त्यस्यासमान-"॥४।२।३५॥ इत्यत्रासमानलोपिग्रहणम् । तद्धि स्थानिवद्भावस्यानित्यत्वादभवनसंभावनयैव कृतम् । नन्वसमानलोपिग्रहणस्यान्यदपि कारणमस्ति । तथाहि । राजानमाख्यदरराजदित्यादौ "त्र्यन्त्यस्वरादेः"॥७।४।४३॥ इत्यनेन कृतस्य अन्लोपस्य स्वरव्यञ्जनसमुदायादेशत्वेन स्वरादेशत्वाभावात् "स्वरस्य परे-"॥७।४।११०॥ इति स्थानिवद्भावो न प्राप्नोति । इहापि चोपान्त्यह्रस्वनिषेधः कृतो विलोक्यते इत्यतस्तदर्थमसमानलोपिग्रहणं कृतमिति। सत्यम् । परमरराजदित्यादावन्लोपरूपो यः स्वरव्यञ्जनसमुदायादेशस्तत्र स्वररूपावयवस्यैव प्राधान्यविवक्षायां तस्य स्वरादेशत्वमपि संभवेत्तथाच स्थानिवद्भावप्राप्त्या तत्राप्युपान्त्यत्वाभावादेव ह्रस्वनिषेधोऽसमानलोपिग्रहणं विनाऽपि सिध्यत्येव । तथापि यत्तत्कृतं तत्स्थानिवद्भावस्यानित्यत्वादभवनशङ्कयैवेति प्रतिपत्तव्यम् ॥ १ ॥ पुंवद्भावे यथा । दक्षिणस्यां भवो "दक्षिणापश्चात्पुरसस्त्यण्"॥६।३।१३॥ इति त्यणि, दाक्षिणात्यः; अत्र "सर्वादयोऽस्यादौ"॥३।२।६१॥ इति प्राप्तोऽपि पुंवद्भावो नाभूत् । पुंवद्भावभवने हि स्त्रीत्वनिवृत्त्या निमित्ताभाव इति न्यायात् स्त्रीत्वहेतुकस्यापोऽपि निवृत्त्या दाक्षिणत्य इति स्यात् । पुंवद्भावानित्यत्वे प्रत्यायकं तु "कौण्डि-

न्यागस्त्ययोः कुण्डिनागस्ती च"॥६।१।१२७॥ इत्यत्र कौण्डिन्येति निर्देशः । अयं हि कौण्डिन्यशब्दः पुंवद्भावस्यानित्यत्वं विना कथमपि न सिद्ध्यति । तथाहि । कुडुङ् दाहे, इत्यस्मात् "अजातेः शीले"॥५।१।१५४॥ इति णिनि, स्त्रीत्वे ङ्यां, कुण्डिनी । ततः कुण्डिनीशब्दाद् वृद्धापत्यार्थे "गर्गादेः-" ॥६।१।४२॥ इति यञि; "जातिश्च णितद्धितयस्वरे"॥३।२।५१॥ इति प्राप्तः पुंवद्भावो यदि स्यात्तदा स्त्रीत्वनिवृत्त्या तद्धेतुकस्य कुण्डिनीशब्दस्थङीप्रत्ययस्यापि निवृत्तौ, "नोऽपदस्य-"॥७।४।६१॥ इति इन्लोपे कौण्ड्येति प्राप्नोति । तथापि यत्कौण्डिन्येति निर्दिष्टं तदेतन्न्यायेन पुंवद्भावस्यानित्यत्वादभवने, "अवर्णेवर्णस्य"॥७।४।६८॥ इति ईल्लुग्रूपस्य स्वरादेशस्य स्थानिवद्भावेन "नोऽपदस्य-"॥७।४।६१॥ इति प्राप्तस्य इन्लोपस्याभवनात्कौण्डिन्येतिरूपसिद्धिसंभावनयैव ॥ २ ॥ एकशेषे यथा । तदतदात्मकं तत्त्वमातिष्ठन्ते जैनाः; अत्र "त्यदादिः"॥३।१।१२०॥ इति प्राप्तस्तच्छब्दैकशेषो न । एकशेषानित्यत्वे विशेषकं त्वीदृक्प्रयोगा एव ॥ ३ ॥ द्वन्द्वैकत्वे यथा । शङ्खदुन्दुभिवीणाः । अत्र "प्राणितूर्याङ्गाणाम्"॥३।१।१३७॥ इति प्राप्तोऽपि समाहारद्वन्द्वो न । द्वन्द्वैकत्वानित्यत्वे प्राणकं तु "प्राणितूर्याङ्गाणाम्"॥३।१।१३७॥ इति बहुवचनमेव । तथाहि । आचार्यस्य तावत्सर्वत्रैकवचनप्रयोगस्यैव शैली, यत्र तु बहुवचनं प्रयुङ्क्ते तत्र कस्य चिद्विशेषस्य ज्ञप्त्यर्थमेव। इह च यदि तत्प्रयुक्तं तज्ज्ञायते किञ्चिदत्र प्रयोजनमस्तीति । तच्चात्र द्वन्द्वैकत्वानित्यताज्ञप्तिरेव; अन्यप्रयोजनाभावात्। यदि च द्वन्द्वैकत्वमनित्यमित्येष न्यायांशो नाभविष्यत्तदा कस्यार्थस्य ज्ञप्त्यर्थमत्र बहुवचनं प्रायोक्ष्यत ॥ ४ ॥ दीर्घत्वे यथा । कुर्दि क्रीडायाम्। कुर्दते, "रम्यादिभ्यः कर्त्तरि"॥५।३।१२६॥ इत्यने, कुर्दनः । गुर्वैं उद्यमे । "णिन् चावश्यकाधमर्ण्ये"॥५।४।३६॥ इति णिनि, ङ्यां, गुर्विणी इत्यादौ "भ्वादेर्नामिनः-"॥२।१।६३॥ इति दीर्घो नाभूत्। दीर्घत्वानित्यत्वे उद्दीपकं तु,"भ्वादेर्नामिनः-"॥२।१।६३॥ इत्यनेनैव दीर्घे सिध्यत्यपि स्फूर्ज्, ऊर्ज्, ऊर्णु इत्यादीनां कृतदीर्घाणामेव धातुषु पठनं; नतु हुर्छामुर्छादीनामिवाकृतदीर्घाणाम्। सदीर्घपठनं हि स्फूर्जादीनां दीर्घत्वाव्यभिचारज्ञापनद्वारेणान्येषां क्वचित्तद्व्यभिचारज्ञापनार्थम् । यदि च दीर्घत्वमनित्यमिति न्यायांशो नाभविष्यत्तदा कस्यार्थस्य ज्ञप्त्यर्थं स्फूर्जा-

दीनां सदीर्घपठनमाचार्यः कुर्यात् ॥ ५ ॥ अनित्यता त्वनित्यताया न संभव-
तीति न दर्श्यते ॥ ३९ ॥

## अनित्यो णिच्चुरादीनाम् ॥ ४० ॥

सर्वत्र भवन्नपि यथा प्रयोगदर्शनं क्वचिन्न स्यादपीत्यर्थः । यथा चुरण्; चोरति । चितुण्; चिन्तति । छदण्; छदनम् । तुलण्; "भिदादयः" ॥५।३।१०८॥ इत्यङि, तुला इत्यादि । घोषकं त्वस्य चुरादिषु ऋदित्त्वम् । तद्धि "ऋदिच्छ्वि-स्तम्भूम्रुचूम्लुचूग्रुचूग्लुचूग्लुञ्चूज्रो वा" ॥३।४।६५॥ इत्याङि, अघुषादित्यादिरूपसि-ध्यर्थं कृतम् । णिच ऐकान्तिकत्वे तु विशेषविधित्वात् "णिश्रिद्रुस्रुकमः कर्त्तरि ङः"॥३।४।५८॥ इति ङस्यैव प्राप्तेरजूघुषदित्याद्येव भवनेनाङोऽवकाशस्यैवाभावा-त्किमर्थमृदित्त्वं कुर्यात् । अस्य चाध्रौव्याद्युजादिवर्जानामेव चुरादीनां यथाशि-ष्टप्रयोगमनियतो णिच्; युजादीनां तु "युजादेर्नवा"॥३।४।१८॥ इति नियत एव णिज्विकल्पः ॥ ४० ॥

## णिलोपोऽप्यनित्यः ॥ ४१ ॥

यथाप्राप्ति सर्वत्र भवन्नपि क्वचिन्न भवतीत्यर्थः । यथा मघवो युधि सुप्र-कम्पयाः । अत्र सुप्रपूर्वात् ण्यन्तात्कम्पेः खलि, णेर्लुचो अनित्यत्वादभवने गुणे अयादेशः सिद्धः । निवेदकं चास्य "णिवेत्त्यासश्रन्थघट्टवन्देरनः"॥५।३।१११॥ इत्यनापवादस्य "भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः"॥५।३। १०९॥ इति सूत्रस्य "जागुरश्च"॥५।३।१०४॥ इति सूत्रात्प्रारब्धे अप्रत्ययाधिकारे करणे सति, अप्रत्ययेनापि चिन्तापूजादिशब्दानां णेर्लुकि सिद्धावपि; "षितोऽङ्" ॥५।३।१०७॥ इति सूत्रात्प्रारब्धे अङ्प्रत्ययाधिकारे "भीषिभूषि-" ॥५।३।१०९॥ इति सूत्रकरणेनाङ्प्रत्ययविधानम् । तथाहि । अप्रत्ययस्याङश्च भेदस्तावद् ङित्त्वेनैव; ङित्त्वस्य च साध्यं गुणाभाव एव । यदि च णिलुगैकान्तिकः स्या-त्तदा णेर्लुकि नाम्यभावाद् गुणप्राप्तिरेव नास्तीति किमर्थमप्रत्ययत्यागेनाङ्प्र-त्ययमानेतुमङोऽधिकारे "भीषिभूषि-"॥५।३।१०९॥ इति सूत्रं क्रियेत । एतच्च सूत्रमङोऽधिकारे कृतं ततो ज्ञायते, एतन्न्यायात् णिलोपो अनित्य इति । तथा

सति च णेर्लुगभावे यदि अप्रत्यय आनीयते तदा णेर्गुणे चिन्तया, पूजयेति स्यात् । चिन्तिया, पूज्येति तु इष्टम्, अतोऽङोऽधिकारे सूत्रं कृतम् । तथा च गुणाभावे क्रमेण "संयोगात्" ॥२।१।५२॥ इतीयि, "योऽनेक-"॥२।१।५६॥ इति यत्वे च; चिन्तिया, पूज्येति सिद्धम्। अनित्यता त्वनित्यताया न स्यादित्युक्तमेव ॥४१॥

## णिच्संनियोगे एव चुरादीनामदन्तता ॥ ४२ ॥

चुरादीनामिति सामान्योक्तेऽप्यङ्कादीनां श्लेष्कान्तानामिति ज्ञेयं नान्येषां; तेषामदन्तत्वस्यैवासंभवात् । प्राग् णिचः सर्वत्र यथादर्शनमनित्यत्वोक्तेर्णिज-भावपक्षे अङ्कादीनामदन्ततानिषेधार्थोऽयं न्यायः । यथा जगणतुरित्यादौ णिज-भावपक्षे गणेरनदन्तत्वेनानेकस्वरत्वाभावादामादेशो नाभूत् । प्रगुणकं चास्य ई वा गण इत्यपि कृते अजीगणदजगणदिति रूपद्वयसिद्धावपि "ई च गणः" ॥४।१।६७॥ इति सूत्ररचनम् । तथाहि । गणेस्तावण्णिचि णिगि च प्रत्ये-कमजीगणदजगणदिति द्वैरूप्यं सूरेरिष्टम् । यदि च गणेः सर्वथाऽप्यदन्तत्वं स्यादेव तदा तत्सर्वमिष्टमी वा गण इति सूत्रेणापि सिध्यति । कथम् । प्रथमे पक्षे ई वा गण इति ईत्वं स्याद्, द्वितीये तु यथाप्राप्तम् । तच्च किम् । समानलोपित्वात्सन्वद्भावाद्यभाव इति । तथापि यत् "ई च गणः"॥४।१।६७॥ इति सूत्रं कृत्वा चकारेणाकारानुकर्षणं कृतं तत् णिचो अनित्यत्वादभ-वनपक्षे यदैतन्न्यायाद्गणेरनदन्तत्वं भविष्यति तदा णिगि परे ई वा गण इति ईत्वे विकल्पितेऽप्यजीगणदित्येकमेव रूपं प्राप्स्यति तथाच मा भूत्किन्त्व-जगणदित्यपि रूपं भवतादित्येवमर्थम् । अयं भावः । अनदन्तस्य गणेर्णिगि परे विशेषविहितत्वात्प्रथममपि ई वा गण इति ईत्वं स्यात्पक्षेऽपि च यथाप्राप्तस्य करणे समानलोपित्वाभावात् सन्वद्भावादिसिद्ध्या ईत्वमेव स्यादित्युभयथाऽप्य-जीगणदित्येव स्यान्नतु कथमप्यजगणदिति । यदि तु ईचेति कृत्वा चकारेणा-कारोऽनुकृष्टस्तदा द्वितीयपक्षे प्राप्तमपि सन्वद्भावं बाधित्वा अकारस्यैव भवनाद-जगणदित्यपि सिद्धम् । तदेवमनित्यत्वात् णिचो अभवनपक्षे एतन्न्याया-ज्जायमानानदन्तत्वस्य णिगन्तस्य गणेर्विघटमानमजगणदिति रूपं संघटयितुं क्रियमाणं चकारेणाकारानुकर्षणमेतन्न्यायाशङ्काल एवोद्भूतत्वादेतं न्यायं प्रगु-

णयतीति व्यक्तमेव । असंपाती चायम् । पतण् गतौ वा इत्यत्र वाशब्दो णिजदन्तत्वयोर्विकल्पार्थ इति धातुपारायणोक्तेस्तथाहि । यदि तावदयं संपाती स्यात्तदा वाशब्दो णिग्विकल्पार्थ इत्युक्तेऽपि सरति । णिचोऽभावे अदन्तत्वाभाव एतन्न्यायात् स्वयं सेत्स्यतीति कृत्वा । तथापि यददन्तत्वस्यापि विकल्पनार्थं वाशब्द इत्युक्तं, तदस्य न्यायस्यासंपातित्वादेव ॥ ४२ ॥

## धातवोऽनेकार्थाः ॥ ४३ ॥

तेन धातुपाठेऽनुक्तोऽप्यर्थो लक्ष्यानुसारात्तेषां प्रयोज्य इत्यर्थः। यथा विधत् विधाने। अयं व्यधार्थेऽपि। यथा वेधः; शब्दवेधी। एधि वृद्धौ। अयं दीप्त्यर्थेऽपि। यथा पुरश्चक्रं तवैधते। प्राप्त्यर्थेऽपि। यथा औपवस्त्रफलमेधते। शुच शोके। अयं पावित्र्येऽपि। यथा शुचिः। हृंग् हरणे। अयं करणार्थेऽपि। यथा इतरचिकीर्षितायां क्रियायामितरेण हरणं करणं क्रियाव्यतिहार इति, "क्रियाव्यतिहारेऽगति-" ॥३।३।२३॥ इति सूत्रबृहद्वृत्तौ। मननं मतम्। मतशब्दः साम्येऽपि। यथा मतीकृता क्षेत्रभूः; समीकृतेत्यर्थ इत्यादि। समर्थकं त्वस्य "तक्षः स्वार्थे वा"॥३।४।७७॥ इत्यत्र स्वार्थे इति विशेषणम्। तेन ह्यर्थान्तरे श्नुर्न। यथा संतक्षति वाग्भिः शिष्यम्; निर्भर्त्सयतीत्यर्थः। यदि चायं न्यायो न स्यात्तदा तक्षोऽर्थान्तरवृत्त्यभावादेव स्वार्थ इत्युक्तिर्व्यर्थैव स्यादिति। अयं च क्वचिदप्रमाणम्। तेन धात्वर्थं बाधते कश्चिदुपसर्गो यथा प्रतिष्ठते, प्रवसति, प्रस्मरतीत्यादीत्युक्तिरविरुद्धा। एषां हि धातुपाठे योऽर्थः पठितोऽस्ति स एवार्थो यदि स्थादिधातूनां स्यात्तदैवोच्यमाना संगच्छते । यदि त्वेतन्न्यायाद्धातूनामनेकार्थत्वं स्यादेव तदा स्थादिधातूनां स्थित्याद्यर्थत्वस्येव गत्याद्यर्थत्वस्यापि संभवादाचष्टे, आलोकते इत्यादाविव, प्रतिष्ठते इत्यादावप्युपसर्गस्य धात्वर्थं प्रत्यनुवर्त्तकत्वमेवोच्यमानं यौक्तिकं स्यान्नतु बाधकत्वमिति। अप्रामाण्यप्रमापकं चास्य प्रवापयति, प्रवाययतीत्यनयोर्वातिवेतिभ्यां णौ सिद्धावपि "वियः प्रजने"॥४।२।१३॥ इति सूत्रकरणम्। तथाहि। पुरो वातो गाः प्रवापयतीति तावद्वांक् गतिगन्धनयोरित्यस्य धातोर्णिगि सिध्यति। प्रवाययतीत्यपि च वींक् प्रजनकान्त्यसनखादनेषु चेत्यस्य धातोर्णिगि; तथापि यद्

"वियः प्रजने"॥४।२।१३॥ इति सूत्रं कृत्वा वियोविकल्पेन आत्वकरणं, तत्खल्वेतन्न्यायस्याप्रामाण्याद्वांक्धातोः प्रजने वृत्त्यभावादेव ॥ ४३ ॥

## गत्यर्था ज्ञानार्थाः ॥ ४४ ॥

धातव इति योगः । यथा गमयति शब्दोऽर्थं ज्ञापयतीत्यर्थः । प्रणायकं त्वस्य "णावज्ञाने गमुः"॥४।४।२४॥ इत्यत्रेणोऽज्ञान इति विशेषणम् । तेन हि प्रत्याययत्यर्थानित्यादाविणो ज्ञानार्थत्वान्न गम्वादेशः । यदि चायं न्यायो न स्यात्तदेणो गत्यर्थस्य ज्ञानार्थत्वासंभवादेवाज्ञान इत्युक्तिर्व्यर्थैव स्यादिति। अस्थेयांश्चायम्। "गतिबोधाहारार्थ-"॥२।२।५॥ इत्यत्र बोधग्रहणात्। यदि ह्ययं स्थेयान् स्यात्तदा केवलगतिशब्देनापि सरति; गतिशब्दस्यैतन्न्यायेन बोधस्यापि वाचकत्वात् ॥ ४४ ॥

## नाम्नां व्युत्पत्तिरव्यवस्थिता ॥ ४५ ॥

तेन नामान्यनेकधाऽपि व्युत्पाद्यन्त इत्यर्थः । यथा अश्वस्याम्बा वडवा; असृगालेढि सृगालः; मह्यां रौति मयूर इत्यादि पृषोदरादित्वात्सिद्धम् । पुनर्वड आग्रहणे; इतिसौत्राद्धातोः "वडिवटि-"॥ (उणा०-५१५) इत्यवे, वडवा । सृधातोः "सर्त्तेर्गोऽन्तश्च"॥ (उणा०-४७८) इति कित्याले, गागमे च; सृगालः। मीनातेः "मीमसि-"॥ (उणा०-४२७) इत्यूरे, मयूर इत्याद्युणादावपि साधितम् । तथा सूर्यशब्दः कृति "कुप्यभिद्योध्यसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि"॥५।१।३९॥ इत्यनेन सृधातोः क्यपि संज्ञायां निपातितः; पुनस्तद्धिते सूरशब्दस्य मर्तादिगणपाठात् "मर्त्तादिभ्यो यः"॥७।२।१५९॥ इति स्वार्थिकयप्रत्ययेनापि साधितः । व्युत्पादकं त्वस्य शब्दानामसकृद्व्युत्पादनमेव । अप्रौढत्वाच्चास्य रूढनाम्नामेव व्युत्पत्तिरव्यवस्थिता, नतु यौगिकानां नीलकण्ठादीनाम् ॥ ४५ ॥

## उणादयो अव्युत्पन्नानि नामानि ॥ ४६ ॥

अवयवावयविनोरभेदोपचारात् उणादय इत्युणादिप्रत्ययान्तानि कारुवायुपाय्वादिनामानि "कृवापाजि-"॥ (उणा०-१) इत्यादिना पञ्चोत्तरसूत्रसहस्रेण "उणादयः"॥५।२।९३॥ इति सूत्रसूचितेन यद् व्युत्पादितानि तत्प्र-

कृतिप्रत्ययविभागेन वर्णानुपूर्वीनिर्ज्ञानार्थमेव नतु कर्त्रेत्यादिक्रियाशब्दवदन्वर्थदर्शनार्थम् । तेन तत्त्वतस्तान्यव्युत्पन्नानि; तेषां रूढिशब्दत्वेन व्युत्पत्तेरकिञ्चित्करत्वात् । यथा वींक् धातोः "पटिवीभ्याम्-"॥ (उणा०-५७९) इति डिसे, विसम् । अत्रैवंव्युत्पादितस्याप्यस्य नाम्नस्तत्त्वतो अव्युत्पन्नत्वेन सस्य कृतत्वाभावान्न षः । गमकं चास्य "अतः कृकमि-"॥२।३।५॥ इति सूत्रे कमिग्रहणात्कमेरौणादिकेन "मावावद्यमि-"॥ (उणा०-५६४) इति सेन निष्पन्ने कंसे लब्धेऽपि पृथक्कंसग्रहणम् । तथाहि । "अतः कृकमि-"॥२।३।५॥ इति सूत्रे तावत् कृकमी, केवलाभ्यां समासासंभवात् प्रत्ययान्तौ ग्राह्यावित्युक्तम् । यथा अयस्कारः, अयस्काम इत्यादि । यदि चायं न्यायो न स्यात्तदा कंस इत्यत्र कमेरेव सप्रत्ययान्तस्य सद्भावात्पयस्काम इतिवत्पयस्कंस इत्यपि कमिग्रहणेनैव सिध्यतीति किमर्थं पृथक्कंसग्रहणं क्रियेत । यत्तु कृतं तदेतन्न्यायादव्युत्पन्नएवायं कंसशब्दो न तु कमिना व्युत्पन्न इति बुद्ध्यैव । तदेवमेतन्न्यायोत्थया कंसशब्दाव्युत्पन्नत्वबुद्ध्या कृतं पृथक्कंसग्रहणमेतन्न्यायं गमयति । अस्य च कादाचित्कत्वात् क्वचिदेषां व्युत्पत्तिपक्षोऽप्याश्रीयते । तेन वपेरौणादिके "रुद्यर्त्ति-"॥ (उणा०-९९७) इत्युसि, वपुषेत्यादौ सस्य कृतत्वात्षः । अस्य कादाचित्कत्वस्थापकं तु "तृस्वसृ-"॥१।४।३८॥ इति सूत्रे तृग्रहणनैव सिद्धे पुनर्नप्त्रादीनामौणादिकानां पृथक्पठनस्य नियमार्थत्वम् । तथाहि । नियमार्थत्वं तावत्तदा स्याद्यदि तृग्रहणेनैव नप्त्रादीनामप्यार् सिद्धः स्यान्नत्वन्यथा । तृग्रहणेन च नप्त्रादीनामार् तदा सिध्यति यदि व्युत्पत्तिपक्ष आश्रीयते नत्वन्यथेति । नप्त्रादिग्रहणसूचितो नियमश्चायम् । औणादिकतृप्रत्यान्तानां नप्त्रादीनामेव आर् स्यान्नत्वन्येषां, तेनात्र आर् न; पितरौ, मातरौ । इह चोणादय इत्युपलक्षणम् । तेन क्वचिदन्यस्यापि नाम्नो अव्युत्पत्तिपक्ष आश्रीयते । यथा "संख्याडतेश्चाशत्तिष्टेः कः"॥६।४।१३०॥ इत्यत्र त्यन्तवर्जनेन षड्दशतो मानमस्येति वाक्यं कृत्वा "विंशत्यादयः"॥६।४।१७३॥ इति तद्धितीयसूत्रेण तिप्रत्ययमानीय निपातनेन व्युत्पादितस्य षष्टिशब्दस्य वर्जने सिद्धेऽपि षष्टिशब्दस्याव्युत्पत्तिपक्षाश्रयणेन त्यन्तत्वस्याविवक्षणात् पृथक् ष्ट्यन्तवर्जनं चक्रे ।

यदि त्वत्र व्युत्पत्तिपक्ष आश्रितः स्यात्तदा ष्ट्यन्तोऽपि षष्टिशब्दस्तिप्रत्ययेन निष्पादितत्वात्त्यन्त एवेत्यतस्त्यन्तवर्जनेन षष्टिवर्जनं सिद्धमेवेति किमर्थं पृथक् ष्ट्यन्तवर्जनमाचार्यः कुर्यात् ॥ ४६ ॥

## शुद्धधातूनामकृत्रिमं रूपम् ॥ ४७ ॥

शुद्धा इति कोऽर्थः ये यादृशा धातुपाठे पठितास्तेषामकृत्रिमरूपमिति कोऽर्थः ते धातवः कृता इति नोच्यन्ते । वृक्षेष्वित्यादौ सुपः "सप्तम्यधिकरणे" ॥२।२।९५॥ इति सूत्रमुच्चार्य स्थापितत्वेन कृतत्वभवनाद्यथा तदीयसस्य षत्वं स्यात्तथा धातोरपि धातुपाठसूत्रमुच्चार्य स्थापनेन तदीयसस्य कृतत्वप्रसङ्गा-त्षत्वप्रसक्तिरित्यतस्तस्य कृतत्वनिषेधार्थोऽयं न्यायः । यथा मुसच् औणादिके कित्यले, मुसलम्; अत्र सस्य कृतत्वाभावात् "नाम्यन्तस्थाकवर्गात्पदान्तः कृतस्य सः शिड्नान्तरेऽपि"॥२।३।१५॥ इत्यनेन षत्वं नाभूत्। एतज्ज्ञप्तिकुशलं तु मुसलादौ षत्वं निषेद्धुं यत्नान्तराकरणम्। शुद्धेति किम्। षन भक्तावित्यस्य "षः सोष्ट्यै-"॥२।३।९८॥ इति से कृते सन् इति रूपस्य कृत्रिमत्वात् णौ ङे, असीषणदित्यादौ "नाम्यन्तस्था-"॥२।३।१५॥ इत्यनेन षत्वं यथा स्यात् । अबलिष्ठता त्वस्य न स्पष्टमीक्ष्यते । कृते निमित्ताभावे इति न्यायात्थस्य ठत्वं कथं व्यावर्त्तेत ॥४७॥

## क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते ॥४८॥

क्विबित्युपलक्षणत्वाद्विचन्ता अपि। धातुत्वमिति सामान्योक्तेऽपि नामार्थ-संवलितधात्वर्थाभिधायित्वाद्गौणधातुत्वम्। तत एव शब्दत्वं चोपचाराद् वृक्षादिवन्ना-मत्वं च प्रतिपद्यन्ते इति; धातुत्वनामत्वयोः कार्यं लभन्ते इत्यर्थः । अन्यो-ऽन्यविरुद्धकार्यप्रापणार्थोऽयं न्यायः । यथा नियौ, लुवौ इत्यादौ धातुत्वात् "धातोरिवर्ण-"॥२।१।५०॥ इति इयुवौ, शब्दत्वात् स्यादयश्च। ननु नयनं, लवन मित्यादिवन्नियौ लुवौ इत्यादावपि परत्वाद् गुण एव प्राप्नोति तत्किमियुवौ । उच्यते । क्विपः कित्त्वात्तस्य च स्थानिवद्भावान्न गुणः । "नामिनो गुणः-"॥४।३।१॥ इत्यस्य वृत्तौ तु क्विबन्तानां धातुत्वस्य गौणत्वान्न गुण इत्युक्तम्; परं तदभिप्रायः सम्यग्नावगम्यते । यतो विचन्तानां धातुत्वस्य गौणत्वेऽपि गुणो

दृश्यते। यथा हिनोतीति विचि; हेः, हयौ, हय इत्यादौ धातुत्वाद्गुणः शब्दत्वात्स्यादयश्चेति। संवादकं चास्य "धातोरिवर्ण-"॥२।१।५०॥ इत्युवृबाधकं "स्यादौ वः" ॥२।१।५७॥ इति वत्वकरणम्। तथाहि। वत्वं तावद्धातोः स्यादावनन्तरे सत्युक्तम्। स्यादिश्च धातोरनन्तरस्तदा स्याद्यदि धातुः क्विबन्तः स्यात्तस्य च यदि नामत्वं स्यान्नत्वन्यथा। क्विबन्तानां धातुत्वनामत्वोभयं चैतन्न्यायादेव सिध्यति नत्वन्यथेति। तथाच वस्विच्छतीति क्यनि क्विपि तल्लुकि; वस्वः, वस्वौ, वस्व इत्यादौ धातोः स्यादौ परे वत्वं सिद्धम्। अस्य च क्षामत्वादाख्यातक्विबन्ता ये ते धातव एव, नतु नामानि; तेन राजनतीत्यत्र त्यादिरेव स्यान्नतु स्यादिः॥४८॥

## उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक्॥ ४९॥

उभयोः स्थानिनोः स्थाने निष्पन्न आदेशो यथेच्छमन्यतरजोऽपि व्यवह्रियते पुत्र इव मातापित्रोः। उभयोः कार्ययोर्यौगपद्येन प्रसङ्गे, क्रमेण प्रापणार्थोऽयं न्यायः। यथा आङ्, ईषि गत्यादौ, आ ईष्यः एष्यः; ततः प्रेण योगे आङ्-ईतोः स्थानजस्य एतो यदा आङादेशत्वं तदा "ओमाङि"१।२।१८॥ इत्यल्लोपे प्रेष्य इति स्यात्। यदा तु धात्वादेशत्वं तदा "उपसर्गस्यानिणेधेदोति"॥१।२।१९॥ इत्यनेन प्रस्याल्लोपः प्राप्नोति। परं तं बाधित्वा विशेषविहितत्वात् "प्रस्यैषैष्योढोढ्यूहे स्वरेण"॥१।२।१४॥ इत्यैत्वे प्रैष्य इति स्यात्। संवादी चास्य "गडदबादेः-" ॥२।१।७७॥ इति सूत्रे प्रत्यययोरिति न्यायात्प्रत्ययत्वे लब्धेऽपि साक्षात्प्रत्ययशब्दोपन्यासस्तथाहि। धाधातोर्वसि द्वित्वे पूर्वस्य ह्रस्वे "द्वितीयतुर्ययोः पूर्वौ"॥४।१।४२॥ इति दत्वे "श्नश्चातः"॥४।२।९६॥ इति धातोराल्लुकि "अदीर्घात्-"॥१।३।३२॥ इति धस्य द्वित्वं यदा क्रियते तदा दद्ध्व इत्यत्र ध्वस्य प्रकृतिप्रत्ययस्थानजस्य यद्येतन्न्यायबलात्प्रत्ययत्वमापाद्यते तदा कृतद्वित्वधकारसंबन्धिना प्रथमधकारेणान्तर्वर्त्तमानेन धातोश्चतुर्थान्तत्वसद्भावादादिचतुर्थत्वं प्राप्नोति। तत्करणे च धद्ध्व इति रूपं स्यात्तन् मा भूत्किं तु प्रत्ययग्रहणबलान्न्यायानपेक्षो यः प्रत्ययस्तत्रैव परे आदिचतुर्थत्वं स्तादिति ज्ञापनार्थो हि "गडदबादेः-"॥२।१।७७॥ इति सूत्रे साक्षात्प्रत्ययशब्दोपन्यासः। यदि चायं न्यायो न स्यात्तदा ध्वस्य कथमपि प्रत्ययत्वानापत्त्या तस्मिन् परे दद्ध्व इत्यत्रादिचतुर्थस्य प्रसङ्गोऽपि नास्तीत्यतः किमर्थं

प्रत्ययग्रहणेन न्यायानपेक्ष एव प्रत्ययोऽत्र ग्राह्य इति ज्ञप्तिः क्रियेत। केवलमेतन्न्यायादेव ध्वस्य प्रत्ययत्वभवनेनात्रादिचतुर्थत्वं प्रसजज्ज्ञात्वा तन्निषेधार्थं प्रत्ययग्रहणेन प्रस्तुतज्ञप्तिविधानं सफलम् । अस्य चानोजस्वित्वाद्राजानमाख्यदरराजदित्यत्रान्त्यस्वरादिलोपस्य अनुरूपस्वरव्यञ्जनोभयस्थानजत्वेऽपि स्वरादेशतैव व्यपदेश्या नतु व्यञ्जनादेशता । तद्व्यपदेशे ह्यसमानलोपित्वादुपान्त्यह्रस्वस्य, सन्वद्भावादेश्च सिद्धावरीरजदिति स्यात् ॥ ४९ ॥

## अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं समुदायं सोऽवयवो न व्यभिचरति ॥ ५० ॥

अप्राप्तप्रापणार्थोऽयं न्यायः। यथा कुस्मिण् कुस्मयने; अस्मात् "चुरादिभ्यः-" ॥३।४।१७॥ इति णिचि, कुस्मयते । चित्रशब्द आश्चर्यार्थे ङित्; ततश्चित्रं करोतीति वाक्ये "नमोवरिवश्चित्रङोऽर्चासेवाऽऽश्चर्ये"॥३।४।३७॥ इति क्यनि, चित्रीयते। महीङ् पूजायाम्, कण्ड्वादिः; अस्माद् "धातोः कण्ड्वादेर्यक्"॥३।४।८॥ इति यकि, महीयते इत्यादौ; कुस्मिण्चित्रङ्महीङामिङित्त्वेन णिच्क्यन्यगन्तसमुदायस्यापीङित्त्वादात्मनेपदम्; कुस्म्यादीनां णिचाद्यन्तसमुदायेन सममव्यभिचारित्वात् । चेत्तं समुदायमित्यादि किम् । कुस्मयति, चित्रीययति, महीययतीत्यादौ कुस्म्यादीनामेव णिच्क्यन्यकामागमनादनु प्रयोक्तृव्यापारार्थसंजातणिगन्तीकृतानां समुदायादिङित्त्वहेतुकमात्मनेपदं मा भूत् । णिगः प्रयोक्तृव्यापारे सत्येवोत्पत्तेः; कुस्म्यादीनां णिगन्तसमुदायव्याभिचारित्वात् । स्मेरकं त्वस्य कुस्म्यादीनामिङित्करणमेव । एतन्न्यायाभावे ह्यात्मनेपदाभवनेन निष्फलत्वादिङित्त्वं कुर्यादेव न । अस्थिरता त्वस्य नेक्ष्यते ॥५०॥

## येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः ॥ ५१ ॥

तदन्यधात्वादियोगे उपसर्गकार्यं न स्यादित्यर्थः। यथा प्रगता ऋच्छका यस्मात् स प्रर्छको देश इत्यादौ प्रस्य गमिना सह सम्बन्धाद्गमिमेव प्रत्युपसर्गत्वं नतु ऋच्छि प्रति। तेन प्रावर्णस्य "ऋत्यारुपसर्गस्य"॥१।२।९॥ इत्यार्न। अयं भावः। ऋच्छकशब्दे तावत्प्रकृतिप्रत्ययौ स्तः; तत्र प्रगता ऋच्छका इति वाक्ये गतार्थ-

मन्तर्भाव्य प्रवर्त्तमानेन प्रेण णकप्रत्ययस्यैवार्थः कर्त्ता विशेष्यते नतु ऋच्छिप्रकृते- रर्थः किमपि । ये ऋच्छन्ति कर्तृरूपास्ते प्रगता इत्येवोच्यमानत्वात् । तदेवं प्रस्य ऋच्छिना सह संबन्धाभावादृच्छिं प्रति प्रस्यानुपसर्गत्वमेव । स्थापकं त्वस्य "ऋत्याः-"॥१।२।९॥ इति सूत्रे उपसर्गस्येत्युक्तिरेव । तथाहि । यदि तावदयं न्यायो न स्यात्तदा प्रार्छतीत्यादिवत्प्रर्छको देश इत्यादावप्यार् प्राप्नोति । यदि च तथेष्टं स्यात्तदा लाघवार्थं प्रादेरित्येव निर्दिश्येत । येनोपसर्गसंज्ञस्यानुपसर्ग- संज्ञस्य च चादिगणप्रान्तस्थितप्रादिगणस्य संबन्धिनो वर्णस्याविशेषेण ऋदा- दिधातावार् सिध्येत । एवं सत्यपि यदुपसर्गस्येति गुरुनिर्देशः स एतन्न्या- यात्प्रर्छको देश इत्यादावार्निषेधार्थमेवेति । नचायं दुरुत्तरः, उत्तरेण कृतो- त्तरत्वात् ॥ ५१ ॥

## यत्रोपसर्गत्वं न संभवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु संभवत्युपसर्गत्वे ॥ ५२ ॥

पूर्वापवादोऽयं न्यायः । यथा प्रगतोऽध्वानं प्राध्वो रथ इत्यादौ प्रस्यानुप- सर्गत्वेऽपि "उपसर्गादध्वनः"॥७।३।७९॥ इत्यत् समासान्तः । नह्यत्राध्वशब्द- संबद्धस्य प्रस्य कथमप्युपसर्गत्वं संभवति; उपसृत्य धातुमर्थविशेषं सृजतीत्युपस- र्ग इत्यन्वर्थाश्रयणात् । प्राध्व इत्यत्र धातुसंबन्धपरिहारेण नामसंबन्धस्यैव दृश्य- मानत्वात् । ध्वानिका चास्याध्वनः प्रागुपसर्गासंभवेऽप्युपसर्गादित्युक्तिः । सा ह्येतन्न्यायज्ञप्त्यर्थमेव कृता; अन्यथा ह्यत्र लाघवार्थं यदि प्रादेरित्येवोच्येत तदाऽपि न किञ्चिन्न्यूनं स्यादिति । न चायमनित्यो निरीक्ष्यते ॥ ५२ ॥

## शीलादिप्रत्ययेषु नासरूपोत्सर्गविधिः ॥ ५३ ॥

आदेर्धर्मसाध्वर्थयोर्ग्रहः । शीलादिप्रत्यये अपवादे विषयभूते सत्यपवादेना- समानरूपो "असरूपोऽपवादे-"॥५।१।१६॥ इति सूत्रप्राप्तोऽप्यौत्सर्गिकः शीलाद्य- र्थप्रत्ययो न स्यादित्यर्थः । प्राप्तप्रतिषेधार्थोऽयं न्यायः । एवमुत्तरोऽपि । यथा अल- ङ्करिष्णुः कन्यामित्यादौ "भ्राज्यलङ्कृग्निराकृग्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रप इष्णुः"॥५।२।२८॥ इति इष्णुरेव स्यान्न तु "तृन् शीलधर्मसाधुषु"॥५।२।२७॥ इत्य-

नेन तृन् । तेन शीलाद्यर्थे अलङ्कर्त्ता कन्यामित्यादि प्रयोगो न साधुः । उपपादकं त्वस्य पद्यतेरिदित्त्वात् "इङितो व्यञ्जनाद्यन्तात्"॥५।२।४४॥ इत्यनेनैवाने सिद्धेऽपि "भूषाक्रोधार्थजुसृगृधिज्वलशुचश्चानः"॥५।२।४२॥ इत्यनप्रत्ययसूत्रे चेन पदोऽनुकर्षणम् । तथाहि । यद्ययं न्यायो न स्यात्तदा पदेरिदित्त्वात् "इङित-" ॥५।२।४४॥ इत्यनेनैवानस्य सिद्धत्वात् "भूषाक्रोधार्थ-"॥५।२।४२॥ इत्यनप्रत्ययसूत्रे चेन पद् किमर्थमनुकृष्यते । नच वाच्यम्, "लषपतपदः"॥५।२।४१॥ इत्युकणा बाधितत्वात्पदेरनो न प्राप्नोतीत्यतोऽनार्थं चेन पदनुकृष्यते इति । "असरूपोऽपवादे-"॥५।१।१६॥ इत्यनेनोत्सर्गस्यानस्यानुज्ञातत्वेन बाधस्यासंभवात्। यदि परमेतन्न्यायेन शीलादिप्रत्ययेष्वसरूपाविधिर्निषिद्धस्तथाचोकणा अनो बाधिष्यते इत्याशङ्क्यानार्थं चेन पदोऽनुकर्षणं सफलम् । अदीप्रश्चायम् । तेन शीलाद्यर्थे "शृकमगमहनवृषभूस्थ उकण्"॥५।२।४०॥ इत्युकण्प्रत्यये आगामुक इत्यादिवत् "तृन् शील-"॥५।२।२७॥ इत्यनेन तृनि आगन्तेत्याद्यपि स्यात् । अदीप्रतोद्दीपकं त्वस्य दीप्र इत्यत्र "स्म्यजसहिंसदीपकम्पकमनमो रः"॥५।२।७९॥ इति रेणैवाननिषेधे सिद्धेऽपि "न णिङ्यसूददीपदीक्षः"॥५।२।४५॥ इत्यननिषेधसूत्रे दीपिग्रहणम् । तथाहि । दीप्र इत्यत्र "इङितो व्यञ्जन-"॥५।२।४४॥ इति प्राप्तोऽप्यनः "स्म्यजसहिंस-"॥५।२।७९॥ इति रेणैव बाधितत्वान्न भावी, ततो "न णिङ्य-"॥५।२।४५॥ इत्यननिषेधसूत्रे किमर्थं दीपिग्रहणं क्रियते । न च वाच्यम्, "असरूपोऽपवादे-"॥५।१।१६॥ इत्यनुज्ञानादौत्सर्गिको अनोऽपि स्यादिति; एतन्न्यायेन तदनुज्ञाया निषेधात् । यदि परमेतन्न्यायस्यादीप्रत्वाच्छीलादिप्रत्ययेष्वपि क्वचिदसरूपविधेरनुज्ञासद्भावाद् रप्रत्ययपक्षे अनप्रत्ययोऽपि भविष्यतीत्याशङ्क्य "न णिङ्य-"॥५।२।४५॥ इत्यत्र दीपिग्रहणं सफलम् ॥

अथ शीलादिप्रत्ययेष्विति न्यायस्यान्योऽर्थः कथ्यते ॥ शीलादिप्रत्ययेषु विषयभूतेष्वर्थसामान्यविहितः कृत्प्रत्ययोऽसरूपोत्सर्गविधिना प्राप्तोऽपि न स्यात् । तेन शीलाद्यर्थेऽलङ्करिष्णुरित्यादौ "भ्राज्यलङ्कृग-"॥५।२।२८॥ इति विहितस्य इष्णुप्रत्ययस्य विषयेऽर्थसामान्यविहितत्वात् प्राप्तोऽपि "णकतृचौ"॥५।१।४८॥ इति णको न स्यात् । तेन शीलाद्यर्थविवक्षायामलङ्कारक इत्यादिप्रयोगो न

साधुः । संवादकं चात्र परिवादक इत्यस्यार्थसामान्यविहितेन "णकतृचौ"॥५।१।४८॥ इति णकेन सिद्धावपि "वादेश्च णकः"॥५।२।६७॥ इति शीलाद्यर्थणकविधानम् । यदि हि शीलाद्यर्थेषु तृन्नादिप्रत्ययविषयेऽर्थसामान्यविहितत्वात् "णकतृचौ"॥५।१।४८॥ इति णकोऽपि "असरूपोपवादे-"॥५।१।१६॥ इत्यनेन भवन् स्यात्तदा किमिति णकार्थं "वादेश्च णकः"॥५।२।६७॥ इति सूत्रं क्रियेत । यत्तु कृतं तच्छीलाद्यर्थेषु "णकतृचौ"॥५।१।४८॥ इति णकस्यार्थसामान्ये विधानात् प्राप्नुवतोऽप्येतन्न्यायादनागमनसंभावनयैव । अस्य च स्वरुचित्वात् क्वचिच्छीलाद्यर्थेऽर्थसामान्यविहितोऽसरूपोत्सर्गकृत्प्रत्ययः स्यादपि । यथा कामक्रोधौ मनुष्याणां खादितारौ वृकाविव; अत्र "निन्दहिंसक्लिशखाद-"॥५।२।६८॥ इति प्राप्तशीलाद्यर्थणकविषयेऽर्थसामान्यविहितस्तृच् । नचायं तृन्निति वाच्यम् । तृनः कर्मणि "तृन्नुदन्ताव्ययक्वस्वानातृश्शतृङिणकच्खलर्थस्य"॥२।२।९०॥ इति षष्ठीनिषेधात् । नास्त्यत्र शीलाद्यर्थ इत्यपि न वाच्यम् । तं विना मनुष्यखादनशीलवृकोपमाया अनुपपत्तेः ॥ ५३ ॥

## त्यादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः ॥ ५४ ॥

यत्रोत्सर्गरूपायास्त्यादिविभक्तेर्विषये अपवादरूपा त्यादिविभक्तिरागच्छन्ती स्यात्तत्र तद्विषये औत्सर्गिकी त्यादिविभक्तिः "असरूपोऽपवादे-"५।१।१६॥ इत्यनेन प्राप्ताऽप्येतन्न्यायेन निषिध्यते । यथा स्मरसि चैत्र कश्मीरेषु वत्स्याम इत्यादौ "अयदि स्मृत्यर्थे भविष्यन्ती"॥५।२।९॥ इति भविष्यन्ती । तद्विषये "अनद्यतने ह्यस्तनी"॥५।२।७॥ इति ह्यस्तनी तु प्राप्ताऽपि न स्यात् । अन्योऽन्यमिति वचनाच्च त्यादिविभक्तीनामेवान्योन्यमसरूपोत्सर्गविधिर्निषिध्यते । प्रत्ययेन तु समं त्यादिविभक्तीनां सोऽस्त्येव । तेनोपशुश्रावेत्यादौ "श्रुसदवस्भ्यः परोक्षा वा" ॥५।२।१॥ इति परोक्षावत्तद्विषये उत्सर्गभूताः क्तादयोऽपि स्युरेव । यथा उपश्रुतः; उपश्रुतवानित्यादि । आसादकं चास्य "श्रुसद-"॥५।२।१॥ इत्यत्र वाग्रहणम् । तद्धि पक्षे यथास्वकालमद्यतनीह्यस्तन्यर्थम् । ते चैतन्न्यायाभावे असरूपत्वात्सिद्धे एवेत्यतः किमिति तदर्थं वाग्रहणं क्रियेत । यदि परमेतन्न्यायसद्भावात् "श्रुसद-" ॥५।२।१॥ इति परोक्षया औत्सर्गिक्यावद्यतनीह्यस्तन्यौ बाधिष्येते इत्याशङ्क्य

पक्षे यथास्वकालं ते अपि स्तामितिबुद्ध्या "श्रुसद-"॥५।२।१॥ इति सूत्रे वाग्रहणं सफलम् । अनित्यस्तु नायम् । "असरूपोऽपवादे वोत्सर्गः प्राक् तेः"॥५।१।१६॥ इति सूत्रस्यापवादाविमौ ॥ ५४ ॥

## स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ॥५५॥

स्त्रीति, स्त्र्युक्तप्रत्ययाः क्त्यादयः। अन इति चानट् प्रत्ययः। "असरूपोऽपवादे-" ॥५।१।१६॥ इत्यनेन प्राक् क्तेरिति वचनात् "स्त्रियां क्तिः"॥५।३।९१॥ इत्यतः प्राग् ये कृत्प्रत्ययास्तेषु पाक्षिकोऽसरूपविधिर्व्यवस्थापितस्तदग्रेतनप्रत्ययानां तु स्पर्द्धे सति व्यवस्थार्थोऽयं न्यायः । यथा चयनं चितिरित्यादौ "स्त्रियां क्तिः" ॥५।३।९१॥ "युवर्णवृद्दवशरणगमृद्ग्रहः"॥५।३।२८॥ इत्याभ्यां क्रमात् स्त्र्यलोः प्राप्तौ परत्वात् स्त्र्येव । दुःखेन चीयते दुश्चयमित्यादौ "दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात्खल्"॥५।३।१३९॥ "युवर्ण-"॥५।३।२८॥ इत्याभ्यां क्रमात् खललोः प्राप्तौ परत्वात् खलेव । पलाशानि शात्यन्तेऽनेनेति पलाशशातनो दण्ड इत्यादौ "करणाधारे"॥५।३।१२९॥ "युवर्ण-"॥५।३।२८॥ इत्याभ्यां क्रमादनडलोः प्राप्तौ परत्वादनडेव । तथा दुःखेन भिद्यते इति दुर्भिदा भूरित्यादौ "स्त्रियां क्तिः" ॥५।३।८१॥ "दुःस्वीषतः-"॥५।३।१३९॥ इत्याभ्यां क्रमात् स्त्रीखलोः प्राप्तौ परत्वात् खलेव । सक्तवो धीयन्तेऽस्यामिति सक्तुधानी इत्यादौ "स्त्रियां क्तिः" ॥५।३।९१॥ "करणाधारे"॥५।३।१२९॥ इत्याभ्यां क्रमात् स्त्र्यनटोः प्राप्तौ परत्वादनडेव । "स्पर्द्धे"॥७।४।११९॥ इति परिभाषायाः प्रपञ्चोऽयम् । स्थापकं चास्यैषां व्यवस्थायै यत्नान्तराकरणम् । जय्यश्चायम् । तेन जय इत्यादौ "स्त्रियां क्तिः"॥५।३।९१॥ "युवर्ण-"॥५।३।२८॥ इत्याभ्यां क्रमात् स्त्र्यलोः प्राप्तावलेव । शिरसोऽर्दनं शिरोऽर्त्तिरित्यादौ च अर्दतेः "स्त्रियां क्तिः"॥५।३।९१॥ "अनट्" ॥५।३।१२४॥ इत्याभ्यां क्रमात् स्त्र्यनटोः प्राप्तौ स्त्र्येव ॥ ५५ ॥

## यावत् संभवस्तावद्विधिः ॥ ५६ ॥

यथाप्राप्तस्य सूत्रस्य न्यायस्य वा यावतो वारान् प्रवृत्तेः संभव इति कोऽर्थ अव्याहता प्राप्तिः स्याच्चावतो वारांस्तस्य प्रवृत्तिः कार्यैव । नत्वेकवार-

मस्य प्रवृत्तिः कृतेति बुद्ध्याऽधिकवारं संभवे सत्यपि तत्प्रवृत्तिर्न क्रियत इति । यदा च संभवो व्याहतस्तदनु तत्प्रवृत्तिर्न कार्यैवेत्यस्यार्थस्य ख्यापनार्थोऽयं न्यायः। तत्र सूत्रस्य यथा। त्वक् इत्यादौ प्रथमं विरामे परे "अदीर्घात्-"॥१।३।३२॥ इत्यनेन कस्य द्वे रूपे क्रियेत। यथा त्वक्क्। पुनरनेनैव एकव्यञ्जने परे सूत्रप्रवृत्तेः संभवस्य सद्भावादाद्यकस्य द्वे रूपे क्रियेते। यथा त्वक्क्क्। ततः परं तु मध्यमकस्य "धुटो धुटि स्वे वा"॥१।३।४८॥ इति लुकि पुनराद्यकस्य "अदीर्घात्-"॥१।३।३२॥ इति द्वे रूपे प्राप्नुतः परं न क्रियेते। तथाकरणे क्रियाऽनुपरमप्रसङ्गाद्यं विधिं प्रतीति न्यायेन व्यर्थविधिनिषेधेन प्रवृत्तेः संभवस्य व्याहतत्वात्। तथा चेतुमिच्छति चिकीषतीत्यत्र परत्वात्प्रथमं चेः "स्वरहन्गमोः सनि धुटि"॥४।१।१०४॥ इति दीर्घे ततः क्यादेशे कृते पुनः के दीर्घः॥ न्यायस्य यथा। ब्रूगः कृतवचादेशस्य प्रण्यवोचतेत्यादौ भूतपूर्वकन्यायस्य प्रथमवारं प्रवर्त्तनेन वोचस्य वचत्वोपचाराद्द्वितीयवारं प्रवर्त्तनेन च वचस्यापि ब्रूत्वोपचारात्तस्मिन् परे "अकखादि-" ॥२।३।८०॥ इत्यनेन नेर्नो णः। नन्वत्र भूतपूर्वन्यायस्य द्वे अपि प्रवृत्ती किमर्थं क्रियेते; वोचे एव हि परे नेर्णः करिष्यते। मैवम्। वोचस्य धातुष्वपठितत्वात्। "अकखादि-"॥२।३।८०॥ इत्यत्र च पाठविषयस्यैव धातोर्ग्रहणात्। ज्ञप्तिकृत्वस्य "य्वृत्सकृत्"॥४।१।१०२॥ इति सूत्रम्। तद्धि व्येग् संवरणे इत्यस्य "आत्सन्ध्यक्षरस्य"॥४।२।१॥ इति कृतात्वस्य क्ये संवीयते इत्यादावेकवारं "यजादिवचेः किति"॥४।१।७९॥ इत्यनेन या इत्यस्य य्वृति वि इति जाते पुनस्तस्यैकदेशविकृतन्यायेन यजादित्वस्यैव सद्भावाद् "यजादि-"॥४।१।७९॥ इत्यनेन प्राप्तय्वृन्निषेधाय कृतम्। यदि चायं न्यायो न स्यात्तदैकवारं य्वृत्सूत्रं प्रवृत्तमिति कृत्वा द्वितीयवारं प्रवृत्तिसंभवे अव्याहतेऽपि प्रागेव चरितार्थीभूतत्वात् स्वयमेव न प्रवर्त्स्यतीत्यतः किमर्थं "य्वृत्सकृत्"॥४।१।१०२॥ इति सूत्रं क्रियेत; यत्तु कृतं तदेतन्न्यायारेकयैवेति। अनाग्रहितां पुनरस्य न काप्यवगृह्णीमः॥५६॥

## संभवे व्यभिचारे च विशेषणमर्थवत् ॥ ५७ ॥

यत्र विशेष्ये विवक्षितविशेषणस्य न संभवो नापि संभवासंभवरूपो व्यभिचारस्तत्र तद्विशेषणोपन्यासो व्यर्थत्वान्न कार्य इत्यर्थः। यं विधिं प्रत्युपदेशो-

ऽनर्थकः स विधिर्बाध्यते इति न्यायस्य प्रपञ्चोऽयं न्यायः। अनेनापि व्यर्थविशेषणोपन्यासविधेरेव निषिध्यमानत्वात्। यथा "तौ मुम-"॥१।३।१४॥ इत्यत्र पदान्त इति विशेषणं म्वागमस्य न योज्यते; असंभवात्। मस्य तु योज्यते। त्वन्तरसीत्यादौ संभवेन, रंरम्यत इत्यादावसंभवेन च पदान्तस्थत्वस्य व्यभिचारत्वात्। संभावकं चास्य तत्रैव सूत्रे स्वाविति। तथाहि। स्वाविति विशेषणं तावद्द्विवचनेनानुस्वारस्यानुनासिकस्य च संबन्धितम्। तत्र चानुस्वारः कस्यापि स्वो न स्यादित्यतस्तस्यैतद्विशेषणमसंभवि। अनुनासिकस्तु स्वोऽप्यस्वोऽपि च स्यादित्यतः संभवित्वाद्व्यभिचारित्वाच्चैतन्न्यायेन तस्यैवैतद्विशेषणं सार्थकम्। एवं च सति स्वाविति विशेषणमनुनासिकस्यैव निर्देष्टुं युक्तम्। तथापि यद्द्विवचनेनोभयोरपि निर्दिष्टं तदुभयोः सम्बन्धनेऽप्येतन्न्यायात् स्वयमेवानुनासिकस्यैव संभन्त्स्यते इत्याशयैव। अस्य च व्यभिचारित्वाद्द्वे ब्रह्मणी वेदितव्ये इत्यादौ द्विवचनप्रयोगान्यथानुपपत्त्या ब्रह्मणोर्द्वित्वव्यभिचाराभावेऽपि द्वे इति विशेषणम्॥ ५७॥

## सर्वं वाक्यं सावधारणम्॥ ५८॥

एवस्याप्रयोगेऽपि सर्ववाक्येष्वेवोऽवधारणार्थो लभ्यते इत्यर्थः। "सिद्धिः स्याद्वादात्"॥१।१।२॥ इत्युक्त्या सर्वत्र स्याद्वादाश्रयणे प्रसक्तेऽपि क्वचिदेव स्याद्वादः श्रयितव्यो नतु सर्वत्रेति ख्यापनार्थोऽयं न्यायः। यथा "समानानां तेन-"॥१।२।१॥ इत्यत्र दीर्घः स्यादेवेति वाक्यस्यावधारणाद्दण्डाग्रमित्यत्र दीर्घोऽभूदेव। ज्ञापकं तु "ऋलृति ह्रस्वो वा"॥१।२।२॥ इत्यादौ विकल्पोक्तिस्तथाहि। एतन्न्यायाभावे तावत् ह्रस्वः स्यादित्येतावत्युक्ते ह्रस्वः स्याच्च न स्याच्च। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने"॥५।४।२८॥ इति सूत्रेण कामचारेऽपि सप्तम्या विहितत्वात्। तथाच विकल्पोक्तिं विनाऽपि स्वयं द्वैरूप्यसिद्धेः किमर्थं विकल्पं कुर्यात्। परं ह्रस्वः स्यादित्यप्युक्ते एतन्न्यायाद् ह्रस्वो नित्यमेव भविष्यतीत्याशङ्क्य विकल्पार्थं वेति वचनं सफलम्॥ उपलक्षणत्वात् क्वचित्पदमपि सावधारणम्। यथा "लुगस्यादेत्यपदे"॥२।१।११३॥ इत्यत्रापदे एवेत्यपदादिस्थे एवादेति परे इत्यवधारणाद्दण्डाग्रमित्यत्र "वृत्त्यन्तोऽसषे"॥१।१।२५॥ इति वृत्त्यन्तस्य पदत्वनिषेधे-

नाग्रशब्दस्य पदत्वाभावात्तस्याकारे परे प्राप्तोऽप्यल्लुग्न स्यात्। यतोऽग्रशब्दस्य यद्यपि वृत्त्यवस्थायां वृत्त्यन्तत्वाद् "वृत्त्यन्तोऽसषे"॥१।१।२५॥ इत्यनेन पदत्वनिषेधात्पदत्वं नास्ति; परं यदा वृत्तेः पूर्वं पदत्वमासीत्तदाऽयमकारः पदादिस्थोऽप्यासीदित्यतोऽपदादिस्थे एवेत्यवधारणं भग्नमिति। यस्त्वेकान्तेनापदादिस्थ एवाकारस्तस्मिन् परे "लुगस्य-"॥२।१।११३॥ इत्यल्लुक् स्यादेव। यथा पचन्ति। अत्र शवोऽकारस्य अन्तिस्थे अकारे परे लुक्। आपादिका चास्यापद इत्यनवधारणोक्तिः। सा ह्येतन्न्यायात्स्वयमवधारणं लप्स्यते इत्याशयैव कृता। अस्यासामर्थ्यसमर्थकं तु द्विर्बद्धं सुबद्धमिति न्यायस्तथाहि। यदि तावत्सर्वं वाक्यं सावधारणमेव स्यात्तदा सकृद्बद्धमपि सुबद्धमेवेति किमर्थं द्विर्बध्येत। यत्तु केचिद्विधयो द्विर्बद्धास्तत्तत्तद्वाक्यानामनवधारणत्वादेव॥ ५८॥

## परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति॥ ५९॥

वदर्थं सादृश्यरूपम्। अन्यथाऽन्यस्यान्यरूपत्वे प्ररूप्यमाणे विरोधः स्यादित्यतोऽयं न्यायः। यथा "वाऽन्यतः पुमांष्टादौ स्वरे"॥१।४।६२॥ इत्यत्र पुमानित्यस्य पुंवदित्यर्थः सिद्धः। अत्र हि परार्थो नपुंसकस्तत्र प्रयुक्तः पुंशब्दस्ततो नपुंसकोऽपि सन् पुंस्त्वकार्याणि लभते इति भावः। यथा मृदवे कुलायेत्यादौ मृदुशब्दस्य पुंवद्भवनान्नपुंसकत्वलक्षणो "अनाम्स्वरे-"॥१।४।६४॥ इति नागमो नागात्। अस्य ज्ञापकं तु "वाऽन्यतः-"॥१।४।६२॥ इति सूत्रे पुमानिति निर्देश एव। एतन्न्यायाभावे हि पुंवदिति निर्दिश्येत। अस्योपरतेस्तु "परतः स्त्री पुम्वत् स्त्र्येकार्थेऽनूङ्"॥३।२।४९॥ इति सूत्रे पुंवदितिनिर्देशः। एतन्न्यायाश्रयणे हि पुमानित्युक्तेऽपि सरति॥ ५९॥

## द्वौ नञौ प्रकृतमर्थं गमयतः॥ ६०॥

नञावित्यर्थप्रधानो निर्देशस्तेन द्वौ निषेधौ निषेधद्वयस्य प्रयोगात् पूर्वं यः स प्रकृतोऽर्थो विधिरूपस्तं ब्रूतः। यथा "न नाम्येकस्वरात्-"॥३।२।९॥ इति सूत्रस्थो विभक्तेर्लुपो निषेधार्थो नञ्शब्दः पुरः पुरोऽनुवर्त्तमानो यावत्

१ वतं विनाऽपीति पाठान्तरम्।

"नेन्सिद्धस्थे"॥३।२।२९॥ इति सूत्रस्थद्वितीयनञा मिलितस्तावता विभक्तिलुपो विधिमेवाह स्म । उन्नयनं चास्य "न नाम्येक-"॥३।२।९॥ इत्यतो विभक्तिलुब्निषेधार्थे नञ्यनुवर्त्तमानेऽपि विभक्तिलुब्विध्यर्थं "नेन्सिद्ध-"॥३।२।२९॥ इत्यत्र पुनर्नञ्ग्रहणात् । यदि हि द्वितीयेन नञा पूर्वनञ्सम्बन्धी निषेधरूप एवार्थो-दृढीक्रियमाणः स्यात्तदा विभक्तिलुब्निषेधार्थे नञ्यनुवर्त्तमाने सति तल्लुब्विध्यर्थी आचार्यः कथं पुनर्द्वितीयनञं गृह्णीयात् । यत्तु गृहीतस्तदेतन्न्यायाद्द्वितीयनञा विध्यर्थभवनसंभावनादेवेति । नमोनमस्ते सततं नमोनम इत्यादौ नमः शब्दादीनामसकृत्प्रयोगे स्वार्थद्रढनमेव दृश्यते । ततो नञोऽपि तथैव प्रसक्ते सति तन्निषेधार्थोऽयं न्यायः । इह च द्वाविति समसङ्ख्योपलक्षणम्; तेन चतुःषडादयोऽपि नञो विधिगमका एव । एकत्र्यादिविषमसंख्यास्तु निषेधगमका एवेत्यूह्यम् । अस्य च दभ्रत्वात्संभ्रमादौ नञोऽसकृत्प्रयोगेऽपि निषेधार्थतैव । यथा कश्चिद् भुञ्जानोऽमुकं परिवेषयामीत्युक्तस्तदनिच्छुः सहसा प्रत्याह, न नेति ॥६०॥

## चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति ॥ ६१ ॥

चस्याविशेषेण समुच्चयमात्रार्थत्वाद्विजातीयस्यापि समुच्चये प्रसक्तेऽयं न्यायः। तत्रोपसर्गादुपसर्गं यथा । "प्रतेश्च वधे"॥४।४।९४॥ १ । प्रकृतेः प्रकृतिं यथा । "एतदश्च व्यञ्जनेऽनग्नञ्समासे"॥१।३।४६॥ २ । प्रत्ययात् प्रत्ययं यथा । "अङौ च"॥१।४।३९॥ ३ । आदेशादादेशं यथा । "आ च हौ"॥४।२।१०१॥ ४ । आगमादागमं यथा । "अश्च लौल्ये"॥४।३।११५॥ ५ । अर्थादर्थं यथा । "अतिरतिक्रमे च"॥३।१।४५॥ ६ । वाक्यार्थाद्वाक्यार्थं यथा । "तस्य व्याख्याने च ग्रन्थात्"॥६।३।१४२॥ इत्यादि ७ । एषु क्रमेणोपादिति १ तद इति २ घुटीति ३ इरिति ४ स्सोन्त इति ५ पूजायामिति ६ तत्र भवे ७ इत्येषां समुच्चयः । नन्वर्थवाक्यार्थयोः को भेदः । उच्यते । एकपदरूपोऽर्थः । पदद्वयादिमयस्तु वाक्यार्थः । अस्य च विमुद्रकं पूर्वोक्तेष्वेव "प्रतेश्च वधे"॥४।४।९४॥ इत्यादिसूत्रेषु विजातीयसमुच्चयव्यवच्छित्त्यै यत्नाकरणम् । तथाहि । चस्य तावदेषु समुच्चयमात्रमर्थः । समुच्चेयं च "किरो लवने"॥४।४।९३॥ इत्यादि पूर्वसूत्रस्थं द्विधा । सजातीयं विजातीयं च । तत्र सजातीयमेवोपसर्गादि समुच्चेतुमिष्टं नतु विजातीयं

लवनादि। ततो विजातीयसमुच्चयव्यवच्छित्त्यै कश्चिद्यत्नः कृतो विलोक्येत। यत्तु न कृतस्तदेतन्न्यायाशयैव। अनित्यतां त्वस्य न पश्यामः। समुच्चिनोतीतिवचनाच्च समुच्चयार्थे एव चकार एवं नियम्यते। अनुकर्षणार्थस्तु चो विजातीयमप्यनुकर्षति। तथैव चाग्रेतनन्याये उदाहरिष्यते॥ ६१॥

## चानुकृष्टं नानुवर्त्तते॥ ६२॥

चकारेणानुकृष्टं पदं वाक्यं वाऽग्रेतनसूत्रेषु न याति। अपेक्षातोऽधिकार इति न्यायाच्चानुकृष्टस्याप्यनुवृत्तौ प्रसक्तायां तन्निषेधार्थोऽयं न्यायः। तत्र पदं यथा। "गडदबादेः-"॥२।१।७७॥ इति सूत्रे स्तध्वोश्चेति चेनानुकृष्टं पदान्त इति पदं "धागस्तथोश्च"॥२।१।७८॥ इत्युत्तरसूत्रे न याति। वाक्यं यथा। "सदोऽप्रतेः परोक्षायां त्वादेः"॥२।३।४४॥ इति सूत्रात्परोक्षायां त्वादेः इत्येतावद्वाक्यं स्वञ्ज्धात्वपेक्षया विजातीयमपि सत् "स्वञ्जश्च"॥२।३।४५॥ इति सूत्रे चेनानुकृष्टमित्यतः "परिनिवेः सेवः"॥२।३।४६॥ इत्युत्तरसूत्रे न याति। तेन स्वञ्जेः परोक्षायां द्वित्वे कृते आदेरेव सस्य षः स्यान्नतु द्वितीयस्य। यथा परिषस्वजे। सेवेस्तु परोक्षायामुभयोरपि सयोः षः स्यात्। यथा परिषिषेवे। चानुकृष्टमित्येव। चेन समुच्चितं तु यथेच्छमनुवर्त्तत एव। यथा "मो नो म्वोश्च"॥२।१।६७॥ इत्यत्र पदान्त इत्यस्य म्वोश्च समुच्चयार्थश्चकारः। ततश्च चेन समुच्चितं पदान्त इत्येतपदं "स्रंस्ध्वंस्क्वस्-"॥२।१।६८॥ इत्याद्युत्तरसूत्रेष्वनुवर्त्तते। अस्य न्यायस्य ज्ञापकं तु "स्वञ्जश्च"॥२।३।४५॥ इति सूत्रवृत्तौ, चकारः परोक्षायां त्वादेः इत्यस्यानुकर्षणार्थस्ततश्च तस्य पुरोऽननुवृत्तिः सिद्धेत्यक्षराणि। अस्य चानादरणात् "मारणतोषण-"॥४।२।३०॥ इत्यत्र चो णिचि च इत्यस्यानुकर्षणार्थ इत्युक्तेऽपि तस्य पुरोऽनुवृत्तिः सिद्धा॥ ६२॥

## चानुकृष्टेन न यथासङ्ख्यम्॥ ६३॥

चानुकृष्टं नाम यथासङ्ख्ये अनुपयोगीत्यर्थः। यथासङ्ख्यमनुदेशः समानामिति न्यायस्यापवादोऽयं न्यायः। यथा "वौ व्यञ्जनादेः सन् चाय्वः"॥४।३।२५॥ अस्यार्थः। वौ उकारे इकारे वा उपान्त्ये सति व्यञ्जनादेर्धातोः परौ

सेटौ क्त्वासनौ प्रत्येकं किद्वद्वा स्याताम् । यथा मुदित्वा, मोदित्वा । मुमुदिषते, मुमोदिषते । लिखित्वा, लेखित्वा । लिलिखिषति, लिलेखिषति । तदेवमत्र क्त्वासनोर्वावित्यनेन सह सङ्ख्याया वचननिर्देशस्य च साम्येऽपि यथासङ्ख्यं नास्ति; क्त्वश्चानुकृष्टत्वात् । अय्व इति तु न व्याख्यातमत्र; तद्विनाऽपि प्रस्तुतन्यायोदाहरणसिद्धेः । ख्यापकं त्वस्य यथासंख्यमनुदेश इति न्याये सत्यपि, "वौ व्यञ्जनादेः-"॥४।३।२५॥ इत्यादावनिष्टस्यापि यथासंख्यस्य निषेधार्थं यत्नाकरणम् । अस्य च क्वचिदशक्तित्वात् "शक्तार्हे कृत्याश्च"॥५।४।३५॥ इत्यत्र चानुकृष्टसप्तम्या सह शक्तार्हयोर्यथासङ्ख्यभङ्गाय बहुवचनम् । अस्य हि सर्वत्र शक्तिमत्त्वे सति कृत्यश्चेत्युक्तेऽपि कृत्यसप्तमीभ्यां शक्तार्हयोर्यथासङ्ख्यं न प्राप्नोत्येव। परं नायं सर्वत्र शक्तिमांस्ततो यथासङ्ख्यभङ्गार्थं बहुवचनं न्यस्तम् । नच कृत्यानां बहुत्वादेवेदं बहुवचनमिति वाच्यम् । "प्रैषाऽनुज्ञाऽवसरे कृत्यपञ्चम्यौ" ॥५।४।२९॥ इति सूत्रे कृत्येभ्य एकवचनस्याप्यनुमीयमानत्वात् ॥ ६३ ॥

## व्याख्यातो विशेषार्थप्रतिपत्तिः ॥ ६४ ॥

व्याख्यायाः सूत्रतोऽभ्यर्हितत्वज्ञापनार्थोऽयं न्यायः । यथा करीषगन्धेरपत्यं वृद्धं स्त्री "ङसोऽपत्ये"॥६।१।२८॥इत्यणि, "अनार्षे वृद्धे-"॥२।४।७८॥ इत्यनेनाणः ष्यादेशे; "अणञेयेकण्नञ्स्नञ्टिताम्"॥२।४।२०॥ इत्यनेनाणन्तलक्षणो ङीः प्राप्नोति; परं न स्यात् । तत्राणः स्वरूपस्थस्य ग्रहणात्, इह चाणः ष्यरूपीभवनात् । एतच्च "अणञेयेकण्-"॥२।४।२०॥ इत्यत्र व्याख्यानत एव लभ्यते; ज्ञापकान्तराभावात् । ततश्च ङ्यभवने अदन्तत्वात् "आत्"॥२।४।१८॥ इति आपि; कारीषगन्ध्या इत्येव स्यात् । अनुमा चास्य "नेमार्द्ध-"॥१।४।१०॥ इति सूत्रे तयाययोः प्रत्यययोर्नेमादिनामपङ्क्तौ निःशङ्कं पठनात् । तद्धेतन्न्यायात्तयायेति तयायशब्दौ न, किन्तु तयायप्रत्ययान्तनामानि लप्स्यन्ते; शेषाणि तु स्वतन्त्रनामानीत्याशयैव । अख्यातिमांश्चायम् । व्याख्यातोऽर्थनैयत्यसिद्धावपि "शरदः श्राद्धे कर्मणि"॥६।३।८१॥ इत्यत्र कर्मणीति विशेषणोक्तेः । एतन्न्यायस्य ख्यातिमत्त्वे हि "सृजः श्राद्धे ञिक्यात्मने तथा"॥३।४।८४॥ इत्यत्र यथा श्राद्धः श्रद्धावानिति लभ्यते । "श्राद्धमद्यभुक्तमिकेनौ"॥७।१।१६९॥ इत्यत्र तु श्राद्धं पितृदैवत्यं कर्मेति।

तथा "शरदः श्राद्धे कर्मणि"॥६।३।८१॥ इत्यत्रापि श्राद्धशब्देन पितृदैवत्यं कर्म व्याख्यानतो लप्स्यत एवेति किमर्थं कर्मणीति विशेषणं प्रयुज्येत ॥ ६४ ॥

**यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ॥६५॥**

यत्रेति वाक्याङ्गभूतपदसमुदाये इति विशेष्यमध्याहार्यम् । अस्तिना च भवतिर्विद्यतिरित्यादयोऽपि लक्ष्याः; एकार्थत्वात् । भवन्ती वर्त्तमाना । उपलक्षणत्वात्प्रकरणादिवशात्सप्तम्यादिपरोऽपि प्रयुज्यते इति । आख्यातपदरहितत्वेन वाक्यत्वरहितस्य पदसमुदायस्य वाक्यीकरणार्थमस्तीत्याद्याख्यातपदमवश्यप्रयोक्तव्यमाख्यातपदस्यैव वाक्यसंज्ञोक्तेस्तद्विना वाक्यत्वस्याभवनादित्यर्थः । कश्चित्क्रियापदं साक्षाददृष्ट्वा वक्ष्यमाणोदाहरणेषु वाक्यत्वाभावमाशङ्किष्यते इत्यतस्तदाशङ्कानिरासार्थोऽयं न्यायः । तत्र भवन्ती यथा । जम्बूद्वीपस्तत्र सप्त वर्षाणि । अत्रास्ति, सन्तीति । सप्तमी यथा । "शिघुट्"॥१।१।२८॥ "औदन्ताः स्वराः"॥१।१।४॥ अत्र स्यात्, स्युरिति । पञ्चम्याशिषौ यथा । देवो मुदे वो वृषभः परे च । अत्रास्तु, सन्त्विति; भूयाद् भूयासुरिति वा । ह्यस्तन्यद्यतनीपरोक्षा यथा । अवन्त्यां विक्रमनृपस्तस्य द्वापञ्चाशद्वीराः । अत्रासीदासन्निति; अभूदभूवन्निति; बभूव बभूवुरिति वा । श्वस्तनी यथा । अतः परं श्वो भोजनम् । अत्र भवितेति । भविष्यन्ती यथा । अद्य नश्चतुर्षु गव्यूतेषु भोजनम् । भाविन्यां तु पद्मनाभः सूरदेव इत्यादि । अत्र भविष्यति, भविष्यन्तीति । क्रियातिपत्तिप्रयोगस्तु प्रायः साक्षादेवेक्ष्यते । प्रदर्शकं त्वस्य "तदस्य पण्यम्"॥६।४।५४॥ इत्यादिसूत्रनिर्देशः । अत्र ह्यस्तीतिक्रियापदमस्त्येव । अन्यथा अर्थसङ्गत्यभवनात् । एवं सत्यपि यदस्तीति साक्षान्नोक्तं तदेतन्न्यायाशयैव । अनित्यत्वाच्चास्य क्वचिदन्यक्रियाऽध्याहारोऽपि । यथाऽर्हम् । अत्र प्रणिदध्महे इति ॥ ६५ ॥

**इति स्वसमुच्चितानां पञ्चषष्टिमितन्यायानां बृहद्वृत्तिः ।**

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणीः
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ॥
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक एष लोचनमितः सम्पूर्णतां लम्भितः ॥ २ ॥



अथ स्वसमुच्चितेष्वपि ये केचिन्न्यायाः केचिन्न्यायप्रकारा वचनविशेषाश्च प्रायस्तादृग्व्यापकत्वज्ञापकादिरहिताः सन्ति ते विव्रियन्ते—

## यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ॥ १ ॥

इट इति शेषः । उपाधिर्व्यवच्छेदकं विशेषणमिति यावत् । यद्विशेषणविशिष्टस्य धातोः प्रत्ययस्य वा इटो विभाषा विकल्पस्तद्विशेषणविशिष्टस्यैव तस्य "वेटोऽपतः" ॥४।४।६२॥ इतीड्निषेधः कार्यो न तु तद्विशेषणाभावे । इष्टनियमार्थोऽयं न्यायः । यथा "गमहनविद्लृविशदृशो वा" ॥४।४।८३॥ इत्यनेन विद्लृंती लाभे इत्यस्यैव वेट्त्वाद्विदक् ज्ञाने इत्यस्य क्तयोः परयोः "वेटोऽपतः" ॥४।४।६२॥ इतीड्निषेधो न, किन्तु नित्यमेवेट् । यथा विदितः, विदितवान् । ननु "गमहन-" ॥४।४।८३॥ इत्यत्र विद्लृं इति सानुबन्धोपादानेन विन्दतेरेव वेट्त्वाद्वेत्तेः क्तयोरिड्निषेधो न भावीति किमत्र न्यायेन । सत्यम् । परं नानुबन्धकृतान्यसारूप्येति न्यायेनानुबन्धवशाद्वैरूप्यं न स्यात् । तथा हृषितः, हृषितवान्; तुष्ट इत्यर्थः; अत्र "वेटोऽपतः" ॥४।४।६२॥ इतीड्निषेधो न; केशलोमविस्मयाद्यर्थस्यैव हृषेर्वेट्त्वात् । अस्य चानुवादकं "आदितः" ॥४।४।७१॥ "नवा भावारम्भे" ॥४।४।७२॥ इत्यनयोः पृथक् सूत्रकरणम् । तथाहि । आदितो नवा भावारम्भे इत्येकयोगकरणेऽपि तावदादितां धातूनां भावारम्भार्थक्तयोः परयोर्वेट्त्वेन पारिशेष्यात्कर्तृकर्मादिविहितयोः क्तयोः "वेटोऽपतः" ॥४।४।६२॥ इतीड्निषेधः सिध्यति । परं भावारम्भे एव वेट्त्वादेतन्न्यायबलेन भावारम्भविहितयोरेव क्तयोरिड्निषेधः प्राप्नोति; नतु कर्तृकर्मादिविहितयोस्तथाच साक्षाद्विरोधः। कथम् । आदितो नवा भावारम्भे इत्यनेन आदितां भावारम्भार्थ क्तयोरिड् विकल्प्यते । "वेटोऽपतः" ॥४।४।६२॥ इत्यनेन च भावारम्भार्थक्तयोरेव स निषिध्यत इति । पृथग्योगकरणे तु कर्तृकर्मादिविहितयोः क्तयोरिड्निषेधः "आदितः" ॥४।४।७१॥ इत्यनेन सिद्धो, भावारम्भविहितयोस्तूत्तरेण तद्विकल्प इति व्यवस्थितत्वात् "वेटोऽपतः" ॥४।४।६२॥ इत्यस्य क्वचिदप्यादिद्धातुष्ववकाशाभावादेवाप्रवृत्त्या विरोधः परिहृत एव स्यात् । तदेवमेतन्न्यायोद्भूतविरोधनिरोधार्था पृथग्योगकृतिरिमं न्यायं ज्ञापयति ॥ १ ॥

## यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ॥ २ ॥

यथा अश्वेन चैत्रः संचरते इत्यादौ चैत्र इत्यनेन व्यवधानेऽपि तृतीयान्तेन योगसद्भावात्संचरते इत्यत्र "समस्तृतीयया" ॥३।३।३२॥ इत्यात्मनेपदं सिद्धम्। योगः किलानन्तरयोरेव प्रसिद्ध इत्यतोऽयं न्यायः ॥ २ ॥

## येन विना यन्न भवति तत्तस्यानिमित्तस्यापि निमित्तम् ॥३॥

यद्येन सहचरितमेव दृश्यते नत्वेकाकि, तत्तस्य निर्निमित्ततया प्रसिद्धस्यापि निमित्तमित्युच्यते । ततश्च क्वचित्तदभावे निमित्ताभावे इति न्यायान्नैमित्तिकमपि निवर्त्तते इति तात्पर्यम् । यथा कृतणः कीर्त्तादेशो णिचा सहचरित एव दृश्यते इत्यतो णिच् कीर्त्तादेशस्य निर्निमित्तं विहितस्यापि निमित्तमित्युच्यते । तथाच कृततीत्यत्रानित्योणिच्चुरादीनामिति न्यायेन णिचोऽनित्यत्वात्तदभावे कीर्त्तादेशोऽपि न्यवर्त्तत ॥ ३ ॥

## नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ॥ ४ ॥

उपसर्गस्यापि नामत्वाद्ग्रहणे प्राप्ते निषेधार्थोऽयं न्यायः। यथा उपस्पृशतीत्यत्र स्पृशेरुपरूपान्नाम्नः परत्वेऽपि "स्पृशोऽनुदकात्" ॥५।१।१४९॥ इत्यनेन क्विप् न स्यात् । तेन उपस्पृगिति प्रयोगो न साधुः॥ प्रायेणेति वचनान्नामग्रहणे क्वाप्युपसर्गस्यापि ग्रहणादर्द्धभागित्यादिवत् प्रभागित्यादावपि "भजो विण्" ॥५।१।१४६॥ इति विण् सिद्धः ॥ ४ ॥

## सामान्यातिदेशे विशेषस्य नातिदेशः ॥ ५ ॥

अन्यत्र प्रसिद्धस्यार्थस्यान्यत्र कथनमतिदेशः। विशेषाः किल सामान्येऽन्तर्भवन्तीति युक्त्या सामान्येऽतिदिष्टे विशेषस्याप्यतिदेशः प्राप्नोतीत्यतोऽयं न्यायः। यथा "भूतवच्चाशंस्ये वा"॥५।४।२॥ इति सूत्रे भूतवदित्यनेन भूतमात्रस्यैवातिदेशे अनद्यतनपरोक्षत्वाविशिष्टभूतकालस्यातिदेशाभवनादुपाध्यायश्चेदागमत् एते तर्कमध्यगीष्महीत्यादौ स्थानद्वयेऽपि भूतमात्रलक्षणाद्यतन्येव "भूतवच्च-"॥५।४।२॥ इति सूत्रेण स्यान्नत्वनद्यतनत्वपरोक्षत्वविशिष्टभूतविहिते ह्यस्तनीपरोक्षे ॥ ५ ॥

## सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन विशेषः॥६॥

तार्किकाणां सामान्यविशेषयोर्बाध्यबाधकव्यवहारो नास्ति, परं व्याकरणेऽस्तीति ज्ञापनार्थोऽयं न्यायः । सर्वत्रापीति कोऽर्थः । प्राप्तावस्थायां, प्राप्स्यदवस्थायां च । तत्र प्राप्तावस्थायां यथा । कोऽर्थ इत्यादौ सेः "सोरुः"॥२।१।७२॥ इति रुभवनादनु प्राप्तं "रोर्यः"॥१।३।२६॥ इति सामान्यस्वरनिमित्तकं सूत्रं बाधित्वा "अतोऽति-"॥१।३।२०॥ इत्येतद् विशेषस्वरनिमित्तकसूत्रं प्रावर्त्तिष्ट। प्राप्स्यदवस्थायां यथा। सोऽहं तथापि तवेत्यादि। अत्र "रोर्यः"॥१।३।२६॥ इति "तदः सेः-" ॥१।३।४५॥ इति "अतोऽति-"॥१।३।२०॥ इति सूत्राणां प्राप्तिर्विचार्यते। तथाहि। "रोर्यः"॥१।३।२६॥ इति तावत्सामान्यसूत्रम्, सर्वरुविषयत्वात्। "तदः सेः-"॥१।३।४५॥ इत्येतत्तु तदपेक्षया विशेषसूत्रम्, सिमात्रविषयत्वात्। "अतोऽति-" ॥१।३।२०॥ इत्येतत्तूभयोरपि तयोः स्वरसामान्यनिमित्तकयोरपेक्षया विशेषसूत्रम्, अकारमात्रनिमित्तकत्वात्। इह च "तदः सेः-"॥१।३।४५॥ इत्यस्य प्राप्तौ सत्यां "सोरुः" ॥२।१।७२॥ इति सूत्रेणान्तरिता द्वयोः सूत्रयोः प्राप्तिरस्ति। इयं च प्राप्स्यत्तेत्युच्यते; सूत्रान्तरप्रवृत्त्या अन्तरितत्वात्। कथम्। यदि "तदः सेः-" ॥१।३।४५॥ इति सेर्लुकमकृत्वा परत्वात् "सोरुः"॥२।१।७२॥ इति रुः करिष्यते; तदा तदनु "रोर्यः"॥१।३।२६॥ इति "अतोऽति-"॥१।३।२०॥ इति च सूत्रे प्राप्स्येते इति। ततश्च "रोर्यः"॥१।३।२६॥ इत्यस्य सामान्यसूत्रस्य प्राप्स्यत्त्वे सति "तदः सेः-"॥१।३।४५॥ इति विशेषसूत्रेण "सोरुः"॥२।१।७२॥ इत्यस्य प्रवृत्तिर्निरुध्यते। तन्निरोधे च परंपरया "रोर्यः"॥१।३।२६॥ इत्येतदेव बाधनम्। "सोरुः"॥२।१।७२॥ इत्येतत्प्रवर्त्तनानन्तरमेव तस्य प्रवृत्तिसंभवात्। "अतोऽति-"॥१।३।२०॥ इति विशेषसूत्रस्य प्राप्स्यत्त्वे सति तु "सोरुः"॥२।१।७२॥ इत्यस्य प्रवृत्तिर्न निरुध्यते। तदनिरोधेन च परंपरया "अतोऽति-"॥१।३।२०॥ इत्यस्यैव प्रवृत्तिरव्याहती भूता। तथाच प्रत्युत "अतोऽति-"॥१।३।२०॥ इत्यनेन "तदः सेः-"॥१।३।४५॥ इत्येतदेव बाध्यते; एतन्न्यायात्। तदेवं "अतोऽति-" ॥१।३।२०॥ इत्येव बलिष्ठत्वात् "सोरुः"॥२।१।७२॥ इत्यस्य पुरस्करणपूर्वं प्रवृत्तमितिकृत्वा सोऽहमिति सिद्धम्। इह चोदाहरणेऽस्माभिर्यदेष न्यायोऽवतारितस्तत् "तदः सेः-"॥१।३।४५॥ इत्यस्य न्यासे न्यासकारेणात्रास्यावतारणादेव। अन्यथा त्वेतन्न्यायावतारणं विनाऽपि

पादार्थेतिपदेनात्र सेर्लुगभावः सिध्यत्येव । तथाहि । "तदः सेः-"॥१।३।४५॥ इत्यनेन तावत्सेर्लुक् तदा क्रियते, यदि सा लुक् पादपूरणार्था स्यात्। इह तु सेर्लुकि साहं तथापीति; अलुकि तु सोऽहं तथापीत्युभयथाऽपि पादः पूर्यत एवेत्यतः सेर्लुकः प्राप्तेरप्यभावात्किमिति सिलुग्निवारणार्थमत्रैष न्यायोऽवतार्यते इति ॥ तक्रकौण्डिन्यन्यायश्चास्यैव प्रपञ्चस्तथाहि। तक्रं देयमस्मै स तक्रदेयः, स चासौ कौण्डिन्यश्च तक्रकौण्डिन्यः। मयूरव्यंसकादित्वाद्देयशब्दलोपः। स एव न्यायो दृष्टान्तः। कोऽर्थः, यथा द्विजेभ्यो दधि देयमित्युक्त्वा कौण्डिन्याय तक्रं देयमित्युक्ते कौण्डिन्यस्य दधिदाननिषेधोऽनुक्तोऽपि प्रतीयते; तथा यत्र विशेषलक्षणेन विधिना पूर्वोक्तस्य सामान्यलक्षणस्य विधेर्बाधोऽनुक्तोऽपि प्रतीयते तत्रायं न्यायः। यथा "व्यञ्जनादेरेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा"॥३।४।९॥ इति सामान्येन भृशाभीक्ष्ण्ये यङं विधाय पुनः "गत्यर्थात्कुटिले"॥३।४।११॥ इति विशेषविधिरुक्तस्तेन गत्यर्थेभ्यो भृशाभीक्ष्ण्ये यङ्निषेधोऽनुक्तोऽपि गम्यते। तदेवमत्रापि विशेषेण सामान्यबाध इत्येतावदेव जातम्; नत्वपरं किञ्चिदिति ॥ ६ ॥

## ङित्त्वेन कित्त्वं बाध्यते ॥ ७ ॥

बलाबलोक्तिन्यायोऽयम्। एवमुत्तरोऽपि। यथा णूत् स्तवने, कुटादिः। नुवितः; प्रणुवितः। अत्र "उवर्णात्"॥४।४।५८॥ इत्यनेन कित्प्रत्ययस्यादौ विहित इड्निषेधो नाभूत्। कुटादित्वहेतुकेन क्तस्य ङित्त्वेन तत्कित्त्वस्य बाधनात्। ङित्त्वेनेति किम्। प्रकुत्य; अत्र यपः पित्त्वेन क्त्वाकित्त्वस्याबाधनाद्गुणाभावः। कित्त्वमिति किम्। ध्रुंत् गतिस्थैर्ययोः, कुटादिः। क्त्व, प्रध्रुत्य। अत्र कुटादित्वहेतुकेन यपो ङित्त्वेन पित्त्वस्याबाधनात्तागमः। अस्य न्यायस्यानित्यत्वाच्च नूतः, प्रणूतवानित्यपि स्यात्। इह च ङित्त्वेन कित्त्वमित्युपलक्षणम्। तेनान्यत्रापि धात्वादीनां पूर्वावस्थानुबन्ध उत्तरावस्थानुबन्धेन बाध्यते। तत्र धातोर्यथा। चक्षयादेशस्य ख्यागो गित्त्वेन प्राक्तनेदित्त्वस्य बाधनात् धात्वादेशो धातुवदिति स्थानिवद्भावेन प्रसक्तस्यापि नित्यात्मनेपदित्वस्य निवृत्त्या उभयपदित्वं सिद्धम्। यथा आचख्यौ; आचख्ये। प्रत्ययस्य यथा। युतात्। अत्र तातङो ङित्त्वेन तुवो वित्त्वस्य बाधनात् "उत औविति व्यञ्जनेऽद्वेः"॥४।३।५९॥ इति और्नेत्यादि।

क्वचिच्च न बाध्यतेऽपि । यथा प्रकृत्य । अत्र यपः पित्त्वेन क्त्वाकित्त्वस्याबाधनाद्गुणाभावः ॥ ७ ॥

## परादन्तरङ्गं बलीयः ॥ ८ ॥

यथा स्योमा इत्यत्र सीव्यतेः "मन्वन्-" ॥५।१।१४७॥ इति मनि, "य्वोः प्वय्" ॥४।४।१२१॥ इतिवलोपमपवादत्वात् "लघोरुपान्त्यस्य" ॥४।३।४॥ इति गुणं च; नित्यत्वाद्बाधित्वा, ऊटि कृते, तदनु च परत्वादुपान्त्यगुणे प्राप्तेऽप्यन्तरङ्गत्वात्प्रथमं यत्वं सिद्धं; पश्चात्तु ऊटो गुणः । यद्यपि च परान्नित्यं, नित्यादन्तरङ्गमिति न्यायाभ्यामस्य न्यायस्यार्थो लब्ध एव । तथाहि । परादपि नित्यं तावद्बलवत्; तस्मादपि च यद्यन्तरङ्गं बलवत्तदा परादन्तरङ्गस्य बलवत्त्वे किं वाच्यमिति । तथापि तयोर्न्याययोः, परादन्तरङ्गमित्यस्य च न्यायस्य भिन्नाभिन्नोदाहरणेष्ववतारात्परादन्तरङ्गमित्येषोऽपि न्यायो दर्शितः ॥ ८ ॥

## प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ॥ ९ ॥

लोपशब्दस्य लुग्लुपोर्वाचकत्वेऽपि लुकि स्थानिवद्भावेनैव सिद्धत्वाल्लुप्येतन्न्यायाधिकारः। प्रत्ययस्य लुपि सत्यां "लुप्यय्वृल्लेनत्"॥७।४।११२॥ इति सूत्रेण य्वृल्लेनदादेशवर्जानां तन्निमित्तकसर्वकार्याणां निषेधे कृतेऽपि लुप्तप्रत्ययान्तनिर्दिष्टकार्याणामनुमत्यर्थोऽयं न्यायः । यथा मासेन पूर्वायेत्यत्रवन्मासपूर्वायेत्यत्र "ऐकार्थ्ये"॥३।२।८॥ इत्यनेन समासान्तर्वर्त्तितृतीयाया लुप्यपि तृतीयान्तलक्षणः "तृतीयान्तात्पूर्वावरंयोगे" ॥१।४।१३॥ इत्यनेन पूर्वशब्दस्य सर्वादित्वनिषेधः सिद्धः। तथा पापचीति। अत्र लुबन्तरङ्गेभ्य इति न्यायात् प्रथममेव यङो लुप्यपि एतन्न्यायेन यङन्तलक्षणं "सन्यङश्च" ॥४।१।३॥ इति द्वित्वं सिद्धम् । बोधकं चास्य "सिज्विदोऽभुवः"॥४।२।९२॥ इत्यत्र भूवर्जनम्। तथाहि । अभूवन्नित्यत्रानः पुसादेशनिषेधार्थं हि तत्कृतम्। तस्य च प्राप्तिरेव नास्ति । भुवोऽत्र सिज्लुबन्तत्वात् सूत्रे च सिजिति सिजन्तस्य ग्रहणात् । तथापि यद्भूर्वर्जितस्तज्ज्ञायते लुप्तसिजन्तस्यापि सिजन्तकार्यमेतन्न्यायात्प्राप्नोतीति। क्वचिदप्रणिधेयश्चायम्। यौधेयशब्दस्य "द्रेरञणोऽप्राच्यभर्गादेः" ॥६।१।१२३॥ इत्यञ्लोपविधायकसूत्रस्थभर्गादिगणे पाठात्। तथाहि। युधा नाम काचित्; तस्या अपत्यानि

"द्विस्वरादनद्याः" ॥६।१।७१॥ इत्येयणि; यौधेयाः । ते शस्त्रजीविसङ्घाः स्त्रीत्व-विशिष्टा विवक्षिता इति "यौधेयादेः-"॥७।३।६५॥ इत्यञि, "अणञेय-"॥२।४।२०॥ इति ङ्यां, यौधेय्य इति निष्पन्नम्। अस्मिन्नवसरे च "द्रेरञणोऽप्राच्य-"॥६।१।१२३॥ इत्यनेनाञो लुप् प्राप्नोति । अञो लुक्करणे च निमित्ताभावे इति न्यायादञ्निमि-त्तकाया वृद्धेर्निवृत्त्या युधेय्य इति रूपं स्यात् । लोपाभावात्तु यौधेय्य इत्येव स्थितम् । तदनु यौधेयीनां सङ्घो यौधेयमित्यत्राञन्तलक्षणः "सङ्घघोषाङ्कलक्ष-णेऽञ्यञिञः" ॥६।३।१७२॥ इत्यनेनाण् यथा स्यादित्येवमर्थं तावद्भर्गादिगण-पाठेन यौधेयशब्दात् शस्त्रजीविसङ्घार्थागतस्याञो लुप् प्रतिषिध्यते । यदि चायं सर्वत्र प्रणिधेयः स्यात्तदा लुब्भूतेऽप्यञि तदन्तलक्षणः "सङ्घघोषाङ्क-"॥६।३।१७२॥ इत्यण् भविष्यत्येवेति किमर्थं यौधेयशब्दस्य भर्गादिपाठः क्रियेत । यत्त्वसौ कृतस्तदञो लुब्भवने एतन्न्यायस्य क्वचित् क्वचिदप्रणिधेयत्वात्तदन्तलक्षणः "सङ्घघोषाङ्क-"॥६।३।१७२॥ इत्यण् न भविष्यतीत्याशङ्कयैव ॥ ९ ॥

## विधिनियमयोर्विधिरेव ज्यायान् ॥ १० ॥

यत्र सूत्रे विधिनियमरूपौ द्वौ व्याख्याप्रकारौ सम्भवतस्तत्र नियममपास्य विधिरेव व्याख्येयस्तस्यैवाप्राप्तप्रापकत्वेन प्रधानत्वात्। शास्त्रान्तरे व्याख्या क्वापि नि-यमिता नास्ति; तस्या यथाकामीनत्वात्। व्याकरणे तु तस्या अपि नियमनार्थोऽयं न्यायः । यथा "प्रत्यभ्यतेः क्षिपः"॥३।३।१०२॥ इत्यत्र क्षिपींत् प्रेरणे इत्ययं क्षिपि-रुभयपदी तौदादिको व्याख्येयस्तस्यैव परस्मैपदविध्यर्हत्वात् । नतु क्षिपंच् प्रेरणे इत्ययं केवलपरस्मैपदी दैवादिकस्तस्य सिद्धपरस्मैपदत्वेन सूत्रस्य नियमार्थताप्रसं-गात्। नियमश्चैवं प्रसज्यते। प्रत्यभ्यतिपूर्वादेव क्षिपेः परस्मैपदं नत्वन्योपसर्गपूर्वा-दनुपसर्गाद्वेति। तदेवं प्रसज्यमानाया नियमार्थतायास्त्यागेन विधिरेवात्र ग्राह्यः॥१०॥

## अनन्तरस्यैव विधिर्निषेधो वा ॥११॥

तत्र निषेधो यथा। "नामन्त्र्ये"॥२।१।९२॥ इत्यनेन "नाम्नो नोऽनह्नः"॥२।१।९१॥ इत्यनन्तरसूत्रविहितस्य नकारलुको निषेधः क्रियते। नतु परंपरैः "रात्सः"॥२।१।९०॥ इत्यादिपूर्वसूत्रैर्विहितानां सकारलुगादीनाम्। विधिर्यथा।"क्लीबे-"॥२।१।९३॥

इत्यनेनानन्तरसूत्रविहितस्य नकारलुकोनिषेधस्य विकल्पनेन विधिः क्रियते । इत्यादि। यद्यपि च शब्दशक्तिरेवैषा यद्विधिर्निषेधो वाऽनन्तरस्यैव स्यादिति; परं शब्दशक्तेरेवानुवाद्ययं न्यायो, विचित्राः शब्दशक्तय इत्यादिन्यायवत् ॥ ११ ॥

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२ ॥

यथा पर्जन्य ऊनं पूर्णं वाऽनपेक्षमाणः सर्वत्र वर्षति तथा स्वविषयं प्राप्य लक्षणेन सर्वत्र फलाभावेऽपि प्रवर्त्तितव्यमेव । अप्रवृत्तौ हि तस्यानर्थक्यं स्यादिति । यथा गोपायति, पापच्यते, चिकीर्षति, पुत्रीयतीत्यादिष्वायादीनामदन्तत्वेन तदन्तधातूनामप्यदन्तत्वात् शवो अनाकाङ्क्षायामपि "कर्त्तर्यनद्भ्यः शव्" ॥३।४।७१॥ इति शव् सिद्धः । तथा दधि अत्रेत्यत्र "ह्रस्वोऽपदे वा"॥१।२।२२॥ इति ह्रस्वस्यापि सतः पुनर्ह्रस्वः सिद्धः । ननु कथमत्र फलाभावो यतो ह्रस्वविधानसामर्थ्यादत्र यत्वादि कार्यं न स्यादिति यत्वादिकार्यान्तराभवनं ह्रस्वकरणस्य फलमस्त्येव। सत्यम्। परं कालान्तरभावीदं, नतु तादात्विकं रूपान्यथात्वादिरूपम्; अत एव पर्जन्यवदित्युपमानं साकूतम् । पर्जन्यस्यापि हि पूर्णे वर्षतस्तात्कालिकमेव फलं नास्ति। कालान्तरे त्वौषधीनिष्पत्तिरसाधिक्यादिकं फलमस्त्येव । अव्यापकश्चायम । "समानानां तेन-"॥१।२।१॥ इत्यत्राग्रेतनसूत्रसमानव्याप्तिसिद्ध्यर्थं बहुवचनप्रयोगात्। तथाहि। क्लृ ऋषभः, होतृ लृकार इत्यादौ तावद् लृऋतोः, "ऋलृति ह्रस्वो वा"॥१।२।२॥ इति ह्रस्वं बाधित्वा परत्वाद् "ऋस्तयोः" ॥१।२।५॥ इति ऋरेव प्राप्नोति। सूरेश्चात्र ह्रस्वोऽपीष्टस्ततो यावन्तः केऽपि समानास्तेषां सर्वेषामपि ऋलृति ह्रस्वः स्यादेवेति व्याप्तिसिद्ध्यर्थं "समानानां-"॥१।२।१॥ इत्यत्र बहुवचनं प्रयुक्तम्। यदि चायं न्यायो व्यापकः स्यात्तदा ऋत्ववत् ह्रस्वोऽपि भविष्यत्येवेति किमिति तदर्थं बहुवचनं प्रयुज्येत। यत्तु प्रयुक्तं तदेतन्न्यायस्याव्यापकत्वाद् ह्रस्वस्याबलत्वेन बाधं परत्वात्सबलत्वेन ऋत्वस्यैव प्रवृत्तिं च संभाव्यैवेति ॥ १२ ॥

## न केवला प्रकृतिः प्रयोक्तव्या ॥ १३ ॥

प्रकृतिर्धातुरूपाऽपि संभवेत्परं धातोः प्रत्ययान्तत्वे विवादाभावेन केवलत्वशङ्-

काया अभावान्नाम्नस्तु वक्ष्यमाणरीत्या प्रत्ययोत्पादस्य विवादापन्नत्वेन केवलत्वशङ्का-सद्भावान्नामरूपैव प्रकृतिरिहाधिक्रियते। यथा कटं करोति भीष्ममुदारं दर्शनीय-मित्यत्र यद्यपि कटरूपस्य द्रव्यस्यैव क्रियायां साक्षादुपयोगात्कटस्यैव कर्मत्वं युज्यते नतु भीष्मादीनां किमपि; तथाप्येतन्न्यायकृतनियमेन भीष्मादीनाम-विभक्तिकानामप्रयोगार्हत्वादेकविभक्तिमन्तरेण च सामानाधिकरण्यविशेषणत्वा-योगाद्यथेश्वरसुहृदां स्वयं निर्धनत्वेऽपि तदेकयोगक्षेमत्वात्तद्धनेनैव फलभाक्त्वं स्यादेवमेषामकर्मणामपि कटकर्मत्वेनैव द्वितीया सिद्धा। ननु भीष्मादीनामविभक्ति-कानामप्रयोगार्हत्वादित्यनयोक्त्या केवलत्वव्यवच्छेदमात्रसाधिनी सामान्यविभक्तिः प्रथमैवानेतुं शक्यते, नतु कर्मशक्त्यादिप्रकाशिन्यो द्वितीयाद्या विशेषविभक्तय इति चेत्तदाऽस्य न्यायस्य व्याख्यान्तरमुच्यते। तथाहि। केवलेति कोऽर्थः। क्रियारहिता प्रकृतिर्न प्रयोज्या किन्तु प्रयुज्यमानया गम्यमानया वा क्रियया सहितैव प्रयोज्या। ततोऽत्र यथा कटस्य करोतिना सम्बन्धस्तथा भीष्मादीनामपि। यथैव ह्ययं कटं करोति तथा तद्गतान् भीष्मादिगुणानपि। तत्र यद्यत् करोतिना व्याप्तुमिष्टं तत्सर्वं द्रव्यं गुणश्च कर्मेति सर्वेषां पृथक्कर्मत्वे सर्वेभ्यो द्वितीया। पश्चात्तु एकवाक्यतया विशेषणविशेष्यभाव इति। विशेषणानां विशेष्यसमानविभक्त्युपपादनार्थोऽयं न्यायः ॥ १३ ॥

## क्विबर्थं प्रकृतिरेवाह ॥ १४ ॥

यथा त्वां मां चाचक्षाणेन इति णिजि, क्विपि, तल्लुकि च युष्म् अस्म् इति मान्ताद् ङौ "टाङयोसि-" ॥२।१।७॥ इत्यनेन मस्य प्राप्तं यत्वं बाधित्वा परत्वात् त्वमादेशे पश्चाच्च त्वमयोरकारस्य प्राप्नुवतोऽपि यत्वस्य सकृद्गते स्पर्द्धे इति न्यायादभवने, युष्मदस्मदोश्चात्र णिज्क्विबन्तत्वेन सर्वादित्वाभावात् स्मिन्नादेशा-भावे त्वे मे इति स्यात् इत्येष प्रकृतन्यायानपेक्षः पक्षः। यदा तु क्विबर्थं प्रकृति-रेवाहेति न्यायः प्रयुज्यते तदा स्मिन्नादेशोऽपि स्यात्। तथाहि। अस्यार्थस्ताव-दयम्। क्विबन्तयोर्युष्मदस्मदोर्योऽर्थस्तमर्थं क्विब्रहिता युष्मदस्मद्रूपा प्रकृतिरेवाह; नहि प्रकृतिं विना क्विब् भवतीति। एतेनायं भावः। यथा अगुडित इव गुडि-तोऽपि गजो गज एवोच्यते। नहि गजं विना गुडना भवति। तथा केवला-

विव णिज्क्विबन्तावपि युष्मदस्मच्छब्दौ तावेवोच्येते, नत्वपरं किञ्चित् । एवं च केवलयोस्तयोः सर्वादित्वमस्तीति कृत्वा णिज्क्विबन्तयोरपि सर्वादित्वं विवक्ष्यते । नचात्र शब्दभेदस्यार्थभेदस्य च साक्षादेव लक्ष्यमाणत्वादयुक्तैवेयं विवक्षेति वाच्यम्; "सिद्धिः स्याद्वादात्"॥१।१।२॥ इति सूत्रेणाभिन्नानामपि भेदविवक्षाया भिन्नानामप्यभेदविवक्षायाश्चाभ्यनुज्ञानात् । कथमन्यथा पीयमानं मधु मदयतीत्यत्रैकस्यैव मधुनः कर्मत्वं कर्तृत्वं चेत्याद्युपपद्यते । ततो यथा मधुनो अभेदेऽपि भेदविवक्षा, तथाऽत्र भेदेऽप्यभेदविवक्षा । ततश्च णिज्क्विबन्तयोर्युष्मदस्मदोः केवलाभ्यां ताभ्यां सहाभेदविवक्षया सर्वादित्वाद् ङेः स्मिन्नादेशे त्वस्मिन् मस्मिन्नित्यपि स्यात् । एवं च णिज्क्विबन्तयोर्युष्मदस्मदोः शब्दभेदादर्थभेदाच्चाप्राप्तस्य सर्वादित्वस्य प्रापणार्थोऽयं न्यायः ॥ १४ ॥

## द्वन्द्वात्परः प्रत्येकमभिसम्बध्यते ॥ १५ ॥

शब्द इति शेषः । यथा "एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः" ॥ १ । १ । ५ ॥ इत्यादौ मात्राशब्द एकद्वित्रीतिद्वन्द्वात्परः सन्नेकाद्यैः सह प्रत्येकं सम्बध्यते । अन्यथेष्टार्थप्रतीतिर्न स्यादित्यतोऽयं न्यायः ॥ १५ ॥

## विचित्राः शब्दशक्तयः ॥ १६ ॥

तेनैव लिङ्गसङ्ख्यादौ वैचित्र्यं दृश्यते इति ज्ञापयर्थोऽयं न्यायः। तत्र लिङ्गवैचित्र्यं यथा। प्रशस्तं पचतीति "त्यादेश्च प्रशस्ते रूपप्" ॥७। ३ । १० ॥ इति स्वार्थिके रूपपि पचतिरूपमित्यादौ "पदं वाक्यमव्ययं चेत्यसङ्ख्यं च" ॥ (लिङ्गा-पर० ४।२) इति लिङ्गानुशासनपाठादलिङ्गस्यापि त्याद्यन्तपदस्य क्लीबलिङ्गत्वं सिद्धम् । तथा कुत्सिता स्वा ज्ञातिः; स्वार्थिके कप्रत्यये " स्वज्ञाऽजभस्त्राऽधातुत्ययकात्"॥२।४।१०८॥ इत्याप इत्वे, स्विका । अत्र ज्ञातौ "कामलकुद्दालावयवस्वाः" (लिङ्गा-पु० १४।१) इति पाठात् पुँल्लिङ्गस्यापि स्वशब्दस्य कुत्सितार्थविवक्षणाद्वाक्यावस्थायां कप्प्रत्ययान्तत्वे च स्त्रीलिङ्गत्वम्। तथा ह्रस्वा कुटी " कुटीशुण्डाद्रः"॥ ७।३।४७॥ इति स्वार्थिके रे; कुटीरः; कुटीरम् । अत्र कुटीशब्दस्य "लालसोरभसोवर्त्तिवितस्तिकुटयस्त्रुटिः" (लिङ्गा-पुंस्त्री०९।२) इति वचनात् पुंस्त्रीलिङ्गस्यापि

पुंक्लीबलिङ्गत्वम्। तथा ह्रस्वं वनं वनिका ; अत्र नान्तत्वात् "नलस्तुतत्तसंयुक्त-" (लिङ्ग-न० १।१) इति पाठात् क्लीबलिङ्गस्यापि वनशब्दस्य स्वार्थे कपि, स्त्रीलिङ्गता। तथा केऽपि शब्दाः पदान्तरस्य सापेक्षाः केऽप्यनपेक्षाश्च तत्तल्लिङ्गान्याहुः । तत्र सापेक्षो यथा। इयं गौः; अयं गौः ; अत्र गवार्थस्योभयलिङ्गत्वादियमयमितिपदापेक्षेण गोपदेन स्त्रीपुंसत्वमुच्यते। तस्य स्त्रीपुंसत्वानुक्ताविियमयमिति विशेषणयोः स्त्रीपुंसत्वानुपपत्तेः। अनपेक्षास्तु त्रिभिः प्रकारैस्तत्तल्लिङ्गान्याहुः; नाममात्रेणाऽऽदेशेन प्रत्ययेन च । तत्र नाममात्रेण। यथा माता पिता ; अत्र नाममात्रमेव स्त्रीपुंसत्वोक्तौ क्षमम् ।आदेशेन यथा । तिस्रः ; अत्र स्त्रीत्वं विनाऽनुपपद्यमानेन तिस्रादेशेन स्त्रीत्वं प्रतीयते । एवं क्रोष्टा ; अत्र पुंस्त्वजेन क्रुशस्तुनस्तृजादेशेन पुंस्त्वम् । प्रत्ययेन यथा । राज्ञी; अत्र स्त्रीत्वोद्भवेन ङीप्रत्ययेन स्त्रीत्वम् । गोचरः; अत्र पुंनामत्वोद्भवेन "गोचरसञ्चर-"॥५।३।१३१॥ इति घेन पुंस्त्वम् । सङ्ख्यावैचित्र्यं यथा । "अंअः ≍क ≍पशषसाः शिट्" ॥ १ । १ । १६ ॥ अत्र संज्ञिबहुत्वेऽपि संज्ञाया एकवचनम् । दाराः ; अत्रार्थैकत्वेऽपि बहुवचनमित्यादि ॥ १६ ॥

## किं हि वचनान्न भवति ॥ १७ ॥

वचनमिष्टार्थप्रत्यायनं, तद्बलात्किं न स्यात् ; काक्वा सर्वं स्यादित्यर्थः । इष्टार्थप्रत्यये सति शिष्टप्रयोगानुसारेण केचिद्विधयो अप्राप्ता अपि प्रवर्त्त्यन्ते, प्राप्ता अपि च केचिन्न प्रवर्त्त्यन्ते । इष्टार्थप्रत्ययाभावे तु प्राप्ता अपि केचिद्विधयो न प्रवर्त्त्यन्ते इति यावत् । "समर्थः पदविधिः" ॥७।४।१२२॥ इत्यस्यापवादोऽयं न्यायः । तत्राप्राप्तप्रवर्त्तनं यथा। सूर्यमपि न पश्यन्त्यसूर्यंपश्या राजदाराः; "असूर्योग्राद् दृशः"॥५।१।१२६॥ इति खश्। वत्सेभ्यो न हितो अवत्सीयो गोधुक्; "तस्मै हिते"॥७।१।३५॥ इतीयः। अत्र नञः क्रमाद् दृशिना हितेन च सम्बन्धोऽस्ति ; न सूर्येण वत्सैश्चेति समस्यमानपदानां मिथः सम्बन्धाभावादसामर्थ्येऽपि इष्टार्थगमकत्वात् समासः सिद्धः । प्राप्ताप्रवर्त्तनं यथा । "नहाहोर्धतौ" ॥ २ । १ । ८५ ॥ अत्र धात्वग्रे इकिश्तिवो न । इष्टार्थप्रत्ययाभावे प्राप्ताप्रवर्त्तनं यथा । सङ्घस्य भद्रं भूयादित्यत्र सङ्घभद्रमिति षष्ठीसमासो न । नहि सङ्घभद्रं भूया-

दित्युक्ते सङ्घस्य भद्रं भूयादिति प्रतीयते, अपि तु सङ्घभद्रं नाम सङ्घसम्बन्धितया प्रसिद्धं किञ्चिद्भद्रं कस्य चिद्भूयादिति॥ अभिधानलक्षणाः कृत्तद्धितसमासाः स्युरित्यपि न्यायोऽस्ति । अस्यार्थः । अभिधानमिष्टार्थप्रत्यायनं तदेव लक्षणं चिन्हं येषां कृदादीनां, कोऽर्थः इष्टार्थप्रत्ययसम्भवे कृदादयः स्युस्तदभावे तु नेति । एवं च प्रस्तुतन्यायानुयाय्येवायमपि न्यायः ॥ अथ किं हि वचनादिति न्यायस्यान्योऽर्थः कथ्यते । वचनादिति कोऽर्थः । सूत्रोक्तविधानबलात्किं न स्यात्; क्वाक्वा अप्राप्ता अपि विधयः प्रवर्त्तन्ते इत्यर्थः । यथा श्रेष्ठः, श्रेयान्; अत्र इष्ठेयस्वोः परयोः श्रादेशविधानबलेनागुणाङ्गादपि प्रशस्यशब्दाद् "गुणाङ्गाद्वेष्ठेयसू"॥७।३।९॥ इत्यनेन इष्ठेयसुप्रत्ययौ सिद्धौ । अयं भावः । यस्य किल गुणोऽङ्गं प्रवृत्तिनिमित्तं स्यात्स शब्दो गुणाङ्ग उच्यते । यथा पटुत्वगुणयोगात्पटुरित्यतः पटुशब्दो गुणाङ्गः । एवं मृदुगुरुलघ्वादिः । प्रशस्यशब्दस्य तु प्रवृत्तिनिमित्तं प्रशंसनक्रियैवेत्यतः कर्त्रादिशब्दवत् क्रियाशब्दोऽयं नतु गुणाङ्गः । ततश्च प्रशस्यशब्दादिष्ठेयसुप्रत्ययौ न प्राप्नुतः । तथापि इष्ठेयस्वोः प्रत्यययोः परयोः प्रशस्यशब्दस्य "प्रशस्यस्य श्रः" ॥७।४।३४॥ इति सूत्रेण श्रादेशो यद्विहितोऽस्ति सूरिणा तद्विधानबलेनागुणाङ्गादपि प्रशस्यशब्दात् "गुणाङ्गाद्वेष्ठेयसू" ॥७।३।९॥ इति सूत्रेण इष्ठेयसुप्रत्ययौ सिद्धौ । अस्यां व्याख्यायां चाप्राप्तप्रापणार्थोऽयं न्यायः । अपिच ॥ विचित्रा सूत्राणां कृतिः ॥ १ ॥ मात्रालाघवमप्युत्सवाय मन्यन्ते वैयाकरणाः ॥ २ ॥ ते वै विधयः सुसङ्गृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च ॥३ ॥ इत्यादयोऽपि न्यायप्रकारा वाग्विशेषाः सन्ति; परमेते व्याकरणसूत्ररचनायामेवोपयुज्यन्ते । पारिशेष्यादयोऽपि न्यायाः सूत्रार्थव्यवस्थापनायामेवोपयोगिनो नतु केऽपि प्रस्तुतायां प्रयोगरचनायां क्वचिदितीहोपेक्षिताः । शास्त्रान्तरेषु च यथोद्देशं निर्देश इत्यादयो बहवोऽपि न्यायाः सन्ति; परमत्र व्याकरणे क्वापि ते साक्षादुदाहृता न दृश्यन्ते इति नोक्ताः ॥ १७ ॥

## न्यायाः स्थविरयष्टिप्रायाः ॥ १८ ॥

यथा स्थविरो गमनादिकार्योत्पादे तत्साधनाय यष्टिमवलम्बते तदभावे तु न; तथा न्याया अपि शिष्टप्रयोगान्यथानुपपत्तावेवाश्रीयन्ते नत्वन्यथा । एकस्मि-

न्नपि प्रयोगादौ स एव न्याय आश्रितोऽनाश्रितश्च यद् दृश्यते तद्विरुद्धमित्याशङ्कां भङ्क्तुमयं न्यायः। यथा रायमतिक्रान्तानां कुलानामतिरीणाम्; अत्र "क्लीबे"॥२।४।९७॥ इति ह्रस्वे सति तज्जे नामादेशे परे एकदेशविकृतमनन्यवदिति न्यायात्प्राप्तमपि "आ रायो व्यञ्जने"॥२।१।५॥ इत्यात्वं, सन्निपातलक्षणोविधिरिति न्यायेन निषेधान्न स्यात्। तत्करणे ह्रस्वविघातसम्भवात्। "दीर्घोनाम्यतिसृ-"॥१।४।४७॥ इति दीर्घावसरे तु सन्निपातलक्षणन्यायानाश्रयणान्निर्विघ्नं दीर्घः सिद्धः। तथा "वत्तस्याम्"॥१।१।३४॥ इत्यत्र वत्तस्योस्तद्धितयोः साहचर्यादामोऽपि तद्धितस्यैव ग्रहणं प्राप्तम्। परं साहचर्यन्यायानाश्रयणात्परोक्षास्थानजोऽप्याम् गृह्यते। नच तद्वदेव षष्ठीबहुवचनस्याप्यामो ग्रहः; तदातदाश्रयणात्। ज्ञापकं चास्य तत्तत्प्रयोगादिषु तत्तन्न्यायाश्रयणानाश्रयणफलदर्शनम् ॥ १८ ॥

## इति स्वसमुच्चितानामेव पूर्वेभ्यो विलक्षणानामष्टादशानां न्यायानां बृहद्वृत्तिः ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम्।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक एष विष्टपमितः संपूर्णतां लम्भितः॥३॥

---

अथ पूर्वदर्शिताष्टादशकसजातीय एवैको न्यायो बहुवक्तव्यत्वात् पृथक् प्रतन्यते—

## शिष्टनामनिष्पत्तिप्रयोगधातूनां सौत्रत्वाल्लक्ष्यानुरोधाद्वा सिद्धिः।

शिष्टाः शेषा ये व्याकरणेन नान्वाख्याताः; ईदृशा ये नामानि, निष्पत्तयः प्रयोगाः, धातवश्च तेषाम्। सौत्रत्वादिति। सूत्रं व्याकरणादि तत्र निर्दिष्टाः सौत्राः। लक्ष्यानुरोधाद्वेति। लक्ष्याणि पूर्वमहाकविप्रयोगाः। सिद्धिशब्दो मङ्गलार्थः। तत्र नाम्नां यथा। चतुर्थी, षष्ठीत्यादि; अत्र हि चतुर्णां षण्णां पूरणीति वाक्ये "चतुरः" ॥७।१।१६३॥ "षट्कतिकतिपयात्थट्"॥७।१।१६२॥ इति सूत्राभ्यां थट्प्रत्यये "नाम-

सित्-"॥१।१।२१॥ इति पदत्वे, चतुस्थी, षट्टीति प्राप्नोति । "चतुर्थी"॥२।२।५३॥ "अज्ञाने ज्ञः षष्ठी"॥२।२।८०॥ इति सौत्रनिर्देशात्तु न जातम् । लक्ष्यानुरोधाच्च ॥ भिस्सटा, कच्छाटिका, ग्रामटिकेत्यादौ लक्ष्यानुरोधाट्टागमः । कान्दविकः, काम्बविको, वैणविक इत्यादौ च "ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतो लुक्" ॥७।४।७१॥ इति प्राप्त इकण इलुम्न। निष्पत्तीनां यथा। "अंअः अनुस्वारविसर्गौ" ॥१।१।९॥ "आपो ङितां यैयास्यास्याम्"॥१।४।१७॥ इत्यत्र क्रमात् औजसोर्लुक् सौत्रत्वात् सिद्धः। लक्ष्यानुरोधात्तु आसां सिद्धिर्न दृश्यते; असम्भवात्। एवमग्रेऽपि सौत्रत्वलक्ष्यानुरोधयोरन्यतरस्यैवोक्तौ हेतुरूह्यः । प्रयोगाणां यथा । रणादिधातूनां शब्दार्थत्वाविशेषेऽपि रणितं नूपुरादौ; मणितं रतकूजिते; काणितमार्त्ते; क्वणितं वीणादौ; कूजितं विहगादौ; बृंहितं गजे; हेषितं हये; वासितं पशुषु; गर्जितं मेघादौ; गुञ्जितं सिंहादावित्यादिकं लक्ष्यानुरोधात्सिद्धम् । धातूनां यथा सौत्रादीनाम् । तत्र कण्ड्वाद्यास्तावत् सौत्राः प्रतीता एव । तेषामर्थोदाहरणादि "धातोः कण्ड्वादेर्यक्"॥३।४।८॥ इत्यस्य बृहद्वृत्तिबृहन्न्यासतोऽवसेयम्॥ शेषाणां तु सौत्रादिधातूनां कविकल्पद्रुमोणादिगणवृत्तिनिघण्टुवृत्तिधातुपारायणादिग्रन्थेषु सूत्रतोऽर्थतश्च दृष्टानां पृथग् २ वर्णक्रमेणेहोच्यमानानां कचटतपादिवर्णानुबन्धाददादिप्रभृतितत्तद्गणकार्यम्, तदभावे तु शव् इङित्त्वादीगित्त्वाच्चात्मनेपद्युभयपदित्वं, तदभावे तु "शेषात्परस्मै" ३।३।१००॥ इति परस्मैपदित्वं चेत्यूह्यम्॥ अथ दिङ्मात्रं रूपं दिङ्मात्रमनुबन्धफलानि चेहोच्यन्ते । तथाहि । स्तम्भू स्तम्भे । स्तम्भः क्रियानिरोधः। स्तभ्नाति । स्तभ्नोति । "स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च" ॥३।४।७८॥ इत्यनेन श्नाश्नू; "नो व्यञ्जनस्यानुदितः" ॥४।२।४५॥ इति नस्य लुक् च। क्ये; स्तभ्यते। ऊदित्त्वात् "ऊदितो वा"॥४।४।४२॥ इत्यनेन क्त्वि वेट् । स्तब्ध्वा । सेटः क्त्वः "क्त्वा"॥४।३।२९॥ इति कित्त्वाभावान्नस्य लुगभावे, स्तम्भित्वा । वेट्त्वादेव च "वेटोऽपतः" ॥४।४।६२॥ इत्यनेन क्तयोरिड्निषेधात् स्तब्धः,स्तब्धवान्। अद्यतन्याम् "ऋदिच्छ्वि-"॥३।४।६५॥ इति वाऽङि; अस्तभत्, अस्तम्भीत् । उणादावगपुलपूर्वात् स्तम्भेः "अगपुलाभ्यां-" ॥ (उणा-३६३) इति डिति ये, अगस्त्यः, पुलस्त्यः । स्तभ्नातीति "जजलतितिल-"॥ (उणा-१८) इति निपातनात्तित्तिभः। तस्यापत्यं वृद्धं गर्गादित्वाद्यञि,

तैन्तिभ्यः॥ इह वर्णक्रमस्य प्रतिज्ञानेऽपि स्तम्भ्वादयः सौत्रा इति वृद्धोक्तेः स्तम्भूर्धुरि पेठे । एवं लौकिकवाक्यकरणीयानां धुरि क्रमात् क्लविचुलुम्पयोः पाठे हेतुर्वाच्यः। यदाहुर्वृद्धाः । क्लव्यादयो लौकिकाश्चुलुम्पादयो वाक्यकरणीयाश्चेति ॥ १ ॥ अथ आदन्तः॥ तन्द्रा आलस्ये । तन्द्राति । "शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहे-रालुः"॥५।२।३७॥ इत्यालौ, तन्द्रालुः॥२ ॥ अथ चत्वार इदन्ताः॥ कि ज्ञाने। कयति। उणादौ "जनिपणि-"॥ (उणा-१४०) इति टे दीर्घे च; कीटः । "किशृ-"॥ (उणा-४३५) इति करे, केकरो वक्रदृक्। "तिनिश्-"॥(उणा-५३७) इति किशे निपातनात्कीशो मर्कटः ॥३॥ पति पतने । अपतायीत् । पतयतीत्यादि । "शीङ्श्रद्धा-" ५।२।३७॥ इत्यालौ, पतयालुरिति चानेन, पतण् गतौ वा इति चुराद्यदन्तेन चेत्युभाभ्यामपि स्यात् ॥ ४ ॥ गृहि ग्रहणे । गृहयति । अगृहायीत् । गृहणि ग्रहणे इति चुराद्यदन्तस्य तु, गृहयते । अजगृहतेत्यादि स्यात् । "शीङ्श्रद्धा-"॥५।२।३७॥ इत्यालौ, गृहयालुरिति तूभाभ्यामपि स्यात ॥५॥ चिरिट् हिंसायाम्। चिरिणोति । उणादौ "चिरेरिटो भ् च"॥ (उणा-१४९) इति सूत्रेण इटप्रत्यये भे चान्तादेशे "जातेरयान्त-"॥२।४।५४॥ इति ङ्यां, चिर्भिटी। "डिण्टश्चर् च वा"॥ (उणा-१५०) इति सूत्रेण डिति इण्टप्रत्यये धातोर्विकल्पेन चरादेशे च ङ्यां; चरिण्टी, चिरिण्टी च वधूटी॥६॥ अथोदन्तौ द्वौ ॥ जुं वेगे । जवति । अनुस्वारेत्त्वादिडभावे, अजौषीत्। जुंङ् गताविल्यस्य तु जवते ; अजोष्टेत्यादि स्यात्। जवः, जवन इत्यादीनि च यद्यपि निघण्टुवृत्यादौ सौत्रेण जुना साधितानि तथापि जुंङ् गताविल्यनेनापि तानि स्युः ॥ ७ ॥ क्रुङ् गतौ। क्रवते । क्रूयते । क्रव्यम् ॥ ८ ॥ अथ ऊदन्तः॥ भूङ् प्राप्तौ। "भूङः प्राप्तौ णिङ्"॥३।४।१९॥ इति वा णिङि, भावयते; भवते । भावितम् ; भूतम्॥ ९॥ अथ कान्ताः षट् ॥ तर्क विचारे । अकारः श्रुतिसुखार्थः । एव मग्रेऽप्यदन्तवर्जं वाच्यम् । तर्कति ॥ १० ॥ कक्क कर्क हासे । कक्कति । क्ते,कक्कितः । "क्तेटो गुरोर्व्यञ्जनात् " ॥५।३।१०६॥ इत्यप्रत्यये, कक्का । अचि, कक्कः ॥ ११ ॥ कर्क ॥ कर्कति । उणादौ "दिव्यवि-" ॥ (उणा-१४२) इत्यटे, कर्कटः । "जातेः-" ॥२।४।५४॥ इति ङ्यां, कर्कटी । "कर्कैः-"॥ (उणा–८१३) इत्यारौ, कर्कारुः॥ १२ ॥सिक सेचने । सेकति । उणादौ "पृषिरञ्जि-" ॥ (उणा-

२०८) इति कित्यते, सिकता ॥१३॥ मर्क संप्रच्छने ॥ मर्कति । उणादौ "दिव्यवि-" (उणा-१४२) इत्यटे, मर्कटः । "कैरव-" (उणा-५१९) इत्यवे, निपातनान्मार्कवः केशरञ्जनः॥ १४ ॥ चङ्कि भ्रमणे ॥ चङ्कते । उणादौ "वाश्यसि-" (उणा-४२३) इत्युरे, चङ्कुरो रथः ॥ १५ ॥ मकि गतौ ॥ मकते । उणादौ "ककिमाकि-" (उणा-२४५) इत्यन्दे, मकन्दो नाम नृपः। यन्नाम्ना माकन्दी पूः ॥१६॥ अथ खान्तः॥ रिखिर्लिखेस्तुल्यार्थः ॥ रेखति चित्रकृत् । "भिदादयः" ॥५।३।१०८॥ इत्यङि निपातनाद्रेखा ॥ १७ ॥ अथ गान्तः ॥ कगे मिथःसंप्रहारे ॥ बहुलमेतन्निदर्शनमिति वचनेन "चुरादिभ्यो णिच्"॥३।४।१७॥ इति स्वार्थे णिचि, खणम् परे "कगेवनूजनैजूष्क्नस्रञ्जः"॥४।२।२५॥ इति वा दीर्घे; कागंकागं, कगंकगम्; मिथोऽभीक्ष्णं प्रहत्येत्यर्थः । अयं मौने इत्येके। यथा कगति; न वक्तीत्यर्थः । सर्वक्रियास्वित्यन्ये । यथा कगति; कोऽर्थः याति, भुङ्क्ते, स्वपितीत्यादि । एदित्त्वेन "न श्विजागृशसक्षणहृम्येदितः"॥४।३।४९॥ इति निषेधात् "व्यञ्जनादेर्वोपान्त्यस्यातः"॥४।३।४७॥ इति प्राप्तवृद्ध्यभवने, अकगीत् ॥ १८ ॥ अथ घान्तः ॥ अर्घ मूल्ये ॥ महार्घः । "कलां नार्घन्ति षोडशीम्" ॥१९॥ अथ चान्तः ॥ मर्चण् शब्दे ॥ मर्चयति । णिचो अनित्यत्वादभावे, उणादौ "भीणूशलि-" (उणा-२१) इति के, "चजः कगम्"॥२।१।८६॥ इति चः कत्वे, मर्को देवदारुः ॥ २० ॥ अथ जान्तास्त्रयः ॥ मञ्ज सौन्दर्ये च ॥ चात् शब्दे । मञ्जति । उणादौ "पष्ठैधिठादयः" (उणा-१६६) इति ठे, निपातनात् मञ्जिष्ठा। "ऋच्छिचटि-"(उणा-३९७) इत्यरे, ङ्यां, मञ्जरी । "कृशृपृ-" (उणा-४१८) इति इरे, मञ्जीरम् । "कुमुल-" (उणा-४८७) इत्युले, मञ्जुलम्। "खलिफलि-" (उणा-५६०) इत्यूषे; मञ्जूषा। "भृमृ-"(उणा-७१६) इति बहुवचनाद् उप्रत्यये, मञ्जुः ॥ २१ ॥ पञ्ज रोधे ॥ पञ्जति । "नाम्नि पुंसि च"॥५।३।१२१॥ इति णके, पञ्जिका । उणादौ "ऋच्छिचटि-" (उणा-३९७) इत्यरे, पञ्जरः ॥ २२ ॥ कञ्ज शब्दे ॥ कञ्जति । उणादौ "अग्यङ्गि-" (उणा-४०५) इत्यारे, कञ्जारः कोष्टजातिः ॥ २३ ॥ अथ टान्तास्त्रयः ॥ रण्ट प्राणहरणे॥ रण्टति । उणादौ कुपूर्वात् "को रुरुण्टि-" (उणा-२८) इत्यके, कुरण्टको वृक्षजातिः ॥ २४ ॥ घट्ट शब्दे ॥ उदित्त्वाद् "उदितः स्वरान्नोऽन्तः"॥४।४।९८॥

इति नागमे, घण्टति ॥ २५ ॥ मट ह्रासे ॥ ह्रासो ह्रस्वत्वम् । मटति । उणादौ "कॄपॄ-" (उणा-५८९) इत्यहे, मटहो ह्रस्वभुजाद्यवयवः ॥ २६ ॥ अथ ठान्तः ॥ कुठ छेदने ॥ कोठति । "नाम्युपान्त्य-"॥५।१।५४॥ इति के, कुठो वृक्षः । उणादौ "तुषिकुठि-" (उणा-४०८) इति कित्यारे, कुठारः ॥ २७ ॥ अथ डान्ताश्चत्वारः ॥ क्रुड शब्दे ॥ क्रोडति । "लिहादिभ्यः"॥५।१।५०॥ इत्यचि, क्रोडः ॥ २८ ॥ उड सङ्घाते ॥ ओडति । उणादौ, "उडेः-" (उणा-३११) इति कित्युपे, उडुपः ॥ २९ ॥ वड आग्रहणे ॥ वडति । उणादौ "कॄशॄगॄ-"(उणा-३२९) इत्यभे गौरादित्वाद् ङ्यां, वडभी। "ऋफिडादीनां डश्च लः"॥२।३।१०४॥ इति डो ले, वलभी। "वडिवटि-" (उणा–५१५) इत्यवे, वडवा । "कुलिकनि-" (उणा-५३५) इति इशे, वडिशम् ॥ ३० ॥ णडण् भ्रंशे ॥ णोपदेशोऽयम् । अत्र ग्रन्थे हि णाडि, णटि, णुदि, णाधयश्चत्वारो धातवो नादयोऽपि णोपदेशाः सन्ति; "पाठे धात्वादेः-"॥२।३।९७॥ इति णो ने, तस्य "अदुरुपसर्गान्तरो णहिनुमीनानेः" ॥२।३।७७॥ इति णत्वं णोपदेशफलम् । नाडयति; प्रणाडयति । घञि डस्य लत्वे, प्रणालः । णिचोऽनित्यत्वादभवने अचि, नडस्तृणजातिः । उणादौ "नडेः-" (उणा-७१२) इति णिदीप्रत्यये नाडीर्मुहूर्त्तार्द्धम् । स्वार्थे के, नाडिका । नडण् अवस्यन्दने इत्यस्य स्थाने णडण् इति नन्दी प्राहेति धातुपारायणोक्तेर्यद्यप्ययं परपठितधातुषु वक्तुं युक्तस्तथाऽप्युणादिवृत्तौ णडिः सौत्र इत्युक्तत्वादिह सौत्रेषूक्तः; अवस्यन्दनशब्देन च भ्रंशो व्याख्यातो धातुपारायणे इत्यतोऽत्र स्फुटार्थं भ्रंशे इत्येवोक्तम् ॥ ३१ ॥ किणत् शब्दगत्योः ॥ किणति । "नाम्नि पुंसि च" ॥५।३।१२१॥ इति णके, केणिका पटकुटी । उणादौ "निघृषी-" (उणा-५११) इति किति वे, किण्वं पापम् ॥ ३२ ॥ अथ तान्ताश्चत्वारः ॥ कुत गुम्फप्रीत्योः॥ कोतति । उणादौ "भुजिकुति-" (उणा-३०५) इति कित्यपे, कुतपः कम्बलः श्राद्धकालश्च ॥३३॥ पुत गतौ॥ पोतति । उणादौ "कृतिपुति-" (उणा-७६) इति किति तिके, पुत्तिका मधुमाक्षिकाः॥ ३४ ॥ लत आदाने ॥ लतति। आङ्पूर्वादस्मादुणादौ "कृतिपुति-" (उणा-७६) इति तिके, आलत्तिका गानारम्भः॥३५॥ सात सुखे ॥ सातति । णिगि "साहिसातिवेद्युदेजिधारिपारिचेतेरनुपसर्गात्"

॥५।१।५९॥ इति शे, सातयः सुखकारी ॥ ३६ ॥ अथ थान्तः ॥ कथ वाक्य-प्रबन्धे॥ णिगि, बाहुलकात्स्वार्थे णिचि वा "भूरिदाक्षिण्यसंपन्नं यत्त्वं सान्त्वमचीकथः"॥ कथणितिचुराद्यदन्तस्य त्वचकथ इति स्यात् ॥ ३७॥ अथ दान्ताश्चत्वारः ॥ उद् आघाते ॥ ओदति । उणादौ "कुटिकुलि-" (उणा-१२३) इति किदिञ्चे, उदिञ्चस्तूर्यवादनोपकरणम् ॥ ३८ ॥ क्षद हिंसासंवरणयोः ॥ क्षदति । उणादौ "त्रट्" (उणा-४४६) इति सूत्रेण त्रटि, क्षत्रम्; ततस्तस्यापत्यं "क्षत्रादियः"॥६।१।९३॥ इति इये, क्षत्रियः । "त्वष्टृक्षत्तृ-" (उणा-८६५) इति तृप्रत्यये, क्षत्ता दौवारिकः ॥ ३९ ॥ सुन्द हिंसासौन्दर्ययोः ॥ सुन्दति । अचि, सुन्दोपसुन्दौ दैत्यौ; यौ मिथो युध्वा मृतौ । उणादौ "ऋच्छिचटि-" (उणा-३९७) इत्यरे, सुन्दरः ॥ ४० ॥ कदि वैक्लव्यछेदनयोः ॥ कदते । अनटि, कदनम् । उणादौ "पिचण्डैरण्ड-" (उणा-१७६) इत्यण्डे, निपातनात्कोदण्डः । "कदेः-" (उणा-३२२) इति वा णित्यम्बे, कादम्बाः कलहंसाः । कदम्बो वृक्षजातिः । "द्वारशृङ्गार-" (उणा-४११) इत्यारे, निपातनात्केदारः। "मृदिकन्दि-" (उणा-४६५) इत्यले, गौरादित्वाद् ङ्यां, कदली ॥ ४१ ॥ अथ धान्तः ॥ मिधृग् मेधाहिंसासङ्गमेषु ॥ क्ये, मिध्यते । मेधतीत्यादि तु मेधृग् सङ्गमे चेत्यनेनापि स्यात्। "वौ व्यञ्जनादेः-"॥४।३।२५॥ इति क्त्वो वा कित्त्वे; मिधित्वा, मेधित्वा । भिदाद्यङि निपातनात्, मेधा॥४२॥ अथ नान्तः ॥ धनक् धान्ये ॥ धान्योपलक्षितायां क्रियायामित्यर्थः । यथा णील वर्णे इत्यस्य वर्णोपलक्षितायां क्रियायामित्यर्थो धातुपारायणे व्याख्यातः । अन्यथा तु क्रियार्थत्वाभावाद् धातुत्वं न स्यात्। ह्वादिरयम्।शिति "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, दधन्ति । उणादौ "भृमृ-" ( उणा-७१६ ) इत्युप्रत्यये, धनुरस्त्रम् । " कृषिचमि- " (उणा-८२९) इत्यूप्रत्यये, धनूर्धान्यराशिः ॥ ४३ ॥ अथ पान्ताश्चत्वारः ॥ रिप कुत्सायाम् ॥ रेपति । उणादौ "अस्-"(उणा-९५२) इत्यसि, रेपः पापम्॥ ४४॥ कप कम्पने॥ कपति । उणादौ "ऋक्रु-" (उणा-४७५) इत्याले, कपालम् । "कटिपटि-"(उणा-४९३) इत्योले, कपोलः॥४५॥ क्षुप ह्रासे ॥ क्षोपति । "नाम्युपान्त्य-"॥५।१।५४॥ इति के, क्षुपो ह्रस्वशाखस्तरुः ॥ ४६ ॥ टुप संरम्भे ॥ टोपति । आटोपनम् ।

घञि, आटोपः ॥ ४७ ॥ अथ बान्तः ॥ बिम्ब दीप्तौ ॥ बिम्बति ॥ ४८ ॥ अथ भान्ताः पञ्च ॥ रिभि स्तुम्भू स्कम्भू स्तम्भे ॥ विरेभते स्म। "क्षुब्धविरिब्ध-स्वान्तध्वान्तलग्नम्लिष्टफाण्टबाढपरिवृढं मन्थस्वरमनस्तमःसक्ताऽस्पष्टानायासभृश-प्रभौ"॥४।४।७०॥ इति निपातनादिडभावे, विरिब्धः स्वरः। विरिभितमन्यत् ॥४९॥ स्तुम्भू॥ "स्तम्भूस्तुम्भू-"॥३।४।७८॥ इति श्नाश्न्वोः; स्तुभ्नाति, स्तुभ्नोति। क्ये नस्य लुकि, स्तुभ्यते। ऊदित्त्वात् क्त्वि वेटि; स्तुब्ध्वा, स्तुम्भित्वा। वेट्त्वादेव क्तयोः "वेटोऽपतः"॥४।४।६२॥ इतीडभावे, स्तुब्धः, स्तुब्धवान् ॥ ५० ॥ स्कम्भू ॥ प्राग्व-देव श्नाश्नू। विष्कभ्नाति, अत्र वेः "स्कभ्नः"॥२।३।५५॥ इति षः। श्नौ तु षत्वाभावे, विस्कभ्नोति। क्ये, विष्कभ्यते। ऊदित्त्वात् क्त्वि वेटि; स्कब्ध्वा, स्कम्भित्वा। वेट्त्वादेव क्तयोर्नेट्; स्कब्धः, स्कब्धवान् ॥ ५१ ॥ स्कुम्भू विस्ता-रणे च॥ चात् स्तम्भे। प्राग्वदेव श्नाश्न्वोः; स्कुभ्नाति, स्कुभ्नोति। क्ये, स्कुभ्यते। ऊदित्त्वात् स्कुब्ध्वा, स्कुम्भित्वा। स्कुब्धः, स्कुब्धवान्। उणादौ "जम्बीर-" (उणा-४२२) इति ईरे निपातनात्, कुम्भीरः। को वायुः, कपूर्वादस्मात् "ककु-प्त्रिष्टुब्-" (उणा-९३२) इति क्विपि निपातनात्ककुप्। लक्ष्यं यथा—

मुसलक्षेपहुङ्कारस्तोभैः कलमखण्डिनि !
कुचविष्कम्भमुत्तभ्नन्निःस्कुभ्नातीव ते स्मरः ॥ १ ॥

स्तोभाः विश्रामाः, विष्कम्भः पृथुत्वम्; उत्तभ्नन् ऊर्ध्वीकुर्वन्; निस्कुभ्नाति नितरां विस्तारयति ॥ ५२ ॥ दभ वञ्चने॥ दभति। "आसुयुवपिरपिलपित्रपि-डिपिदभिचम्यानमः"॥५।१।२०॥ इति घ्यणि, दाभ्यो वञ्चनीयः। बाहुलकात् स्वार्थे णिचि, दाभयति॥ ५३ ॥ अथ मान्तौ द्वौ ॥ डिम हिंसायाम् ॥ डेमति। "नाम्युपान्त-"॥५।१।५४॥ इति के, डिमः प्रबन्धविशेषः। उणादौ "डिमेः-" (उणा-२५६) इति किति डिमे, डिण्डिमः॥ ५४ ॥ धम शब्दे ॥ दधाम। धमती-त्यादि तु ध्मां धातुनापि स्यात्। उणादौ "ग्वसिरसि-" (उणा-२६९) इत्यने, धमनस्तृणजातिः। "भिल्लाच्छभल्ल-" (उणा-४६४) इति निपातनाद्धाम्मिल्लः। "सदिवृत्ति-" (उणा-६८०) इत्यनौ, धमनिः सिरा ॥ ५५ ॥ अथ यान्तः ॥ पीय पाने॥ पीयति। उणादौ "खलिफलि-" (उणा-५६०) इत्यूषे, पीयूषम्।

"लाक्षाद्राक्षा-" (उणा-५९७) इत्यनेनादिशब्दादक्षप्रत्यये निपातनात्, पीयूक्षा द्राक्षाजातिः ॥ ५६ ॥ अथ रान्तास्त्रयः ॥ उर गतौ ॥ ओरति । उणादौ "उरेः-" (उणा-५३१) इति कित्यशे, उरशः कश्चिदृषिः ॥ ५७ ॥ तुर त्वरणे ॥ तोरति । आङ्पूर्वस्यास्य "नाम्युपान्त्य-"॥५।१।५४॥ इति के, आतुरो रोगी । केवलस्य तु, तुरः शीघ्रगामी । तुरो गच्छति । "नाम्नो गमः-"॥५।१।१०१॥ इति डे, तुरगः । उणादौ "तॄकॄ-" (उणा-१८७) इत्यनेनोपलक्षणत्वादस्मादप्यणे, तोरणम् । "नाम्युपान्त्य-" (उणा-६०९) इति किति इप्रत्यये, तुरिस्तन्तुवायोपकरणम् ॥५८॥ तन्द्रि सादमोहयोः ॥ सादो विषण्णता, मोहो मौढ्यम् । तन्द्रते । ततन्द्रे । तन्द्रितः । तन्द्रा आलस्यम् । "क्तेटो गुरोः-"॥५।३।१०६॥ इत्यप्रत्ययः । उणादौ "तॄस्तॄ-" (उणा-७११) इति ईः, तन्द्रीः समोहनिद्रा ॥ ५९ ॥ अथ लान्ताः षट् ॥ चुल परिवेष्टने ॥ चोलति । "नाम्युपान्त्य-"॥५।१।५४॥ इति के, निचुलः । अचि, चोलः ॥ ६० ॥ उल दाहे ॥ ओलति । उणादौ "निष्कतुरुष्क-" (उणा-२६) इति के, निपातनादुल्का । "शंबूक-" (उणा-६१) इत्यूके, निपातनादुलूकः । "विष्टपोलप-" (उणा-३०७) इत्यपे, निपातनादुलपस्तृणजातिः । "उलेः-" (उणा-८२८) इति कित्यक्षौ, उलक्षुस्तृणजातिः ॥६१॥ लुल कम्पने ॥ लोलति; लुलितम् । उणादौ "कुलिलुलि-" (उणा-३७२) इति कित्याये, लुलायः ॥ ६२ ॥ सल्ल गतौ ॥ सल्लति । उणादौ "दॄकॄ-" (उणा-२७) इत्यके, गौरादित्वाद् ङ्यां, सल्लकी ॥ ६३ ॥ हल्ल घूर्णने ॥ हल्लति । उणादौ "दॄकॄ-" (उणा-२७) इत्यके, हल्लकं रक्तोत्पलजातिः ॥ ६४ ॥ भिलण् भेदे ॥ भेलयति । णिचोऽनित्यत्वेऽचि, भेलस्तरण्डः । डलयोरैक्ये, भेडोऽजः । उणादौ "विलिभिलि-" (उणा-३४०) इति किन्मे, भिल्मं भास्वरम् ॥ ६५ ॥ अथ वान्तौ द्वौ ॥ धन्व तव गतौ ॥ धन्वति । उणादौ "उक्षितक्षि-" (उणा-९००) इत्यनि, धन्वा मरुः ॥ ६६ ॥ तव ॥ तवति । उणादौ "तवेर्वा" (उणा-५५०) इति वा णितीषे, ताविषस्तविषश्च स्वर्गः ॥ ६७ ॥ अथ शान्तास्त्रयः ॥ पशी, स्पशी बाधनग्रथनयोश्च ॥ बाधनं प्रतीघातः, चाद्गतौ । पशति । पशते । गतौ कुटिलार्थे यङि, "जपजभ-"॥४।१।५२॥ इति म्वागमे, पम्पश्यते । यङ्लुपि तु; पम्पशीति, पम्पष्टि ॥ ६८ ॥ स्पशी ॥ स्पशते; स्पशति ।

णौ ङे सन्वद्भावापवादे "स्मृदृत्वरप्रथम्रदस्तृस्पशेरः"॥४।१।६५॥ इति पूर्वस्य अत्वे, अपस्पशत् । णौ क्ते "णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञतम्"॥४।४।७४॥ इत्यनेन णिलुग्ह्रस्वयोः समुदितयोर्विकल्पेन निपातने, स्पष्टं, स्पाशितम् । अचि, स्पशश्चरः । घञि, स्पाशो बन्धनम् । लक्ष्यं यथा—"सेयमुभयतः स्पाशा रज्जुः" ॥ उणादौ "स्पशिभ्ररजेः-" (उणा-७३१) इत्युः सलुक् च, पशुः ॥ ६९ ॥ ऋशत् गतिस्तुत्योः ॥ ऋशति । उणादौ "ऋशिजनि-" (उणा-३६१) इति किति ये, ऋश्यः ॥ ७० ॥ अथ षान्तौ द्वौ ॥ भिष भये ॥ भेषति रोगोऽस्मादिति उणादौ "भिषेः-" (उणा-१३१) इत्यजे, विकल्पेन भिषभिष्णादेशे, भिषजो भिष्णजश्च वैद्यः । पक्षे भेषजमौषधम् । "ऋधिप्रथि-" (उणा-८७४) इति किदजि, भिषक् । "सम्प्रदानाच्चान्यत्रोणादयः"॥५।१।१५॥ इत्यनेनापादाने उणादीनां निषेधेऽप्येते शब्दा भीमादित्वात् "भीमादयोऽपादाने"॥५।१।१४॥ इत्यनेनापादाने अजाज्प्रत्ययान्ता निपात्यन्ते ॥७१॥ युषी सेवने ॥ योषति, योषते । उणादौ "हृसृ-" (उणा-८८७) इतीति, योषित् । "युष्यसि-" (उणा-८९९) इति किति मदि, युष्मद् ॥ ७२ ॥ अथ सान्तास्त्रयः ॥ लुस हिंसायाम् ॥ लोसति । उणादौ "ऋषिवृषि-" (उणा-३३१) इति कित्यभे, लुसभो बालहस्ती ॥ ७३ ॥ पसी गतिबन्धननिवासेषु ॥ पसते; पसति । गतौ कुटिलार्थे यङि, "जपजभ-"॥४।१।५२॥ इत्यत्र दन्त्यान्तस्यापि पस इष्टत्वात् म्वागमे, पम्पस्यते । यङ्लुपि तु; पम्पसीति, पम्पास्ति । बन्धने बाहुलकात् स्वार्थिके णिचि, पासयति पाशैरश्वम् । निवासे । उणादौ "मृशी-" (उणा-३६०) इति तादौ ये, पस्त्यं गृहम् ।।७४॥ भसक् भर्त्सनदीप्त्योः ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, बभास्ति । क्ते, भसितम् । उणादौ "हुयामा-" (उणा-४५१) इति त्रे, भस्त्रा । "मन्" (उणा-९११) इति मनि, भस्म ॥७५॥ अथ हान्तौ द्वौ ॥ लुहं हिंसामोहयोः ॥ लोहति । अनुस्वारेत्त्वात् "एकस्वरादनुस्वारेतः"॥४।४।५६॥ इतीडभावे, लोढा । लोढुम् । अचि, लोहम् । उणादौ "मृदिकन्दि-" (उणा-४६५) इत्यले, लोहलो अस्फुटवाक् ॥ ७६ ॥ रिहं हिंसाकत्थनादौ ॥ कत्थनं श्लाघा । रेहति । अनुस्वारेत्त्वादिडभावे, रेढा । रेढुम् । रिह्यते इति क्ते, स्वार्थे के च, रीढकः पृष्ठवंशः । रेहणं; भिदाद्यङि निपातनाद्रीढा

अवज्ञा ॥७७॥ अथ क्षान्तौ द्वौ ॥ अनयोः षान्तेषु पाठो युक्तः । क्षस्य मूर्द्धन्यान्तत्वात्परं वैचित्र्यार्थं सर्ववर्णान्ते कृतः । एवमग्रे परपठितधातुष्वपि यत् क्षान्ताः प्रान्ते पठिष्यन्ते तत्रापि वाच्यम् । चुक्ष शौचे ॥ चुक्षति । क्ते, चुक्षितः । चुक्षा; "क्तेटो गुरोः-"॥५।३।१०६॥ इति अः । चुक्षा शीलमस्य "अङ्गस्थाच्छत्रादेः-"॥६।४।६०॥ इत्यञि, चौक्षः । तस्य भावः कर्म वा "पतिराजान्त-"॥७।१।६०॥ इति ट्यणि, चौक्ष्यम् ॥ ७८ ॥ चिक्षि विद्योपादाने । चिक्षते । चिक्षितः । चिक्षा; "क्तेट-"॥५।३।१०६॥ इति अः ॥ ७९ ॥ इत्यादिधातूनां सौत्रत्वाल्लक्ष्यानुरोधाच्च सिद्धिः ॥

अथ ये वक्ष्यन्ते ते गहयतिं यावत् प्रायश्चौरादिका एव क्लवि, चुलुम्पि, क्रूचि, उब्धुषि, उल्लकसि, कंशत्यादिपञ्चकस्तनादिषट्कवर्जम् । चुगदयो धातवः किलापरिमिताः सन्ति नतु तेषामियत्ताऽस्ति केवलं यथालक्ष्यमनुसर्तव्याः । अतएव चन्द्रगोमीनामवैयाकरणश्चुरादिगणस्यापारिमिततया परमार्थतो यथालक्ष्यमनुसरणमवगम्य द्वित्रानेव चुरादिधातून् पठितवान्नतु भूयस इति । तत्रादौ लौकिकाः; क्लविवर्जाश्च ते अदन्ताः । क्लवि वैक्लव्ये ॥ विक्लवते । अचि, विक्लवः । लक्ष्यं यथा- "मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः" ॥ विच्छायीभवन्तीत्यर्थः ॥१॥ वीजण् व्यजने ॥ अवीजयत । "राजहंसैरवीज्यन्त" ॥ ङे अदन्तत्वेन "अतः"॥४।३।८२॥ इत्यल्लुकि, समानलोपित्वात् "उपान्त्यस्य-"॥४।२।३५॥ इत्यनेनोपान्त्यह्रस्वाभावे, अविवीजत् । विपूर्वस्य ईजि कुत्सने च इत्यस्य तु णौ, व्यैजयत्; व्यैज्यन्त; व्यैजिजदित्यादि स्यात् ॥ २ ॥ हीलण् निन्दायाम् ॥ हीलयति । ङे प्राग्वदुपान्त्यह्रस्वाभावे, अजिहीलत् । क्ते, हीलितः । "णिवेत्त्या-"॥५।३।१११॥ इत्यने, हीलना । णिचोऽनित्यत्वे, हीला; "क्तेट-"॥५।३।१०६॥ इति अः ॥३॥ अन्दोलण्, हिन्दोलण्, प्रेङ्खोलण् दोलने ॥ दोलनमुत्क्षेपः । अन्दोलयति । ङे "स्वरादेर्द्वितीयः" ॥४।१।४॥ इति द्वितीयांशस्य द्वित्वे, तत्रापि "न बदनम्-"॥४।१।५॥ इति नस्य द्वित्वनिषेधे, अदन्तत्वात् "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वाभावे च, आन्दुदोलत् ॥ ४ ॥ हिन्दोलण् ॥ हिन्दोलयति । ङे, अजिहिन्दोलत् ॥ ५ ॥ प्रेङ्खोलण् ॥ प्रेङ्खोलयति । ङे, अपिप्रेङ्खोलत् ॥६॥ रूषण् रूक्षणव्याप्त्योः ॥ रूषयति । "अटन्

रूषयति भुवम्"। पृषोदरादित्वादाटरूषकः । ङे ह्रस्वाभावे, अरुरूषत् । लक्ष्यं यथा–"करीव सोऽन्तर्गिरि रेणुरूषितः" ॥ ७ ॥ इत्यादि ॥

अथ वाक्यकरणीयाः॥ चुलुम्प छेदने ॥ चुलुम्पति। उणादौ "कञ्चुकांशुक-" (उणा-५७) इत्युके, निपातनाच्चुलुकः । किञ्चिच्चुलुम्पतीति "कीचक-" (उणा-३३) इत्यके, निपातनात्किञ्चुलकः कृमिजातिः । लक्ष्यं यथा–

निपानं दोलयन्नेष प्रेङ्खोलयति मे मनः ॥

पवनो वीजयन्नाशा ममाशामुच्चुलुम्पति ॥ १ ॥

कूच उल्लेदने ॥ कूचति। "नाम्नि पुंसि च"॥५।३।१२१॥ इति णके, कूचिका चित्रकरलेखनी कुञ्चिका च ॥ २ ॥ घटण् बन्धने॥ निर्घाटयति। णके, घाटकः। णिचो अनित्यत्वे अचि, घटस्तुलाः ॥३॥ उल्लुडण् उट्टीकने ॥ अदन्तः । यथा माघे–"तावत् खरः प्रखरमुल्लुडयांचकार" ॥ अत्राल्लुकः स्थानित्वादुपान्त्यगुणो न॥४॥ अवधीरण् अवज्ञायाम्॥ "तन्न धर्ममवधीरय धीर"॥ ङे, आववधीरत् ॥ ५ ॥ उद्घुषत्, उल्लकसत् उच्छ्वसने ॥ आद्यः कुटादिः । उद्घुषत्युल्लकसत्यङ्गमनेन उद्घुषणमुल्लकसनं च रोमाञ्चः; उद्घुषेः "कुटादेः-"॥४।३।१७॥ इत्यनटो ङित्त्वान्न गुणः ॥ ६ ॥ ७ ॥ इत्यादि॥ इह च केचिल्लौकिका अपि धातवो वाक्यकरणीयेषूक्ता दृश्यन्ते ग्रन्थभेदेन तेऽपि च केचिल्लौकिकेषु; तेनैते लौकिका एतेच वाक्यकरणीया इति दृढो विवेक एतत्संज्ञाऽन्वर्थश्च विशेषसंप्रदायविज्ञोऽभ्यूह्यः॥

अथ सौत्रलौकिकवाक्यकरणीयेभ्यः पृथगेव ये धातुपारायणे उक्ता अदन्ता धातवस्ते उच्यन्ते॥ खचण् बन्धने ॥ यथा–"तडित् खचयतीवाशाः"। "आसने रत्नखचिते" ॥ अदन्तत्वेन "अतः"॥४।३।८२॥ इत्यल्लुकः स्थानित्वेन अत उपान्त्यत्वाभावादुपान्त्यस्योक्ता वृद्धिर्न। ङे, अचखचत्; अत्रादन्तत्वात् "अतः"॥४।३।८२॥ इत्यल्लुकि, समानलोपित्वात् "असमानलोपे-"॥४।१।६३॥ इति पूर्वस्य सन्वद्भावो दीर्घश्च न ॥१॥ ओजण् बलतेजसोः॥ ओजयति। सनि "स्वरादेः-"॥४।१।४॥ इति जेर्द्वित्वे, ओजिजयिषति। ङे, औजिजत्। ननु अल्लुकः स्थानिवद्भावाज्ज इति द्वित्वं प्राप्नोति तत्कथं जेर्द्वित्वम्। उच्यते। "अतः"॥४।३।८२॥ इति सूत्रस्य वृत्तौ णिविषये अल्लुक् स्यादित्यपि व्याख्याऽस्ति; तदाश्रयणे अल्लुकोऽत्र णौ विषये कृतत्वेन

परनिमित्तकत्वाभावात् "स्वरस्य परे-"॥७।४।११०॥ इत्यनेन च परनिमित्तकस्यैव स्वरादेशस्य स्थानित्वविधानान्न स्थानित्वमित्यतो जि इत्येव द्वित्वम् । मा भवानोजिजत्; अत्रादन्तत्वेन समानलोपित्वाद् द्वित्वात्पूर्वं प्राप्तः "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वो न । अचि, ओजमेकत्र्यादिविषमसंख्यास्थानम् । उणादौ "अस्"(उणा-९५२) इत्यसि, ओजः ॥ २ ॥ स्फुटण् प्राकट्ये ॥ स्फुटयति; अल्लुकः स्थानित्वाद्गुणो न ॥ ३ ॥ तुच्छण् आच्छादने ॥ तुच्छयति ॥ ४ ॥ स्कन्धण् समाहारे ॥ स्कन्धयति । स्फुटं करोति स्फुटयत्यर्थमित्यादिरीत्या स्फुटादेर्नाम्नो णिजि, स्फुटयति, तुच्छयति, स्कन्धयतीत्यादि रूपसिद्धावपि स्फुटण् प्रभृतीनामदन्तेषु पाठ इष्टार्थप्रत्यये सति णिजं विनाऽपि प्रयोगार्थः ॥ यथा माघे—"पांसुर्दिशां मुखमतुच्छयदुत्थितोऽद्रेः" इत्यत्र अदन्तत्वाच्चैषामनेकस्वरकार्याण्यपि स्युः । तथाहि । णिचोऽनित्यत्वादभावेऽप्यनेकस्वरत्वाद् "व्यञ्जनादेरेकस्वराद्-"॥३।४।९॥ इति यङ् न स्यात् । ननु कथमेतत् । णिच्सन्नियोगे एव चुरादीनामदन्ततेति हि न्यायः । सत्यम् । परं न्यायाः स्थविरयाष्टिप्राया इत्यतो णिच्सन्नियोगे इति न्यायोऽत्र नाश्रीयते । तथा अनेकस्वरत्वाद् "धातोरनेकस्वरात्-"॥३।४।४६॥ इति परोक्षाया आमि, स्फुटांचकारेत्यादि । शीलाद्यर्थे "निन्दहिंस-"॥५।२।६८॥ इति णके, स्फुटक इत्यादि च स्यात् । अपि चैवं प्रकाराणां धातूनामतो लुकं बाधित्वाऽनुपान्त्यस्याप्यत उत्पलमतीयेन "अतो ञ्णिति" इति सूत्रेण वृद्धौ "अर्त्तिरी-"॥४।२।२१॥ इति प्वागमे; स्फुटापयति, तुच्छापयति, स्कन्धापयतीत्यपीष्यते परैः ॥५॥ ऊषण् छेदने ॥ ऊषयति । सनि "स्वरादेः-"॥४।१।४॥ इति षेर्द्वित्वे, ऊषिषयिषति । ङे, औषिषत्; प्राग्वद्विषयव्याख्याश्रयणादल्लुको न स्थानित्वम् । मा भवानूषिषत्; अत्रादन्तत्वेन समानलोपित्वाद् द्वित्वात्पूर्वं प्राप्त "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वो न ॥६॥ इत्यादि ॥

अथ क्रुशु, पिशु, कुसु, दसु, त्रसु अनुक्तार्थाः ॥ उदित्त्वान्ने, क्रुंशति ॥१॥ पिंशति । पिंश्यते ॥ २ ॥ कुंसति ॥३॥ दंसति ॥ ४ ॥ त्रंसति ॥ ५ ॥ एषामेवंविधानामन्येषां चार्थो यथालक्ष्यं निर्णेयः । अयं भावः । भासार्थे तावदेते पञ्चापि चौरादिकाः सन्ति; लोकृ, तर्कौति दंडके पाठात् । अर्थान्तरेऽपि ते धातवः सन्तीति धातु-

पारायणे उक्तम् । अर्थान्तरं च किमपि क्वापि प्रयुक्तं न दृष्टमित्यतोऽत्रानुक्तार्थौ इत्यूचे ॥

अथ ये धातवो हैमधातुपाठे सन्तोऽपि परैः स्वधातुपाठेष्वन्यथा पठिताः सन्ति; ये च परैरधिका एव पठिताः सन्ति ते सर्वेऽपि परपठितत्वेन विवक्षिता इहोच्यन्ते । तत्रादौ त्रिंशददन्ताः ॥ खेडण् भक्षणे ॥ खेडयति । ङे, अदन्तत्वात् "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वाभावे, अचिखेडत् ॥ १ ॥ पणण् विक्रये ॥ ण्यन्ताद् "युवर्णवृदृवशरणगमृद्ग्रहः"॥५।३।२८॥ इत्यलि, अदन्तत्वाद् णौ वृद्ध्यभावे, विपणो विक्रयः । पणि व्यवहारस्तुत्योरित्यस्य त्वलो अप्राप्त्या घञि, विपाण इति स्यात् ॥ २ ॥ वित्तण् दाने ॥ वित्तयति । वित्तितः । वित्तयित्वा । अदन्तत्वविधानसामर्थ्याददतो लुगभावे, अनुपान्त्यस्याप्यतो "अतो ञ्णिति" इति वृद्धौ प्वागमे च, वित्तापयतीत्यपि ॥ ३ ॥ कर्त्त, कत्र, कत्थण् शैथिल्ये ॥ कर्त्तापयति । कर्त्तयति । अचकर्त्तत्, इत्यादि तु कृतैत् छेदने, कृतैप् वेष्टने इत्यनयोरपि स्वार्थिके णौ स्यात् ॥ ४ ॥ कत्रण् ॥ कत्रयति । कत्रापयति । कत्रितम् ॥ ५ ॥ कत्थण् ॥ कत्थापयति । कत्थयतीति तु कत्थि श्लाघायामित्यस्यापि स्वार्थिके णौ स्यात् ॥ ६ ॥ श्लथ, शरण् दौर्बल्ये ॥ श्लथयति । अशश्लथत्; अदन्तत्वात्क्रमेण न वृद्धिसन्वद्भावौ ॥ ७ ॥ शरण् ॥ शरयति । अदन्तत्वाद् वृद्धिर्न । ङे, अशशरत्; अत्र सन्वद्भावदीर्घौ न ॥८॥ छदण् संवरणे ॥ छदयति; अदन्तत्वाद् वृद्धिर्न । ननु च्छदेर्घटादित्वाद् णौ "घटादेः-"॥४।२।२४॥ इति ह्रस्वे छदयतीत्यादिसिध्यत्येवेत्यतोऽस्यादन्तेषु पाठे किं फलम् । नच वाच्यम् । घटादीयच्छदेः प्रयोक्तृव्यापारविवक्षा चेत् क्रियते तदा णिः स्यात् । अस्मात्तु चुरादित्वात् स्वार्थेऽपि णिः स्यादिति; बहुलमेतन्निदर्शनमित्युक्त्या सर्वेभ्योऽपि धातुभ्यः स्वार्थे णिचोऽभ्यनुज्ञानात् । उच्यते । ऊर्जन एव च्छदेर्घटादित्वमित्यतोऽदन्तेषु पाठात्संवरणादिरूपेऽर्थान्तरेऽपि च्छदयतीति सिद्धम् । अनदन्तस्य तु ऊर्जने छदयतीति स्यात्परमर्थान्तरेऽपि च्छादयतीत्येव स्यात् । तथा अदन्तस्य णौ ङे समानलोपित्वात्सन्वद्भावाभावे, अचच्छददिति सिद्धम् । अनदन्तस्य तु समानलोपित्वाभावात्सन्वद्भावे, अचिच्छददिति स्यात् ॥९॥ लभण् प्रेरणे ॥ अदन्तत्वाद् वृद्ध्यभावे,

लभयति । लभितम्। "णिवेत्ति-"॥५।३।१११॥ इत्यने, विलभना ॥ १०॥ श्रपण् पाके॥ अदन्तत्वाद् वृद्ध्यभावे, श्रपयति । समानलोपित्वात्सन्वद्भावाभावे, अशश्रपत्। क्ते निपातनात्, शृतं हविः क्षीरं वा ॥११॥ खादण् क्षेपे॥ खादयति । ङे ह्रस्वाभावे, अचखादत् ॥१२॥ स्तन, ध्वन, स्वन, स्यम शब्दे॥ अनेकस्वरत्वाद् भृशाभीक्ष्णेऽप्येभ्यो यङ् न स्यात् । परोक्षायामाम्; स्तनाञ्चकार, ध्वनाञ्चकार, स्वनाञ्चकार, स्यमाञ्चकारेत्यादि । शीलाद्यर्थे "निन्दहिंस-"॥५।२।६८॥ इति णके; स्वनकः, स्यमक इत्याद्यपि । स्तनकः, ध्वनक इत्यादि तु; स्तनयति, अतस्तनत्, ध्वनयति, अदध्वनदित्याद्यपि च; एतद्धातुभ्यामिव स्तनण् गर्जे, ध्वनण् शब्दे इत्याभ्यां चुराद्यदन्ताभ्यामपि स्तनध्वनाभ्यां स्यात्। स्वनस्य चावर्तसन एव घटादित्वमित्यतो अदन्तेषु पाठादर्थान्तरेऽपि स्वनयतीति सिद्धम्। अदन्तत्वेन च समानलोपित्वात्सन्वद्भावाभावे, असस्वनत् । स्यमस्य तु, असस्यमदित्यादि सिद्धम्। अनदन्तत्वे तु समानलोपित्वाभावात्सन्वद्भावे; असिस्वनत्, असिस्यमदित्यादि प्राप्नोति । स्यमयतीत्यादि तु, अनदन्तत्वेऽपि "अमोऽकम्यमिचमः"॥४।२।२६॥ इति ह्रस्वे स्यादेव ॥१३॥१४॥ १५॥ १६॥ षम, ष्टम वैक्लव्ये ॥ षोपदेशावेतौ । अत्र ग्रन्थे हि षम १ ष्टम २ षेकृ ३ ष्वर्त्ति ४ षाधि ५ षन्ति ६ षुम्भि ७ षुरि ८ षिलि ९ षान्त्वि १० ष्णुसि ११ ष्णसि १२ ष्टूहि १३ ष्टृंहि १४ ष्टृक्षयः १५ पञ्चदश धातवः साद्योऽपि पाठे षोपदेशाः सन्ति॥ तथाच "षः सोऽष्ट्यै ष्ठिव-"॥२।३।९८॥ इति षस्य सत्वे, सस्य कृतत्वात् "नाम्यन्तस्थाकवर्गात्पदान्तः कृतस्य सः शिड्नान्तरेऽपि"॥२।३।१५॥ इति षत्वं फलम् । यथाऽत्र णौ सनि, सिषमयिषति, तिष्टमयिषति । णौ ङे अदन्तत्वात्सन्वद्भावाद्यभावे; अससमत्; अतस्तमत् । अनेकस्वरत्वाच्चाभ्यामपि यङ् न । परोक्षायामाम्; समांचकार, स्तमांचकारेत्यादि। शीलाद्यर्थे "निन्दहिंस-"॥५।२।६८॥ इति णके; समकः, स्तमक इत्यपि ॥ १७ ॥ १८ ॥ ललण् ईप्सायाम् ॥ ललयति । ङे सन्वद्भावाद्यभावे; अललत् । ललिण् ईप्सायामित्यनदन्तस्य त्वात्मनेपदित्वाल्लालयते; अलीललतेत्यादि स्यात् ॥ १९ ॥ मलण् धारणे ॥ वृद्ध्यभावे, मलयति । ण्यन्ताद् "युवर्ण-"॥५।३।२८॥ इत्यलि, परिमलः॥ २० ॥ वल्पुल, वल्पूल, पल्पुल, पप्पूल, वत्पूलण् लवनपवनयोः॥ पञ्चाप्येते ओष्ठ्यमध्याः॥ वल्पुलयति।

वल्पूलयति । पल्पुलयति । पप्पूलयति । वत्पूलयति क्षेत्रं सबुसधान्यं वा । ङे यथासम्भवं सन्वद्भावह्रस्वाभावे, अववल्पुलत् ॥ २१ ॥ अववल्पूलत् ॥ २२ ॥ अपपल्पुलत् ॥ २३ ॥ अपपप्पूलत् ॥ २४ ॥ अववत्पूलत् ॥ २५ ॥ कुमालण् क्रीडायाम् ॥ कुमालयति । ङे ह्रस्वाभावे, अचुकुमालत् । सुपूर्वादचि, सुकुमालः ॥ २६ ॥ पशण् अनुपसर्गो वा ॥ विकल्पेन अदन्त इत्यर्थः । अयं चात्रानिर्दिष्टार्थोऽपि कैश्चिद्गत्यर्थ इष्टः । पशयति । पाशयति । अपपशत् । अपीपशत्; विकल्पेन वृद्धिः सन्वद्भावादि च । अनुपसर्ग इति किम् । प्रपशते । प्रपशति । पशी इति सौत्रधातोरुभयपदिनः प्रयोगोऽयम् ॥ २७ ॥ शशण् कान्तौ ॥ अदन्तत्वाद् वृद्ध्यभावे, शशयति । शशनम् । ण्यन्ताद् "युवर्ण-"॥५।३।२८॥ इत्यलि, शशः ॥ २८ ॥ अन्सण् विभाजने ॥ व्यंसयति । मयूरव्यंसकः । सनि "स्वरादेः-"॥४।१।४॥ इति सेर्द्वित्वे, व्यंसिसयिषति । "शिड्हेऽनुस्वारः"॥१।३।४०॥ इत्यत्रान्वित्याधिकाराद् द्वित्वे कर्त्तव्ये नकार एवास्ते ततो "न बदनं संयोगादिः"॥४।१।५॥ इति नकरो न द्विरुच्यते । एवं ङे, व्यांसिसत् । पूर्वमेवानुस्वारे तु तत्सहितस्य सेः "स्वरादेः-"॥४।१।४॥ इति द्वित्वे, "अघोषे शिटः"॥४।१।४५॥ इति पूर्वानुस्वारे लुकि, व्यसिंसयिषति, व्यासिंसत् इत्याद्यनिष्टं स्यात् । अस्यादन्तत्वसामर्थ्यादतो लुगभावे वृद्धौ प्वागमे च, व्यंसापयतीत्यपि ॥ २९ ॥ गहण् गहने ॥ गहयति । गहापयतीत्यपि ॥ ३० ॥ अदन्ताः समाप्ताः ॥

अथ द्वावादन्तौ ॥ गाक् जन्मस्तुत्योः ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, जगाति ॥ ३१ ॥ माङ्च् माने ॥ मायते । श्यस्य शित्त्वादत्र "ईर्व्यञ्जनेऽयपि"॥४।३।९७॥ इति ईत्वं न, तत्राशितीत्युक्तत्वात् । "नेर्ङ्मादा-"॥२।३।७९॥ इति नेर्णत्वे, प्रणिमायते ॥३२॥ अथ चत्वार इदन्ताः ॥ किक् ज्ञाने ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे; चिकेति ॥ ३३ ॥ क्षि, जिरिट् हिंसायाम् ॥ यथा-"पद्मानि नो चेत्किमयं क्षिणोति" । क्षिणूयी हिंसायामित्यस्य तु गुणे, क्षेणोतीत्यादि स्यात् ॥ ३४ ॥ जिरिट् ॥ जिरिणोति ॥ ३५ ॥ चिगूण् चये ॥ अयं चुरादिरपि घटादिः । "घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे"॥४।२।२४॥ इति ह्रस्वे, चययति । "चिस्फुरोर्नवा"॥४।२।१२॥ इत्यात्वं त्वस्य नेष्यते परैः ।

ञिणम्परे तु णौ वा दीर्घे; अचायि, अचयि । चायंचायम् , चयंचयम् । णिचोऽनित्यत्वादभावे तु; चयति, चयते । अचुराद्यघटादेश्चिंग्ट् चयने इत्यस्य तु चिनुते; चिनोतीत्यादि । णौ तु "चिस्फुरोः-"॥४।२।१२॥ इत्यात्वविकल्पनाच्चापयति, चाययतीत्यादि । ञिणम् परे तु णौ, अचापि, चापंचापमिति; अचायि, चायंचायमिति स्यात् ॥ ३६ ॥ अथ नव ईदन्ताः ॥ दीधींकि दीप्तिदेवनयोः ॥ दीधीते । क्तौ निपातनाद्दीधितिः ॥ ३७ ॥ ई, वेवींकि प्रजनकान्त्यसनखादनगतिषु ॥ प्रजनं प्रथमगर्भग्रहणम् । असनं क्षेपः अशनं वा; तृप्तिरित्यर्थः । ईते गौः; प्रथमगर्भं गृह्णातीत्याद्यर्थः ॥ ३८ ॥ एवं, वेवीते ॥ ३९ ॥ क्षींष्श् हिंसायाम् ॥ क्षीणाति । क्षीतः । क्षीतवान् । क्षीतिः । षित्त्वात् "षितोऽङ्"॥५।३।१०७॥ इत्यङि, क्षिया इति तु क्षिष्श् हिंसायामित्यनेनापि स्यात् ॥ ४० ॥ व्रींश् वरणे ॥ भ्रींश् भरणे ॥ एतौ प्वादी । "प्वादेर्ह्रस्वः"॥४।२।१०५॥ इति ह्रस्वे, व्रिणाति; भ्रिणाति । अप्वादिस्थाभ्यां त्वाभ्यां व्रीणाति भ्रीणातीत्यादि स्यात् ॥ ४१ ॥ ४२ ॥ ल्पींश् श्लेषणे ॥ ओष्ठ्योपान्त्योऽयम् । प्वादिर्ल्वादिश्च । प्वादित्वात् ह्रस्वे, ल्पिनाति । ल्वादित्वात् "ऋल्वादेरेषां तोनोऽप्रः"॥४।२।६८॥ इति क्तक्तवतुक्तीनां तो ने; ल्पीनः, ल्पीनवान्; ल्पीनिः । अनुस्वारेत्त्वादिडभावे; ल्पेता । ल्पेतुम् ॥४३॥ ल्वींश् गतौ ॥ अयं प्वादिल्वादिबाह्यः । तेन ह्रस्वाभावे, ल्वीनाति । क्तादीनां तो नस्याभावे च; ल्वीतः, ल्वीतवान्, ल्वीतिः । प्वादिल्वादिमध्यस्थत्वे त्वस्य ल्विनातीत्यादि । ल्वीनः, ल्वीनवान्, ल्वीनिरिति च स्यात् ॥ ४४ ॥ ज्रीण् वयोहानौ ॥ युजादिरयम् । "युजादेर्नवा"॥३।४।१८॥ इति वा णिचि, ज्राययति, ज्रयति । जॄण् इत्यस्य तु; जारयति, जरतीत्यादि स्यात् ॥ ४५ ॥ अथ द्वावुदन्तौ ॥ खुंङ् गतौ ॥ खवते । चुखुवे । अनुस्वारेत्त्वात्; खोता । खोतुम् ॥ ४६ ॥ धुग्ट् कम्पने ॥ धुनुते । "पद्मान्तराणि च दुनोति धुनोति पक्षौ" । अनुस्वारेत्त्वात्; धोता । धोतुम् । "आराधयन्ति विधिवद्विधुतान्यकृत्याः" ॥ धूग्ट् कम्पने इत्यस्य तु, धूनोतीत्यादि । "धूगौदितः"॥४।४।३८॥ इति वेटि; धोता, धवितेत्यादि च स्यात् । क्ते, विधूत इत्यादि च ॥ ४७॥ अथ त्रय ऊदन्ताः ॥ गूं, गूतच् पुरीषोत्सर्गे ॥ अत्र प्रान्ते चकारानुबन्धे सत्यप्याद्यो भ्वादिरनुस्वारेत् । द्वितीयस्तु तुदादिरिति प्रतिपत्तव्यम्;

एतदर्थज्ञप्त्यर्थमेव चकारप्रयोगात् । अत एवान्यत्र क्वापि चकारप्रयोगो नास्ति । तत्र च सर्वत्रानेकधातुप्रान्तस्थेन काद्यनुबन्धेन तेषां सर्वेषां धातूनामदादिप्रभृतिगणनिःश्रितत्वं ज्ञेयम् । गवति । अनुस्वारेत्त्वादिडभावे, न्यगौषीत् । गूत्वा । गुंङ् शब्दे इत्यस्य तु, गवते इत्यादि । "धुट्ह्रस्वात्-"॥४।३।७०॥ इति सिज्लुकि, न्यगुतेति; क्त्वायां गुत्वेति च स्यात् । गोता, गोतुं, गोतव्यमित्यादि तूभाभ्यामपि स्यात् ॥ ४८ ॥ गूत् ॥ कुटादिरयम् । तेन सिचः "कुटादेः-"॥४।३।१७॥ इति ङित्त्वात् "सिचि परस्मै समानस्याङिति"॥४।३।४४॥ इति वृद्ध्यभावे इटि, ईति, "इट ईति"॥४।३।७१॥ इति सिचोलुकि, "धातोरिवर्ण-"॥२।१।५०॥ इत्युवादेशे च, न्यगुवीत् । तृजादिष्वपि ङित्त्वादेव गुणाभावे; गुविता, गुवितुं, गुवितव्यम् । क्तिप्रत्यये "उवर्णात्"॥४।४।५८॥ इतीड्निषेधे, गूत्वा । गुंत् पुरीषोत्सर्गे इत्यस्य कुटादेस्तु अनुस्वारेत्त्वादिडभावे, न्यगुषीदित्यादि; गुता, गुतुं, गुतव्यं, गुत्वेति च स्यात् ॥ ४९ ॥ दूट् हिंसायाम् ॥ दूनोति । टुदुंट् उपतापे इत्यस्य दुनोतीत्यादि स्यात् ॥५०॥ अथ ऋदन्ता अष्टौ ॥ जृं अभिभवे ॥ यमी जरति कर्माणि । अनुस्वारेत्त्वात्; जर्त्ता, जर्तुम् । शीलार्थे "वयःशक्तिशीले"॥५।२।२४॥ इति शाने, जरमाणो नाम कश्चित्; तस्यापत्यं वृद्धं "गर्गादेः-"॥६।१।४२॥ इति यञि, जारमाण्यः ॥ ५१ ॥ घृक् क्षरणदीप्त्योः ॥ सृक् गतौ ॥ हृक् बलात्कारे ॥ त्रयोऽपि ह्वादौ । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, जघर्त्ति ॥ ५२ ॥ ससर्त्ति ॥ ५३ ॥ जहर्त्ति ॥ ५४ ॥ स्पृंट् पालनप्रीत्योः ॥ ओष्ठ्योपान्त्योऽयम् । स्पृणोति । पस्पार । अनुस्वारेत्त्वात्; स्पर्त्ता । स्पर्तुम् ॥ ५५ ॥ ऋट्, कृग्श्, हिंसायाम् ॥ ऋणोति । ऋणूयी गतावित्यस्य तु गुणे; अर्णुते, अर्णोतीत्यादि स्यात् ॥ ५६ ॥ कृग्श् ॥ ल्वादिरयम् । "ऋल्वादेः-"॥४।२।६८॥ इति क्तादीनां तो ने, कृणः, कृणवान्, कृणिः ॥ कॄग्शस्तु, कीर्णः; कीर्णवान्, कीर्णिरिति स्यात् । कृणातीत्यादि तु, कॄग्शोऽपि स्यात् ॥ ५७ ॥ वृग्श् वरणे ॥ अयमपि ल्वादिः ॥ "ऋल्वादेः-"॥ ४।२।६८॥ इति क्तादीनां तो ने; वृणः, वृणवान्, वृणिः । वॄग्शस्तु "ओष्ठ्यादुर्" ॥४।४।११७॥ इत्युरि, वूर्णः, वूर्णवान्, वूर्णिरिति स्यात् । वृणातीत्यादि तु वॄग्शोऽपि स्यात् ॥ ५८ ॥ अथ ॠदन्तास्त्रयः ॥ चॄ भक्षणगत्योः ॥ चीर्णा । अचारि गवा ।

आचीर्णं तपः। अस्य च क्तक्तवतोरेव प्रयोगो नतु प्रत्ययान्तरे ॥ ५९ ॥ पॄक् पालनपूरणयोः ॥ ह्वादिरयम्। तसि "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, पूर्वस्य "पॄभृमाहाङामिः"॥४।१।५८॥ इति इत्वे, "ओष्ठ्यादुर्"॥४।४।११७॥ इत्युरि, "भ्वादेर्नामिनः-"॥२।१।६३॥ इति तद्दीर्घे च, पिपूर्त्तः। अन्तौ, पिपुरति। सप्तमी-याति; पिपूर्यात्। पिपर्त्तीत्यादि तु पृंक् इत्यनेनापि स्यात् ॥ ६० ॥ दॄङ्च् भये ॥ अनेन कर्त्तरि, दीर्यते इति सिद्धम्। कर्मकर्तरि, भावकर्मणोश्च, दीर्यते इति तु दॄ भये इत्यनेनापि स्यादेव॥६१॥ अथ ओदन्तः॥ ज्योङ् उपनयननियमव्रतादेशेषु॥ उप-नयनं मौञ्जीबन्धः। नियमः संयमः। व्रतादेशः संस्कारादेशः। क्ते, जीतः; "ज्याव्यधः क्ङिति"॥४।१।८१॥ इति य्वृत्। "व्यञ्जनान्तस्थातोऽख्याध्यः"॥४।२।७१॥ इति प्राप्तं क्तस्य तो नत्वं तु नेष्यते परैः। इट् तु न, आगमानामनित्यत्वात्॥ ६२॥ अथ कान्ताः पञ्च ॥ दकु कृच्छ्रजीवने ॥ आङ्पूर्वात् ह्रौ उदित्वान्ने, आदङ्क। आदङ्केति त्याद्यन्तप्रतिरूपमव्ययमप्यस्ति॥६३॥ तिकृङ्, टिकृङ्, षेकृङ् गतौ॥ णौ ङे ऋदित्त्वाद् "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वाभावे, अतितेकत॥६४॥ टिकृ॥ अटिटेकत्। अनृदितोस्तु तिकिटिक्योः; अतीतिकत्; अटीटिकदि-त्यादि स्यात्। तेकते, टेकते इत्यादि तु ऋदित्वानृदित्त्वयोस्तुल्यमेव ॥ ६५ ॥ षेकृ ॥ असिषेकत्। षेकः षोपदेशत्वेन "षः सः-"॥२।३।९८॥ इति षस्य सत्वे, कृतत्वात् "नाम्यन्तस्था-"॥२।३।१५॥ इति षत्वम्। एवं णौ सनि, सिषेकयिषति। केवलस्य तु षत्वापन्ने सनि "णिस्तोरेवास्वदास्विदसहः षणि"॥२।३।३७॥ इति निय-मान्न षः। सिसेकिषते। अषोपदेशत्वे तु सस्याकृतत्वेन षत्वप्राप्तेरेवाभावात्, असि-सेकत्; सिसेकयिषतीत्येव स्यात्। सेकते इत्यादि तूभयथाऽपि ॥ ६६ ॥ चिक्कण् व्यथने ॥ चिक्कयति। उणादौ अणे, चिक्कणः। असे, चिक्कसो यवक्षोदः॥६७॥ अथ खान्तास्त्रयः॥ चखु गतौ॥ उदित्त्वान्ने, चङ्खति। किति नस्य लुगभावे, चङ्ख्यते। चङ्खितः। चङ्खा; "क्तेटः-"॥५।३।१०६॥ इति अः॥६८॥ खक्ख हसने॥ खक्खति। खक्खितः। खक्खा; "क्तेटः-"॥५।३।१०६॥ इत्यः॥ ६९॥ लिखत् अक्षरविन्यासे॥ कुटादिरयम्। तेन तृजादिषु ङित्त्वाद्गुणाभावे; लिखिता, लिखितुम, लिखनी-यम्। अकुटादेस्तु लेखिता, लेखितुं, लेखनीयमित्यादि स्यात्। लिखतीत्या-

दितूभयथाऽपि। केचित् कड, स्फर, स्फलानपि कुटादौ पठन्ति; तत्पाठबलात्तेषां ञ्णिति वृद्धिनिषेधं चाहुः; यथा कडकः, स्फरकः, स्फलक इत्यादि; तत्तु इह न दर्शितम्; अचि, कड इत्यादि निष्पाद्य ततः स्वार्थे कपि कडक इत्यादि सिद्धेः ॥ ७० ॥ अथ घान्ताः पञ्च ॥ घग्घ हसने ॥ घग्घति। घग्घितः। घग्घा; "क्तेटः-" ॥५।३।१०६॥ इत्यः ॥ ७१ ॥ दघ, सघ, तिघ, चषघट् हिंसायाम् ॥ दघ्नोति। घञि, दाघः; निदाघः ॥ ७२ ॥ सघट् ॥ णौ सनि अषोपदेशत्वेन सस्य कृतत्वाभावात्षत्वाभावे, सिसाघयिषति। एवं णौ ङे, असीसघदित्यादि स्यात्। षोपदेशत्वे तु; सिषाघयिषति; असीषघदित्यादि स्यात्। सघ्नोतीत्यादि तूभयथाऽपि ॥ ७३ ॥ तिघट् ॥ तिघ्नोति। तितेघ ॥ ७४ ॥ चषघट् ॥ चषघ्नोति। अनेकस्वरत्वात् परोक्षाया आमि, चषघांचकार ॥ ७५ ॥ अथाष्टौ चान्ताः ॥ मुचि कल्कने ॥ कल्कनं दम्भः, शाठ्यं, कथनं च। मोचते ॥ ७६ ॥ अचूग्, अचुग् गतौ ॥ अचते। अचति। आचे। आच। अचिता। अचितुम्। ऊदित्त्वाद् क्त्वि वेटि; अक्त्वा, अचित्वा। अञ्चू इत्यस्य तु गतौ ऊदित्त्वात् क्त्वि वेटि; अङ्क्त्वा, अञ्चित्वेति द्वैरूप्यं स्यात् ॥ ७७ ॥ अचुग् ॥ उदित्त्वान्ने, अञ्चति। अञ्चते। क्ये नस्य लुगभावे, अञ्च्यते। इटि "कुर्वन्नुदञ्चिते नेत्रे"॥, अञ्चूग् इत्यस्य तु ऊदित्त्वेन वेड्त्वात् क्तयोः "वेटोऽपतः"॥४।४।६२॥ इतीड्निषेधे "अञ्चोऽनर्चायाम्"॥४।२।४६॥ इति नस्य लुकि च, उदक्त इति स्यात् ॥७८॥ टुयाचृग् याच्ञायाम् ॥ ट्वित्त्वात् "ट्वितोऽथुः"॥५।३।८३॥ इत्यथौ, याचथुः। ऋदित्त्वात् णौ ङे उपान्त्यह्रस्वाभावे, अययाचत्। याचते इत्यादि तु टुयाचृग् इत्यनेनापि स्यात् ॥ ७९ ॥ विचृंकी पृथग्भावे ॥ ह्वादिरयम्। "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे अन्तौ, वेविचति। परेषामिष्टिवशात् "निजां शिति-"॥४।१।५७॥ इत्येत्वम्। वेवेक्तीत्यादि तु विजृंकी इत्यनेनापि स्यात्। णिगि, वेचयतीत्यादि। ऋदित्त्वादङि, अविचत् इत्यादि। विवेचनं, विवेक इत्यादि च विचृंपी पृथग्भावे इत्यनेनापि स्यात् ॥८०॥ चर्चत् परिभाषणे ॥ चर्चति ॥ "नाम्नि पुंसि च"॥५।३।१२१॥ इति णके; चर्चिका। चर्चती, चर्चन्ती स्त्री कुले वा; "अवर्णादश्नोऽन्तो वाऽतुरीङ्योः"॥२।१।११५॥ इति वाऽन्तादेशः ॥८१॥ खचश् भूतप्रादुर्भावे ॥ भूतप्रा-

दुर्भावोऽतिक्रान्तोत्पत्तिः । "तवर्गस्य-" ॥१।३।६०॥ इति श्चो नस्य ञत्वे, खञ्चाति । ह्यौ "व्यञ्जनाच्छ्नाहेरानः" ॥३।४।८०॥ इति श्नाहेरानादेशे; खचान । खचिता । खचितुम् ॥८२॥ गुर्चण् निकेतने ॥ "भ्वादेः-" ॥२।१।६३॥ इति दीर्घे, गूर्चयति ॥८३॥ अथ छान्तः ॥ पिच्छत् बाधने ॥ पिच्छति । पिपिच्छ । पिच्छिता । पिच्छितुम् । पिच्छन्ती, पिच्छती स्त्री कुले वा । अचि, पिच्छा आचामः ॥ ८४ ॥ अथ जान्ताः सप्त ॥ लुजु हिंसाबलदानानिकेतनेषु ॥ उदित्त्वान्ने, लुञ्जति । क्ये नस्य लुगभावे, लुञ्ज्यते ॥ ८५ ॥ ध्रिज गतौ ॥ ध्रेजति । यङि, देध्रिज्यते । यङ्लुपि; देध्रिजीति, देध्रेक्ति । धृजेस्तु, धर्जति; दरीधृज्यते इत्यादि स्यात् ॥ ८६ ॥ रिजि गतिस्थानार्जनोर्जनेषु ॥ ऊर्जनं प्राणनम् । इट आगमस्यैनानित्यत्वादभावे, उद्रिक्तः ॥ ८७ ॥ ओनजैङ् व्रीडे ॥ नजते । ओदित्त्वात् क्तस्य तो ने, ऐदित्त्वाच्च "डीयश्वि-" ॥४।४।६१॥ इत्यनेन क्तयोरिड्निषेधात्, नग्नः । स्वार्थे के स्त्रीत्वे, नग्निकाऽरजाः स्त्री । प्रानजिष्ट; अणपाठात् "अदुरुपसर्ग-" ॥२।३।७७॥ इति णो न ॥८८॥ मृजैकि संपर्चने ॥ मृक्ते । ऐदित्त्वाद् "डीयश्वि-" ॥४।४।६१॥ इत्यनेन क्तयोरिड्निषेधे; मृक्तः, मृक्तवान् ॥ ८९ ॥ वृजैप् वर्जने ॥ "रुधां स्वराच्छ्नो नलुक् च" ॥३।४।८२॥ इति श्ने अन्तौ, वृञ्जन्ति । ववर्ज । घञि जस्य गत्वे; वर्गः । वृणक्तीत्यादि तु, वृचैप् छरणे इत्यनेनापि स्यात् ॥ ९० ॥ मर्जण् शब्दे ॥ मर्जयति । क्ते, मर्जिता रसाला ॥९१॥ अथ टान्तास्त्रयोदश ॥ शौटृ गर्वे ॥ शौटति । शुशौट । ऋदित्त्वाद् णौ ङे "उपान्त्यस्य-" ॥४।२।३५॥ इति ह्रस्वाभावे; अशुशौटत् ॥९२॥ यौटृ सम्बन्धे ॥ सम्बन्धः श्लेषः । यौटति । युयौट । ऋदित्त्वादयुयौटत् । णके, यौटकं युग्मम् । यौटितः ॥ ९३ ॥ मेटृ, म्रेटृ, म्लेटृ, लौटृ, उन्मादे ॥ मेटति । म्रेटति । म्लेटति । लौटति । ऋदित्त्वात्, अमिमेटत् ॥ ९४ ॥ अमिम्रेटत् ॥९५॥ अमिम्लेटत् ॥ ९६ ॥ अलुलौटत ॥ ९७ ॥ स्फटु विशरणे ॥ उदित्त्वान्ने, स्फण्टति वस्त्रम् । किति नस्य लुगभावे, स्फण्ट्यते । पस्फण्ट । णिगि स्वार्थे णिचि वा, स्फण्टयति ॥ ९८ ॥ मुटु प्रमर्दने ॥ उदित्त्वान्ने, मुण्टति । अचि, मुण्टः । "ते हुन्ति कुण्टमुण्टा" ॥९९॥ नट नृतौ ॥ अणपाठात् णत्वाभावे, प्रनटति । णौ प्रनाटयति; नृतावेवास्य घटादित्वादत्र न ह्रस्वः । णोपदेशस्य तु प्रणटति; प्रणाटयतीत्यादि स्यात्

॥१००॥ णटि नतौ च ॥ चान्नृतौ। "पाठे धात्वादेः-"॥२।३।९७॥ इति णस्य ने; नटते। णपाठात् "अदुरुपसर्ग-"॥२।३।७७॥ इति णत्वे; प्रणटते। नेटे, नेटाते, नेटिरे ॥१०१॥ अट्टि, अट्टृति हिंसाऽतिक्रमयोः ॥ अतिक्रम उल्लङ्घनम् । सनि इटि ट्टेर्द्वित्वे "व्यञ्जनस्यानादेः-"॥४।१।४४॥ इति टस्य लुकि, अतिट्टिषते। अद्ट इति दोपान्त्यस्य तु सनि इटि "न बदनम्-"॥४।१।५॥ इति दस्य द्वित्वनिषेधात् "स्वरादेः-"॥४।१।४॥ इति द्वितीयांशस्य टेरेव द्वित्वे, "तवर्गस्य-"॥१।३।६०॥ इति दो डे, "अघोषे प्रथम-"॥१।३।५०॥ इति डस्य टे च; अट्टिटिषते इति स्यात्। अट्टते इत्यादि तूभयोरपि स्यादेव । एवमट्टृतेरपि वाच्यम् ॥ १०२ ॥ अट्टृति ॥ सनि इटि ट्तेर्द्वित्वे, "व्यञ्जनस्यानादेः-"॥४।१।४४॥ इति तो लुकि, अटिट्टिषते । क्विपि "पदस्य"॥२।१।८९॥ इति संयोगान्तलोपे, अट् । अद्ट् इति टान्तदोपान्त्यस्य तु, अत् इति स्यात् । अट्टृत् इत्ययं च तान्तोऽपि अट्टिना सह समानार्थत्वाल्लाघवार्थं टान्तेषु पेठे । एवमग्रेऽपि व्यतिक्रमपाठेऽयमेव हेतुरूह्यः ॥ १०३ ॥ मिटुण् स्नेहने ॥ स्नेहनं स्नेहयोगः। उदित्त्वान्ने, मिण्टयति ॥ १०४ ॥ सुट्टण् अनादरे ॥ ङे अषपाठात्षत्वाभावे, असुसुट्टत् । एवं सनि, सुसुट्टयिषति । षोपदेशस्य तु, असुषुट्टत्; सुषुट्टयिषतीत्यादि स्यात् । सुट्टयतीत्यादि तूभयथाऽपि ॥ १०५ ॥ शटि, शलिण् श्लाघायाम् ॥ शाटयते । अचि, शाटः । "णिवेत्ति-"॥५।३।१११॥ इत्यने, शाटना ॥ १०६ ॥ शलिण् ॥ शालयते ॥ १०७ ॥ अथ ठान्तौ द्वौ ॥ रुठि प्रतीघाते ॥ द्युतादिरयम्। रोठते। रुरुठे । अद्यतन्यां द्युतादित्वात्, "द्युद्भ्यः-"॥३।३।४४॥ इति वाऽऽत्मनेपदम्; पक्षे "शेषात्-"॥३।३।१००॥ इति परस्मैपदं च। तत्र "लृदिद्द्युतादि-"॥३।४।६४॥ इत्यङि, अरुठत्। आत्मनेपदे त्वङो अभावे, अरोठिष्ट ॥ १०८ ॥ चुठुण् हिंसायाम् ॥ उदित्त्वान्ने, चुण्ठयति ॥ १०९॥ अथ दश डान्ताः ॥ चुडु अल्पीभावे ॥ उदित्त्वान्ने, चुण्डति। चुचुण्ड । अचि, चुण्डः ॥११०॥ पिड संघातशब्दयोः ॥ अचि, पेडा वस्त्रादिभाजनविशेषः ॥ १११ ॥ कड्ड कार्कश्ये ॥ क्विपि "पदस्य"॥२।१।८९॥ इति संयोगान्तलोपे, "विरामे वा"॥१।३।५१॥ इति डस्य वा टत्वे च; कड्, कट् । कद्ड् इत्यस्य तु कद्, कत् इति स्यात्। कड्डतीत्यादि

तूभयोरपि ॥ ११२ ॥ अड्ड अभियोगे ॥ क्विपि प्राग्वत् । अड्, अट् । सनि इटि ड्डेर्द्वित्वे; अडिड्डिषति । अद्ड् इत्यस्य तु क्विपि; अद्, अत् इति । सनि "न बदनम्-"॥४।१।५॥ इति निषेधाद्दस्य द्वित्वाभवनेन डेरेव द्वित्वे, अड्डिडिषतीत्यादि च स्यात् । अड्डतीत्यादि तूभयोरपि ॥११३॥ चुड्ड हावकरणे ॥ हावो-भावसूचनम् । क्विपि प्राग्वत् । चुड्, चुट् । चुद्ड् इत्यस्य तु; चुद्, चुत् इति स्यात् । चुड्डतीत्यादि तूभयोरपि॥११४॥ तुड्ड तोडने ॥ तोडनं दारणम् । यथा कविरहस्ये–"तुड्डत्यंहः सकलमचिरात्तोडयत्यश्रियं च" ॥ ११५ ॥ ञिक्ष्विडा अव्यक्ते शब्दे ॥ क्ष्वेडति । अक्ष्वेडीत् । ञीत्वाद् "ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः"॥५।२।९२॥ इति वर्त्तमानकाले क्ते, क्ष्विण्टः; आदित्त्वात् "आदितः" ॥४।४।७१॥ इतीड्निषेधः । अचि, क्ष्वेडो विषम् । गेह एव क्ष्वेडतीति "ग्रहादिभ्यो णिन्"॥५।१।५३॥ इति णिनि, "पात्रे समितेत्यादयः"॥३।१।९१॥ इत्यनेन तत्पुरुषे, तेनैव सप्तम्यलुपि च, गेहे क्ष्वेडी । भिदाद्यङि, क्ष्वेडा सिंहनादः ॥११६॥ ञिक्ष्विडाङ् मोचनस्नेहनयोः ॥ द्युतादिरयम । क्ष्वेडते । अद्यतन्यां "द्युद्भ्यः-" ॥३।३।४४॥ इति वाऽऽत्मनेपदम्; पक्षे "शेषात्-"॥३।३।१००॥ इति परस्मैपदं च; तत्र द्युतादित्वादङि, अक्ष्विडत् । आत्मनेपदे त्वङो अभावे; अक्ष्वेडिष्ट । शीलाद्यर्थे "इङित-"॥५।२।४४॥ इत्यने, प्रक्ष्वेडनः सर्वलोहमयो बाणः ॥११७॥ अड्ट् व्याप्तौ ॥ अड्णोति ॥ ११८ ॥ ओलड्ड, लडुण् उत्क्षेपे ॥ उदित्त्वान्ने, लण्डयति । क्तक्तवत्वोः परयोः "सेट्क्तयोः"॥४।३।८४॥ इति णेर्लुकि, ओदित्करणबलादिड्व्यवधानेऽपि "सूयत्याद्योदितः" ॥४।२।७०॥ इति क्तयोस्तो नत्वे; लण्डिनः, लण्डिनवान् । "णिवेत्ति-"॥५।३।१११॥ इत्यने, लण्डना । णिचोऽनित्यत्वादभावे, लण्डति । णिचिटोरनित्यत्वादभावे, ओदित्त्वात् क्तयोस्तो नत्वे, "तवर्गस्य-"॥१।३।६०॥ इति नस्य णत्वे च; लण्ड्णः, लण्ड्णवान् । यदि तु ओकारस्यानुबन्धत्वं न मन्यते किंतु धात्वंशत्वमेव तदा; ओलण्डयति । ओलण्डति । ओलण्डितः; ओलण्डितवान् । ओलण्डना इत्यादि स्यात् ॥ ११९ ॥ लडुण् ॥ उदित्त्वान्ने, अवलण्डयत्युष्ट्रम् ॥ १२० ॥ त्रुडिण् छेदने ॥ उत्त्रोडयते तृणम् ॥ १२१ ॥ अथ णान्ताश्चत्वारः ॥ फण गतौ ॥ अघटादिरयम् ।

णौ; फाणयति गाम् । गतावप्यघटादित्वाद् "घटादेः-"॥४।२।२४॥ इति ह्रस्वो न। अनेकार्थत्वान्निःस्नेहनार्थोऽप्ययम् । यथा फाणयति घटम्, निःस्नेहयतीत्यर्थः। फाण्यते द्रवत्वादिति फाणितं खण्डश्चोतः । घटादेस्तु "घटादेर्ह्रस्व-"॥४।२ २४॥ इति ह्रस्वे, फणयति । फण्यते । फणितमित्यादि स्यात् । फणतीत्यादि तूभयथाऽपि ॥ १२२ ॥ अणिच् प्राणने ॥ प्राणनं जीवनम् । अण्यते । आणे ॥ १२३ ॥ घृणू, घणूयी दीप्तौ ॥ "तिक्कृतौ नाम्नि"॥५।१।७१॥ इति तिकि, "न तिकि दीर्घश्च"॥४।२।५९॥ इति निषेधात् "अहन्पञ्चमस्य क्विक्ङिति" ॥४।१।१०७॥ इति दीर्घस्य, "यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति" ॥४।२।५५॥ इति णलुकश्चाभावे, "तवर्गस्य-"॥१।३।६०॥ इति तस्य टे, घृण्टिः। नान्तस्य तु तिकि "न तिकि-"४।२।५९॥ इति दीर्घनलुकोर्निषेधे, "म्नां धुट्-" ॥१।३।३९॥ इति नस्य णापवादे ने, घृन्तिरिति स्यात्। तथा ऊदित्त्वात् क्त्वि वेटि, सेटः क्त्वः "क्त्वा"॥४।३।२९॥ इति कित्त्वनिषेधाच्च, घर्णित्वेति । पक्षे तु "यमिरमि-"॥४।२।५५॥ इत्यनेनान्तलुकि, घृत्वेति । वेट्त्वादेव क्तयोरिड-भावे; घृतः, घृतवानिति । क्तौ "यमिरमि-"॥४।२।५५॥ इत्यन्तलुकि, घृतिरिति । तिवादिषु घर्णोति, घर्णुते इत्यादि च घृणेर्नान्तत्वे णान्तत्वे च तुल्यमेव ॥१२४॥ घणूयी ॥ घणुते । घणोति । जघाण । जघणे । ऊदित्त्वात् क्त्वि वेटि, घणित्वा; पक्षे "यमिरमि-"॥४।२।५५॥ इति णलुकि, घत्वा । वेट्त्वात् क्तयोरिडभावे, घतः; घतवान् ॥ १२५ ॥ अथ तान्ताः षट् ॥ इतु बन्धने॥ उदित्त्वान्ने, इन्तति । किति नस्य लुगभावे, इन्त्यते । "गुरुनाम्यादेः-"॥३।४।४८॥ इति परोक्षाया आमि, इन्ताञ्चकार ॥ १२६ ॥ ज्युति भासने ॥ उणादौ इसि, ज्योतिः ॥१२७॥ कितक् ज्ञाने ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे, चिकेत्ति । न न चिकेत्ति नखादित्त्वान्निपातने, नाचिकेतो नाम कश्चित् । केतति; केतनमि-त्यादि प्रयोगास्तु, कित निवासे इति भौवादिककितिना सिध्यन्ति ॥१२८॥ पतिंच् ऐश्वर्ये ॥ पत्यते अधिपतिः। अपत्त। पत्स्यते । धातुपारायणे त्वनुस्वारेतोऽप्यस्या-पतिष्ट, पतिष्यते इतीडुदाहृतः; स आगमशासनस्यानित्यत्वादिति संभाव्यते ॥ १२९॥ वावृतू विवरणे॥ यथा–"ततो वावृत्यमाना सा" भट्टिकाव्ये । ऊदित्त्वात

क्त्वि वेट्; वावृत्त्वा, वावर्त्तित्वा। वेट्त्वादेव क्तयोर्नेट्; वावृत्तः, वावृत्तवान्। तथा "वृते तु वृत्तवावृत्तौ" इति निघण्टौ ॥ १३० ॥ ष्वर्त्तण् गतौ ॥ षपाठात्सस्य षत्वे सनि; सिष्वर्त्तयिषति । अषोपदेशस्य तु, सिस्वर्त्तयिषतीत्यादि स्यात्। स्वर्त्तयतीत्यादि तूभयथाऽपि ॥१३१॥ अथ थान्तौ द्वौ ॥ पर्थ, पार्थण् प्रक्षेपणे ॥ ङे, अपपर्थत् । पृथण् प्रक्षेपणे इत्यस्यापि णिचि, "लघोरुपान्त्यस्य"॥४।३।४॥ इति गुणे, अपपर्थदिति रूपं स्यात्परं पक्षे "ऋद्दवर्णस्य"॥४।२।३७॥ इत्यनेन ऋकारस्यापि ऋकारे कृते, तस्य अपीपृथदिति द्वितीयमपि रूपं स्यात् । पर्थस्य तु तन्न स्यादिति विशेषः । पर्थयतीत्यादि तूभयोरपि तुल्यमेव ॥१३२॥ पार्थण् ॥ पार्थयति । ङे, अपपार्थत् ॥ १३३ ॥ अथ दान्ता अष्टौ ॥ पद स्थैर्ये ॥ पदति ॥१३४॥ कदिष्, क्रदिष्, क्लदिष् वैक्लव्ये ॥ कदते । क्रदते । क्लदते । षित्त्वादङि, कदा ॥ १३५ ॥ क्रदा ॥ १३६ ॥ क्लदा ॥ १३७॥ मन्दि जाड्ये ॥ मन्दते । क्ये नस्य लुकि; मद्यते ॥ १३८॥ खुर्दि, गुधि क्रीडायाम् ॥ "भ्वादेः-"॥२।१।६३॥ इति दीर्घे, खूर्दते । चुखूर्दे ॥१३९॥ गुधि ॥ गोधते । जुगुधे । "वौ व्यञ्जन-" ॥४।३।२५॥ इति क्त्वासनोर्वा किंत्त्वे; गुधित्वा, गोधित्वा । जुगुधिषते, जुगोधिषते ॥ १४० ॥ ऊवेदृग्, ऊबुन्धृग् आलोचने ॥ वेदते । वेदति ॥ ऊदित्त्वात् क्त्वि वेट्; वेत्त्वा, वेदित्वा । वेट्त्वात् क्तयोर्नेट्; वेन्नः, वेन्नवान् । वेन्ना नाम नदी। ऋदित्वाद्वाऽङि; अवेदत्; अवेदीत् । आत्मनेपदे त्वङो अभावे; अवेदिष्ट ॥१४१॥ उबुन्धृग् ॥ बुन्धते। बुन्धति । बुबुन्धे। बुबुन्ध । बुन्धिता। बुन्धितुम्। ऊदित्त्वात् क्त्वि वेटि नश्च लुकि; बुद्ध्वा, बुधित्वा। ऋदित्वात्परस्मैपदे, "ऋदिच्छ्वि-"॥३।४।६५॥ इति वाऽङि, अबुधत् । अबुन्धीत् । आत्मनेपदे त्वङो अभावे; अबुन्धिष्ट ॥१४२॥ णुदीत् प्रेरणे॥ ईदित्त्वात् फलवत्कर्त्तर्यात्मनेपदे; नुदते । नुनुदे । णुदत् इत्यस्य तु; नुदति; नुनोदेत्याद्येव स्यात् । णोपदेशत्वात्प्रणुदतीत्यादि तूभयोरपि स्यात् ॥ १४३ ॥ अथ धान्ताश्चत्वारः ॥ वध हिंसायाम् ॥ वधति । लक्ष्यं यथा—

"यत्र सालप्रतीकाशः कर्णोऽवध्यत संयुगे ॥
तथा भक्षकश्चेन्नास्ति वधको ऽपि न विद्यते ॥ १ ॥"

वधक इत्यत्र ञ्णिति कृत्प्रत्यये, अवधीत्यत्र च, ञौ परे "न जनवधः" ॥४।३।५४॥ इति वृद्धिनिषेधः । अन्यत्र तु स्याद् वृद्धिः; ववाध ॥१४४॥ णाधृङ् याञ्चोपतापैश्वर्याशीःषु ॥ णपाठात् णत्वे, प्रणाधते । अणोपदेशस्य तु, प्रनाधते इत्यादि स्यात् । ऋदित्त्वात् णौ ङे उपान्त्यह्रस्वाभावे; अननाधत् इत्यादि तूभयथाऽपि ॥ १४५ ॥ साधंच्, षाधंट् संसिद्धौ ॥ साध्यत्यन्नम् ॥ १४६ ॥ षाधंट् ॥ सनि षपाठात् सस्य षत्वे; सिषात्सति; अनुस्वारेत्त्वान्नेट् । णौ सनि, सिषाधयिषति । णौ ङे, असीषधत् । अषोपदेशस्य तु; सिसात्सति, सिसाधयिषति, असीसधदित्यादि स्यात् । साध्नोतीत्यादि । अनुस्वारेत्त्वादिडभावे; साद्धा, साद्धुमित्यादि चोभयथाऽपि स्यात् ॥ १४७ ॥ गृधण् वञ्चने ॥ णिजन्तस्यापीष्टिवशात् "प्रलम्भे गृधिवञ्चेः" ॥३।३।८९॥ इत्यात्मनेपदे, गर्द्धयते बटुम् । सूरिमते तु णिगन्तस्यैव गृधेः "प्रलम्भे गृधि-" ॥३।३।८९॥ इत्यात्मनेपदमिष्टम् ॥ १४८ ॥ अथ नान्तौ द्वौ ॥ मन स्तम्भे ॥ ममान । मनतीत्यादि तु म्नां अभ्यासे इत्यनेनापि स्यात् ॥१४९॥ जनक् जनने ॥ ह्वादिरयम् । शिति द्वित्वे, जजन्ति । जजान गर्भं मघवा; अन्तर्भूतणिगर्थत्वादिन्द्रोऽजीजनदित्यर्थः । जज्ञतुः । "जज्ञुः पादाम्बुरुहि तव विभो" । जनैचि प्रादुर्भावे इत्यस्य तु जायते; जज्ञे, जज्ञाते, जज्ञिरे इत्यादि स्यात् ॥१५०॥ अथैकादश पान्तास्त्रयः फान्ताश्च ॥ पान्तेष्वाद्यौ द्वौ घटादी ॥ क्षप प्रेरणे ॥ णौ "घटादेः-" ॥४।२।२४॥ इति ह्रस्वे, क्षपयति । उपक्षपयति प्रावृट्; आसन्नीभवतीत्यर्थः । ञिणम्परे तु णौ वा दीर्घे; अक्षापि, अक्षपि । क्षापंक्षापं, क्षपंक्षपम् । क्षपण् प्रेरणे इत्यघटादेः क्षपेस्तु, अदन्तत्वादुपान्त्यवृद्ध्यभवनेन क्षपयतीत्यादि तुल्यमेव स्यात्परं ञिणम्परे णौ "घटादेः-" ॥४।२।२४॥ इति प्राप्तदीर्घाभवनादक्षपि; क्षपंक्षपमित्येव स्यान्नतु अक्षापि, क्षापंक्षापमितीत्ययं विशेषः ॥ १५१ ॥ त्रप लज्जायाम् ॥ घटादित्वात् णौ ह्रस्वे; त्रपयति । ञिणम्परे तु णौ वा दीर्घे, अत्रापि । अत्रपि । त्रापंत्रापम् । त्रपंत्रपम् । त्रपौषि लज्जायामित्यघटादेस्तु; णावुपान्त्यवृद्धौ, त्रापयतीत्यादि । ञिणम्परे तु णौ; अत्रापि; त्रापंत्रापमित्येव स्यान्नत्वत्रपि; त्रपंत्रपमितीत्येष विशेषः ॥१५२॥ सप समवाये ॥ णौ सनि अषपाठात् षत्वाभावे; सिसापयिषति । णौ ङे, असीसपत् । षोदेशस्य तु, सिषाप-

यिषति; असीषपदित्यादि स्यात् ॥१५३॥ ह्लपृङ् गतौ ॥ ह्लपते । णौ ङे, ऋदित्वात् "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वाभावे, अजिह्लपत ॥१५४॥ तुप, तुम्प, तुफ, तुम्फ, रिम्फत् हिंसायाम् ॥ तुपति । तुपती, तुपन्ती स्त्री कुले वा; "अवर्णादश्न-"॥२।१।११५॥ इति वाऽन्तादेशः । भौवादिकतुपेस्तु; तोपतीति स्यात् । ईङ्योस्तु, शतुः "श्यशवः"॥२।१।११६॥ इति नित्यमन्तादेशे; तुपन्तीत्येकमेव रूपं स्यात् ॥ एवमग्रेऽपि भावनीयम् ॥ १५५ ॥ तुम्प ॥ तुम्पति गौः । प्रस्तुम्पति । शे परे "नो व्यञ्जनस्य-"॥४।२।४५॥ इति प्राप्तोऽपि नस्य लुग्नेष्यते परैः । तुम्पती, तुम्पन्ती स्त्री कुले वा । भौवादिकतुम्पेस्तु तुम्पन्तीत्येकमेव रूपं स्यात् ॥ १५६ ॥ तुफ ॥ तुफति । तुफती, तुफन्ती स्त्री कुले वा । भौवादिकतुफेस्तु, तोफतीति; तुफन्तीत्येकमेव च रूपं स्यात् ॥ १५७ ॥ तुम्फ ॥ तुम्फति; शे नस्य लुग्नेष्यते । तुम्फती तुम्फन्ती स्त्री कुले वा । भौवादिकतुम्फेस्तु, तुम्फन्तीत्येकमेव रूपं स्यात् ॥ १५८ ॥ रिम्फत् ॥ रिम्फति; शे नस्य लुग्नेष्यते । णवि; रिरिम्फ ॥ १५९ ॥ तृप, तृम्पत् तृप्तौ ॥ तृपति ॥ १६० ॥ तृम्पत् ॥ तृम्पति; शे नस्य लुग्नेष्यते ॥ १६१ ॥ स्तुप, स्तूपण् समुच्छ्राये ॥ स्तोपयति । अषपाठात् षत्वाभावे तु, स्तोपयिषति । अतुस्तुपत । स्तूपणस्तु, स्तूपयति । तुष्टूपयिषति । अतुष्टुपदित्यादि स्यात । एवमग्रेतनेऽपि धातौ स्तूपयतीत्येतद्वर्जं वाच्यम् ॥ १६२॥ स्तूपण् ॥ अषपाठात् षत्वाभावे तु, स्तूपयिषति । ङे "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वे, अतुस्तुपत् । स्तूपयतीत्यादि तु, ष्टूपणोऽपि स्यात् । ॥१६३॥ तुपुण् अर्दने ॥ उदित्त्वान्ने, तुम्पयति । किति नस्य लुगभावे, तुम्प्यते । भौवादिकतुम्पेस्तु "नो व्यञ्जनस्य-"॥४।२।४५॥ इति नस्य लुकि, तुप्यते इति स्यात् ॥ १६४ ॥ अथ त्रयोदश बान्ताः ॥ धर्ब, कम्ब, खम्ब, गम्ब, चम्ब, तम्ब, नम्ब, पम्ब, बम्ब, शम्ब, षम्ब, गतौ ॥ धर्बति । धर्बितः । क्ते सेट्त्वात् "क्तेटः-"॥५।३।१०६॥ इत्यः; धर्बा । एवमग्रेऽपि ॥१६५॥ कम्ब ॥ कम्बति । किति नस्य लुकि, कब्यते । कम्बितः । कम्बा ॥१६६॥ खम्ब ॥ खम्बति । खब्यते । खम्बितः । खम्बा ॥१६७॥ गम्ब ॥ गम्बति । गब्यते । गम्बितः । गम्बा ॥१६८॥ चम्ब ॥ चम्बति । चब्यते । चम्बितः । चम्बा ॥१६९॥ तम्ब ॥ तम्बति । तब्यते । तम्बितः । तम्बा ॥१७०॥

नन्ब ॥ नम्बति । अणपाठात् णत्वाभावे, प्रनम्बति । नब्यते । नम्बितः । नम्बा ॥१७१॥ पन्ब ॥ पम्बति । पब्यते ॥ पम्बितः । पम्बा ॥१७२॥ बन्ब ॥ बम्बति । बब्यते । बम्बितः । बम्बा ॥१७३॥ शन्ब ॥ शम्बति । शब्यते । शम्बितः । शम्बा । णिगि चुरादेराकृतिगणत्वात्स्वार्थे णिचि वा, शम्बयति ॥१७४॥ षन्ब ॥ "षः स-" ॥२।३।९८॥ इति षस्य सत्वे, सम्बति । सब्यते । सम्बितः । सम्बा । णौ सनि षपाठात् षत्वे, सिषम्बयिषति ॥ १७५ ॥ सान्बण् संबन्धे ॥ साम्बयति । अषपाठात्षत्वाभावे, सिसाम्बयिषति । णिचोऽनित्यत्वादभावे; सिसाम्बिषति । अलि, साम्बः ॥१७६॥ कुटुन्बिण् धारणे ॥ कुटुम्बयते ॥१७७॥ अथाष्टौ भान्ताः॥ सुन्भ, नभि हिंसायाम् ॥ अषपाठात् षत्वाभावे, सुसुम्भयिषति । असुसुम्भत् ॥ १७८॥ नभि ॥ द्युतादिरयम् । द्युतादित्वात्परस्मैपदेऽङि, प्रानभत् । आत्मनेपदे त्वङो अभावे, प्रानभिष्ट; "द्युद्भ्यः-"॥३।३।४४॥ इति वाऽऽत्मनेपदम् । अणपाठाच्च न णः । णोपदेशस्य तु, प्राणभत्; प्राणभिष्टेत्यादि स्यात् ॥ १७९ ॥ षुन्भ भाषणे च ॥ चाद्धिंसायाम् । षः स-"॥२।३।९८॥ इति सत्वे, सुम्भति । णौ ङे, असुषुम्भत्; षपाठात् षत्वम् । एवं णौ सनि, सुषुम्भयिषति । केवलात्तु षत्वापन्ने सनि "णिस्तोरेव-"॥२।३।३७॥ इति नियमात् षत्वाभावे, सुसुम्भिषति । कुपूर्वादस्मादचि, कुसुम्भः । लक्ष्यं च-"सावष्टम्भनिशुम्भसुम्भना" इति ॥१८०॥ ष्टभुङ् स्तम्भे ॥ टपरषादिरयम् । यस्तु सूरिभिः पठितोऽस्ति स प्रयोगे ष्टुंक्वत्तपरसादिरपि । षोपदेशत्वार्थं ष्टभुङ् इति पेठे; तेन तस्य "षः सोऽष्ट्यै-" ॥२।३।९८॥ इति षः सः स्यादस्य तु षः सो नेष्यते परैः । उदित्त्वान्ने, ष्टम्भते । किति नस्य लुगभावे, ष्टम्भ्यते । यङि, टाष्टम्भ्यते । यङ्लुपि, टाष्टम्भ्धि । सनि, टिष्टम्भिषते । णौ सनि, टिष्टम्भयिषति । णौ ङे, अटिष्टम्भत् । सूरिपठितस्य तु, ष्टभुङः षः से, निमित्ताभावे इति न्यायात् टस्य तभवने, स्तम्भते । स्तम्भ्यते । तास्तम्भ्यते । तास्तम्भ्धि इति । तथा षत्वापन्ने सनि "णिस्तोरेव-"॥२।३।३७॥ इति नियमात् षत्वाभवने, तिस्तम्भिषते इति । ण्यन्तस्य तु निषेधाभावात् षत्वभवने; तिष्टम्भयिषतीति । णौ ङे, अतिष्टम्भदित्यादि च स्यात् ॥१८१॥ डभु, डिभुण् संघाते ॥ उदित्त्वान्ने, डम्भयति । णिचोऽनित्यत्वादभावेऽप्युदित्त्वात्किति नस्य लुगभावे,

डम्भ्यते । एवं डिम्भादित्रयेऽपि वाच्यम् ॥१८२॥ डिभुण् ॥ डिम्भयति । डिम्भ्यते । अचि, डिम्भः ॥१८३॥ दभु, दिभुण् वञ्चने ॥ उदित्त्वान्ने, दम्भयति । दम्भ्यते ॥१८४॥ दिभुण् ॥ उदित्त्वान्ने, दिम्भयति । दिम्भ्यते ॥१८५॥ अथ मान्तौ द्वौ ॥ छद्म गतौ ॥ गतिरत्र प्रस्तावाच्छद्मप्रकाररूपा । छद्मति । सिचि, अच्छद्मीत् । णवि, चच्छद्म ॥१८६॥ सामण् सान्त्वने ॥ ङे, "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वे, असीसमत् । चुराद्यदन्तस्य त्वससामदिति स्यात् ॥ १८७ ॥ अथ रान्तास्त्रयः ॥ तुरक् त्वरणे ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे; तुतोर्त्ति ॥१८८॥ षुरत् ऐश्वर्यदीप्त्योः ॥ षपाठात् षत्वे; सुषोर । असूषुरत् । सुषोरयिषति । अषोपदेशस्य तु; सुसोर । असूसुरत् । सुसोरयिषतीत्यादि स्यात् । सुरतीत्यादि तूभयथाऽपि ॥१८९॥ गुद्रुण् अनृतभाषणे ॥ उदित्त्वान्ने, गुन्द्रयति । अचि, गुन्द्रा उत्तममुस्ता ॥१९०॥ अथ लान्ता एकादश ॥ तत्राद्यौ द्वौ घटादी ॥ स्खल चलने ॥ दल विशरणे ॥ णौ "घटादेः-"॥४।२।२४॥ इति ह्रस्वे; स्खलयति । दलयति । ञिणम्परे तु णौ वा दीर्घे; अस्खालि । अस्खलि । स्खालंस्खालम् । स्खलंस्खलम् । अदालि । अदलि । दालंदालम् । दलंदलम् । अघटाद्योः स्खलदलोस्तु णौ; स्खालयति; दालयतीत्यादि । ञिणम्परे च णौ; अस्खालि । स्खालंस्खालमिति । अदालि । दालंदालमिति च स्यात् । स्खलति, दलतीत्यादि तूभयथाऽपि तुल्यम् ॥ १९१॥१९२ ॥ स्थल स्थाने ॥ अषपाठात् षत्वाभावे, तिस्थालयिषति । ङे, अतिस्थलत् । षोपदेशस्य तु, तिष्ठालयिषति । अतिष्ठलदित्यादि स्यात् । स्थलतीत्यादि तूभयथाऽपि ॥१९३॥ बलि परिभाषणहिंसादानेषु ॥ ओष्ठ्यादिरयम् । बलते । दन्त्यौष्ठ्यवादित्वाभावेन "न शसददवादिगुणिनः"॥४।१।३०॥ इत्येत्वनिषेधाभावात् "अनादेशादेरेकव्यञ्जनमध्येऽतः"॥४।१।२४॥ इत्येत्वे द्वित्वाभावे च; बेले, बेलाते, बेलिरे ॥ १९४ ॥ षिलत् उञ्छे ॥ षपाठात् षत्वे; सिषेल । असीषिलत् । सिषेलयिषति । अषोपदेशस्य तु, सिसेल । असीसिलत् । सिसेलयिषतीत्यादि स्यात् । सिलतीत्यादि तूभयथाऽपि ॥१९५॥ पुलत् महत्त्वे ॥ पुलति । भ्वादेस्तु, पोलतीति स्यात् ॥ १९६ ॥ बल, वलण् प्राणने ॥ आद्य ओष्ठ्यादिर्द्वितीयो दन्त्योष्ठ्यादिः ॥ घटादी एतौ । तेन "घटादेः-"॥४।२।२४॥ इति ह्रस्वे,

बलयति । वलयति । ञिणम् परे तु णौ वा दीर्घे; अबालि; अबलि । बालंबालम् । बलंबलम् । अवालि; अवलि । वालंवालम् । वलंवलम् ॥१९७॥१९८॥ मुलण् रोहणे ॥ मोलयति । णिचोऽनित्यत्वात् "नाम्युपान्त्य-"॥५।१।५४॥ इति के; मुलः ॥ १९९ ॥ पालण् रक्षणे ॥ पाली; ण्यन्तादौणादिकः "स्वरेभ्य इर्" (उणा-६०६) इति इस्ततो ङीः ॥२००॥ गलिण् स्रावणे ॥ गालयते । उद्गालयते । ण्यन्तादौणादिकः "स्वरेभ्य इर्" (उणा-६०६) इति इः; गालिः । ङ्यां, गाली ॥ २०१ ॥ अथ वान्तास्त्रयः ॥ क्षीवृ निरसने ॥ क्षीवति । क्ते, "अनुपसर्गाः क्षीवोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः"॥४।२।८०॥ इत्यनेन क्षीव इति निपातनस्य क्षीवृङ एवेष्टत्वादस्मात् क्ते, क्षीवितः ॥ २०२ ॥ चीवी आदानसंवरणयोः ॥ णौ ङे, "उपान्त्यस्य-"॥४।२।३५॥ इति ह्रस्वे, अचीचिवत् । चीवृगस्तु, ऋदित्त्वात् णौ ङे, उपान्त्यह्रस्वाभावे, अचिचीवदिति स्यात् । चीवते इत्यादि तूभयथाऽपि ॥ २०३ ॥ षान्त्वण् सामप्रयोगे ॥ षपाठात्तस्य षत्वे, सिषान्त्वयिषति । अषोपदेशस्य तु, सिसान्त्वयिषतीत्यादि स्यात् । सान्त्वयतीत्यादि तूभयथाऽपि ॥२०४॥ अथ शान्ताश्चत्वारः ॥ रश शब्दे ॥ रशति । औणादिके अने; रशना मेखला । मौ, रश्मिः । णित्यौ, राशिः ॥२०५॥ वाश्टङ्च् शब्दे ॥ णौ ङे, ऋदित्त्वात् " उपान्त्यस्य " ॥४।२।३५॥ इति ह्रस्वाभावे, अववाशत् । वाशिचस्तु उपान्त्यह्रस्वादिभवनात् , अवीवशादित्यादि स्यात् । वाश्यते इत्यादि तूभयथाऽपि ॥२०६॥ लश, लषण् शिल्पयोगे ॥ लाशयति; लाषयति वा दारु; भ्रमादिना तक्ष्णोतीत्यर्थः ॥ २०७ ॥ दाशिण् दाने ॥ दाशयते । ङे, अदीदशत । दाश्टग् दाने इत्यस्य तु, ऋदित्त्वात् णौ ङे उपान्त्यह्रस्वाभवनात्, अददाशतेत्यादि स्यात् ॥२०८॥ अथ षान्ता अष्टौ ॥ खष हिंसायाम् ॥ खषति । चखाष ॥ २०९ ॥ सूष, शूष प्रसवे ॥ अषपाठात् षत्वाभावे, सुसूष । षोपदेशस्य तु, सुषूषेत्यादि स्यात् । सूषतीत्यादि तूभयथाऽपि ॥२१०॥ शूष ॥ शूषति ॥ अचि, शूषा शाकजातिः ॥२११॥ घषुङ् करणे ॥ उदित्त्वान्ने, "शिड्हे-"॥१।३।४०॥ इति तस्यानुस्वारे; घंषते । जघंषे । घंषिता । घसुङ् करणे इत्यस्य तु; घंसते । जघंसे । घंसितेत्यादि स्यात् ॥२१२॥ धिषक् शब्दे ॥ ह्वादिरयम् । "ह्वः शिति"॥४।१।१२॥ इति द्वित्वे; दिधेष्टि ॥२१३॥ मुषच् खण्डने

पुष्यादिरयम् । मुष्यति । पुष्यादित्वादङि, अमुषत् ॥२१४॥ धूष, धूसण् कान्तीकरणे ॥ धूषयति ॥२१५॥ धूसण् ॥ धूसयति ॥२१६॥ धृषिण् सामर्थ्यवारणे ॥ धर्षयतेऽरीन् ॥२१७॥ अथ षट् सान्ताः ॥ जर्त्स परिभाषणहिंसातर्जनेषु ॥ जर्त्सति । जर्त्सन्ती स्त्री कुले वा; "श्यशवः" ॥२।१।११६॥ इति शतुर्नित्यमन्तादेशः। जर्त्सन्ती इत्येतद्रूपं च जर्त्सतेस्तुदादित्वशङ्कोच्छित्त्यै, भ्वादित्वव्यवस्थापनाय च, धातुपारायणे दर्शितमस्तीत्यतोऽस्माभिरपि दर्शितम् । तुदादित्वे हि "अवर्णादश्नः-" ॥२।१।११५॥ इति शतुर्वाऽन्तादेशे; जर्त्सती, जर्त्सन्ती इति द्वैरूप्यं स्यात् ॥२१८॥ ष्णुसच् अदने ॥ "षः स-" ॥२।३।९८॥ इति सत्वे; स्नुस्यति । षपाठात् षत्वे, सुष्णोस । णौ ङे, असुष्णुसत् । णौ सनि, सुष्णोसयिषति । केवलात्तु षत्वापन्ने सनि, "णिस्तोरेव" ॥२।३।३७॥ इति नियमात् षत्वाभावे; सुस्नुसिषति, सुस्नोसिषति; "वौ व्यञ्जनादेः-" ४।३।२५॥ इति सेट्सनो वा कित्त्वम् । एवं सेट्क्त्वोऽपि वा कित्त्वे; स्नुसित्वा, स्नोसित्वा ॥ २१९ ॥ ष्णसूच् निरसने ॥ घटादिरयम् । "षः स-" ॥२।३।९८॥ इति षस्य सत्वे, णौ घटादित्वात् ह्रस्वे च; स्नसयति । ञिणम्परे तु णौ वा दीर्घे; अस्नासि; अस्नसि । स्नासं स्नासम्; स्नसंस्नसम् । णौ सनि, सिष्णसयिषति; षपाठात् षत्वम् । अघटादेः स्नसेस्तु, स्नासयति । अस्नासि । स्नासंस्नासम् । सिष्णासयिषतीत्यादि स्यात् । स्नस्यतीत्यादि तूभयथाऽपि ॥२२०॥ दासट् हिंसायाम् ॥ दास्नोति ॥ २२१ ॥ उध्रसूश् उञ्छे ॥ उध्रस्नाति । हौ श्नाहेरानादेशे; उध्रसान । अनेकस्वरत्वात्परोक्षाया आमि; उध्रसांचकार ॥ सनि, उदिध्रसिषति । ऊदित्त्वात् क्त्वि वेटि; उध्रस्त्वा, उध्रसित्वा । उत्पूर्वध्रस्नातेस्तु; उद्ध्रस्नाति । उद्ध्रसान । उद्दध्रास । उद्दिध्रसिषति । उद्ध्रस्येत्यादि स्यात ॥२२२॥ उध्रसण् उत्क्षेपे ॥ उध्रासयति । ङे, औदिध्रसत् । उत्पूर्वध्रासेस्तु, उद्ध्रासयति । उददिध्रसदित्यादि स्यात् ॥ २२३ ॥ अथ हान्ताः पञ्च ॥ गृहौङ् ग्रहणे ॥ औदित्त्वाद्वेटि; गर्ढा, गर्हिता । वेट्त्वात् क्तयोर्नेट्; गृढः, गृढवान् । क्तौ, गृढिः । "नाम्युपान्त्य-" ॥५।१।५४॥ इति के; गृहम् । गृहाः ॥२२४॥ स्नूहङ् विश्वासे ॥ दन्त्यादिः । द्युतादिरयम् । सस्नेहे । "द्युद्भ्योऽद्यतन्याम्" ॥३।३।४४॥ इति वाऽऽत्मनेपदे; परस्मैपदपक्षे द्युतादित्वादङि च; अस्नहत्, अस्नंहिष्ट । ऊदित्त्वात् क्त्वि वेटि, सेटः क्त्वः "क्त्वा"

॥४।३।२९॥ इति कित्त्वाभावे; "नो व्यञ्जनस्य-"॥४।२।४८॥ इति नस्य लुगभावे च; स्तंहित्वा। इडभावपक्षे तु, हो ढत्वादिप्रक्रियया "ढस्तड्ढे"॥१।३।४२॥ इति ढलुषि, दीर्घे च; स्तढ्वा ॥ २२५ ॥ ष्टृहौ, ष्टृन्हौत् उद्यमे ॥ णौ सनि षपाठात् "षः स-"॥२।३।९८॥ इति कृतसस्य षत्वे, तिष्टर्हयिषति ॥ २२६ ॥ ष्टृन्हौत् ॥ प्राग्वत् षत्वे, तिष्टृंहयिषति। अषोपदेशयोः स्तृहस्तृंहोस्तु; तिस्तर्हयिषति, तिस्तृंहयिषतीत्याद्येव स्यात्॥२२७॥ दहुण् रक्षणे ॥ दंहयति। णिचोऽनित्यत्वादभावेऽपि, उदित्त्वात् क्ये नस्य लुगभावे; दंह्यते ॥२२८॥ अथ क्षान्ताश्चत्वारः॥ ष्टृक्ष गतौ॥ णौ सनि, तिष्टृक्षयिषति; षपाठात् षः। अषोपदेशस्य तु, तिस्तृक्षयिषतीत्यादि स्यात् ॥ २२९ ॥ जक्षुङ् गतिदानयोः ॥ घटादिरयम्। उदित्त्वान्ने, जङ्क्षते। क्ङिति नस्य लुगभावे; जङ्क्ष्यते। जजङ्क्ष। जङ्क्षिता। क्ते, जङ्क्षितः। जङ्क्षा; "क्तेटः-"॥५।३।१०६॥ इत्यः। णौ, जङ्क्षयति। ञिणम्परे णौ, "घटादेः-"॥४।२।२४॥ इति वा दीर्घे; अजाङ्क्षि; अजङ्क्षि। जाङ्क्षंजाङ्क्षम्; जङ्क्षंजङ्क्षम् ॥ २३० ॥ भक्षी अदने ॥ भक्षते। भक्षति। बभक्षे। बभक्ष। भक्षितुम्। भक्षितम् ॥ २३१ ॥ ऋक्षट् उपशमने ॥ ऋक्ष्णोति। अचि, ऋक्षं नक्षत्रम् ॥ २३२ ॥ इत्यादि ॥

ये तु भ्वादिप्रभृतिगणपठिता अपि चौरादिकणिच्मात्रार्थमर्थान्तरार्थमात्मनेपदपरस्मैपदार्थमिडागमार्थं वा विशेष्य परैः पृथक् पठितास्तेऽत्र प्रायो नादृताः। बहुलमेतन्निदर्शनमित्युक्त्या चौरादिकणिचः सर्वधातुभ्यो बहुलंभावाद्धातूनामनेकार्थत्वस्यात्मनेपदेडागमयोरनित्यत्वस्य च सर्वेषां प्रतीतत्वात् ॥

आगमिका अपि च केचिद्धातवो दृश्यन्तेः-यथा। दटृ आच्छादने॥ दटिता पट्टशाला॥१॥ विकुर्व विक्रियायाम्॥ "भ्वादेः-"॥२।१।६३॥ इति दीर्घस्यानित्यत्वादभावे, विकुर्वति। विकुर्वितम्। विकुर्वित्वा॥२॥ कुर्व करणे॥ प्राग्वद्दीर्घाभवने; कुर्वति। अस्य विपूर्वस्य क्त्वि; विकुर्व्य॥३॥ उषण् निवासे॥ अदन्तः। "णिवेत्ति-"॥५।३।१११॥ इत्यने; पर्युषणा ॥ ४ ॥ युहं उद्धरणे ॥ निर्यूढम् ॥५॥ इत्यादि ॥
सर्वेऽप्येते लौकिकादिधातवो लक्ष्यानुरोधात्सिद्धाः ॥

**अत्र यथोक्तसकलसौत्रादिधातूनां संग्रहश्लोकाः—**

कण्डूादिरथ स्तम्भूस्तन्द्राः किपतिगृहिचिरिजुकुर्भूस्तार्किः ।
कक्किः कार्किः सिकिमार्किचङ्किमकिरिखिकगार्धिमर्चाश्च ॥१॥
आर्या गीतिः ।

मञ्जिः पाञ्जिः कञ्जीरण्टिर्घट्टमटिकुठकुडोडिवडिः ।
णडिघणिकिणिकुतिपुतिलतिसातिकथोदिक्षदिः सुन्दिः ॥२॥
कदिमिधिधनिरिपिकपातिक्षुपिट्टुपिबिम्बिस्तथा रिभिः स्तुम्भूः ।
स्कम्भूस्कुम्भूदभिडिमिधमिपीयिरुरिस्तुरिस्तन्द्रिः ॥ ३ ॥
चुलिरुलिलुली च सल्लिर्हेल्लिभिलिधन्वितविपशिस्पशयः ।
ऋशिभिषियुषिधिषिलुसिपसिभसिलुहिरिहिचुक्षिचिक्षिश्च ॥ ४ ॥
इति सौत्राः स्युः क्लविवीजिहीलिरन्दोलिरपि च हिन्दोलिः ।
प्रेङ्खोलिरूषिरित्यादिलौकिकाः स्युश्चुलुम्पिकूचिघटिः ॥ ५ ॥
उल्लुडिरवधीर्युद्धुष्युल्लकसाद्याश्च वाक्यकरणीयाः ।
खच्योजरफुटतुच्छस्कन्धोषवसाश्च तद्भिन्नाः ॥ ६ ॥
कृशुपिशुकुसुदसुत्रसुरित्यदर्शितार्थाश्च खेडपणवित्ताः ।
कर्त्तः कर्त्रः कत्थः श्लथः शरच्छदलभाः श्रपः खोदः ॥ ७ ॥

स्तनध्वनौ स्वनस्यमौ ।
षमष्टमौ ललिर्मलिः ॥ ८ ॥
॥ जगौ विलासिनी छन्दः ॥

वल्पुलवल्पूलौ पल्पुलपप्पूलौ ।
वत्पूलकुमालौ पशिशश्यंसिगहाश्च ॥ ९ ॥

आद्येऽर्द्धे भमौ विक्रान्ता; तृतीयेंऽह्रौ तयौ तनुमध्या; तुर्ये सभौ गो वितानम् । छन्दस्त्रयमीलने चात्र वृत्ते उपजातिच्छन्दः; सर्वासामुक्तादिजातीनां सङ्कर उपजातिरिति वृद्धा इति छन्दोऽनुशासनोक्तेः ॥

गा माः किः क्षिज्जिरिच्चिर्ईर्वेवीदीधीरुदाहृताः क्षीव्रीः ।
भ्रील्पील्वीर्ज्रीखुर्धुर्गूगृदृर्जृघृसृहृस्पृऋकुः ॥ १० ॥
वृश्चृपृदृज्योदकुतिकिटिकयः षेकिच्चिक्कवखुखक्खिः ।
लिखिघग्घिदाधिसाधिस्तिघिचषाघिमुचिड्डिरचियाचिविचिः ॥ ११ ॥

चर्चिखचिगुर्चिपिच्छिलुजुध्रिजिरिजिर्नजिमृजी वृजिर्मर्जिः ।
शौट्टर्योटृर्मेटृर्म्रेटृर्म्लेटृस्तथा लौटृः ॥ १२ ॥
स्फटुमुटुनटिणटिरत्थ्यटूतिमिण्टिसुटिशटिशलिरुठुर्वुठुयुक् ।
चुडुपिडिकड्डाड्डारचुड्डितुड्डती क्ष्वेडती अडिर्लण्डिः ॥ १३ ॥
लन्दिस्तुडिफण्याणिघृणिघणिरिन्तिज्युतिकितिः पतिर्वावृत् ॥
ष्वत्तिः पर्थिः पार्थिः पदिः कदिः क्रदिक्लुदी मन्दिः ॥ १४ ॥
खुर्दिगुधिर्वेदिबुन्धृर्णुदिवधती णाधृसाधिषाधिगृधिः ।
मनति-जनिक्षपित्रपिसपिह्वपिस्तुपितुम्पि-तुफितुम्फिः ॥ १५ ॥
रिफितृपितृम्पिः स्तुपिना स्तूपिस्तुपिश्च घर्बिकम्बी च ।
खम्बिर्गम्बिश्चम्बिस्तम्बिर्नम्बिश्च पम्बिश्च ॥ १६ ॥
बम्बिः शम्बिः षम्बिः षाम्बिकुटुम्बी च सुम्भिनाभिषुम्भिः ।
ष्टभुडभुडिभुदभुदिम्भिश्छाम्रिः सामिस्तुरिषुरी च ॥ १७ ॥
गुन्द्रिस्खलिदलतिस्थलिबलिषिलिपुलिबलिवलिश्च मोलिश्च ॥
पालिगली क्षीविश्रीविषान्त्विरशिवाशिलशिल्षयः ॥ १८ ॥
दाशिखषिसूषिशूषिर्घषुधिषिमुषिधूषिधूसिघृषिजर्त्सिः ।
ष्णुसिना ष्णासिदासी ह्रिरुध्रासि गृहिस्रंही ष्टृहिर्टृंही ॥ १९ ॥
दंहिः ष्टृक्षिर्जक्षि-भेक्षी ऋक्ष्याद्याश्च ।
अन्यैरुक्ता एते सैद्धान्ताश्चाथामी ॥ २० ॥

॥ गौ सावित्री छन्दः ॥

दटिरथ विकुर्विकुर्वी उषियुहिरित्यादि सैष धातुगणः ।
लौकिकप्रभृतिर्लक्ष्या-नुरोधतः सिद्धिमध्यास्त ॥ २१ ॥

॥ इत्यपश्चिमस्यादितो गणनयैकचत्वारिंशशततमस्य न्यायस्य बृहद्वृत्तिः ॥
प्रशस्तिकाव्ये संसंगृहीता इति ॥ अत्र "प्रोपोत्संपादपूरणे"॥७।४।७८॥
इत्यनेन समो द्विर्भावः । यथा-

"प्रप्रशान्तकषायाग्नेरुपोपप्लववर्जितम् ।
उदुज्ज्वलं तपो यस्य संसंश्रयत तं जिनम्" ॥ इत्यादौ सिद्धः ।

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ।
तच्छिष्याश्रवणहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कार इहान्तिमोऽम्बुधिमितः सम्पूर्णतां लम्भितः ॥ ४ ॥



एवं च ।

एषा न्यायार्थमञ्जूषा संभृताऽर्थैरहो बुधाः ।
आस्ते न्यस्ता पुरस्ताद्वो यथेच्छमुपयोज्यताम् ॥ १ ॥
आद्येंऽशे सप्तपञ्चाशन्न्याया अस्यां पुरोऽन्विताः ।
शेषांशेष्वितरे पञ्चषष्टिरष्टादशैकक: ॥ २ ॥
तदेवमेकचत्वारिंशतैकं शतमन्वितम् ।
मञ्जूषायामिह न्याया येऽन्तर्भूतास्तु तेऽधिकाः ॥ ३ ॥
परमुद्घाटनेऽमुष्याः शेमुष्या कुञ्चिकाय्यते ।
तेषामेव स्फुरेद्येषां न्यक्षं श्रीहैमलक्षणम् ॥ ४ ॥

अपि च ।

न्यायवृत्तिरियं हैमी हैमं व्याकरणं श्रिता ।
अतीव भ्राजते यद्वत्कल्पद्रुं कल्पवल्लरी ॥ ५ ॥

अन्यव्याकरणादिदेवकुलिकः सद्देवताधिष्ठिति-
र्योऽयं राजति हैमलक्षणमहाप्रासाद उर्व्यां स्थिरः ।
तत्रालोककलोकलोचनहृदामाह्लादमुत्पादय-
न्नेष द्वारततोरुतोरणरमां ग्रन्थः समालम्बते ॥ ६ ॥

इतश्च ।

श्रीमच्चान्द्रकुले पुराऽजनि जगच्चन्द्रो गुरुर्यस्तपा-
चार्यख्यातिमवाप तीव्रतपसा तस्यान्वयेऽजायत ।
प्रौढः श्रीवरदेवसुन्दरगुरुस्तत्पट्टपूर्वागिरेः
शृङ्गे श्रीप्रभुसोमसुन्दरगुरुर्भानुर्नवीनोऽभवत् ॥ ७ ॥

यतः-

भानोर्भानुशतानि षोडश लसन्त्येकत्र मास्याश्विने
यच्छिष्यास्तु ततोऽधिका अपि महीमुद्योतयन्ते सदा ।
तस्याहं चरणावुपासिषि चिरं श्रीमत्तपागच्छप-
क्षोणीविश्रुतसोमसुन्दरगुरोश्चारित्रचूडामणेः ॥ ८ ॥

अपि च ।

मारिर्येन निवारिता सुरकृता संसूत्र्य शान्तिस्तवं
स श्रीमान् मुनिसुन्दराभिधगुरुर्दीक्षागुरुर्मेऽभवत् ।
यस्य श्यामसरस्वतीति बिरुदं विख्यातमुर्वीतले
गुर्वी श्रीजयचन्द्रसूरिगुरुरप्याधात् प्रसत्तिं स मे ॥ ९ ॥
साम्प्रतं तु जयन्ति श्रीरत्नशेखरसूरयः ।
नानाग्रन्थकृतस्तेऽपि पूर्वाचार्यानुकारिणः ॥ १०॥
एतानाचार्यहर्यक्षान् प्रत्यक्षानिव गौतमान् ।
वीतमायं स्तुवे स्फीतश्रीतपागच्छनायकान् ॥ ११ ॥

किंच ।

हैमव्याकरणं महार्णवमिव व्यालोड्य मञ्जूषिका-
संपूर्त्तिप्रमितान्यमून्यचिनवं सन्न्यायरत्नानि यत् ॥
तत्सर्वं यदवाप्तबोधकणिकासिद्धौषधीजृम्भितं
विद्यासिद्धमिमं हृदि प्रणिदधे चारित्ररत्नं गुरुम् ॥ १२ ॥
चिन्मयानां मयाऽमीषामृषीणां सुप्रसादतः ।
हेमहंसाभिधानेन वाचनाचार्यतायुजा ॥ १३ ॥
श्रीमद्विक्रमवत्सरे तिथितिथौ १५१५ शुक्लद्वितीयातिथौ
पूर्वाह्णे मृगलाञ्छने मृगशिरःशृङ्गाग्रशृङ्गारिणि ॥
शुक्रस्याहनि शुक्रमासि, नगरे श्रीसागरेऽहम्मदा-
वादे निर्मितपूर्त्तिरेष जयताद् ग्रन्थः सुधीवल्लभः ॥१४॥



इति श्रीतपागच्छपुरन्दर-श्रीसोमसुन्दरसूरिस्वदीक्षागुरुश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिप्रमुखश्रीगुरुसाम्प्रतविजयमानश्रीगच्छनायकपरमगुरुश्रीरत्नशेखरसूरिचरणकमलसेविना महोपाध्यायश्रीचारित्ररत्नगणिप्रसादप्राप्तविद्यालवेन वाचकश्रीहेमहंसगणिना स्वपरोपकाराय संवत् १५१५ वर्षे ज्येष्ठसुदिद्वितीयायां निर्मितेयं न्यायार्थमञ्जूषानाम्नी न्यायबृहद्वृत्तिश्चिरं नन्दतात् ।

प्रत्यक्षरं गणनया ग्रन्थेऽस्मिन् मानमागमन् ।
सहस्रत्रितयी पञ्चाशीतिः श्लोकाश्च साधिकाः ॥ १ ॥



# न्यायार्थमञ्जूषायाः शोधनपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १ | १२ | प्रज्ञापनाकनीयसी | प्रज्ञापनी कनीयसी |
| २ | ५ | तस्तु | तश्च |
| ४ | ५ | "दश्चाङ्-" | "दश्चाङः" |
| १९ | १ | णि- | णिट- |
| ४१ | १६ | सह उत्वं | सह ओत्वं |
| ४४ | ७ | मपेक्ष्यमाणायाः | मपेक्षमाणायाः |
| ४५ | ८ | "व्यञ्जनादेर्वोपान्त्यस्यातः" ॥४।३।४७॥ | "व्यञ्जनानामनिटि" ॥४।३।४५॥ |
| ४५ | २३ | तदेतन्न्यायशयैव | तदेतन्न्यायाशयैव |
| १०१ | १४ | दुर्भिदा | दुर्भेदा |
| १२४ | १९ | ॥ ३१ ॥ किणत् | ॥ ३१ ॥ अथ णान्तौ द्वौ । घण हिंसायाम् । द्रून् दारूणि घगति लिहाद्य चे द्रुघणो घनः । किणत् |
| १२८ | १३ | ॥ ७२ ॥ अथ | ॥ ७२ ॥ धिप च । अथ |
| १३१ | २१ | ॥ ६ ॥ इत्यादि | ॥ ६ ॥ वसण् निवासे ॥ वसयति, अदन्तत्वाद् वृद्धिर्न, अववसत्, अत्र दीर्घसन्वद्भावौ न । इत्यादि |
| १३३ | ३ | खादण् क्षेपे ॥ खादयति | खोदण् क्षेपे ॥ खोदयति |
| १३३ | ४ | अचखादत् | अचखोदत् |
| १४० | २१ | चुट्ठण् हिंसायाम् | वुठुण् हिंसायाम् । |
| १४० | २२ | चुण्ठयति | वुण्ठयति |
| १४१ | १७ | लडुण् उत्क्षेपे | लदुण् उत्क्षेपे |
| ,, | २५ | लडुण् | लदुण् |
| ,, | ,, | अवलण्डयति | अवलन्दयति |
| १४२ | २६ | वावृतू विवरणे | वावृतूचि वरणे |
| १४३ | २१ | णुदीत् प्रेरणे | णुदींत् प्रेरणे |
| १४६ | ६ | सान्बण् संबन्धे | सांबण् संबन्धे |
| १४६ | ८ | कुटुन्बिण् धारणे | कुटुंबिण् धारणे |
| ,, | ९ | सुन्भ | सुंभ |
| ,, | १३ | पुन्भ | पुंभ |
| १४८ | १७ | लश | लषण् |
| १४९ | १७ | उच्छे | उञ्छे |
| ,, | २४ | सन्हूङ् | संहूङ् |
| १५३ | ३ | तच्छिष्याश्रवण- | तच्छिष्याश्रव- |

श्रीहेमहंसगणिविरचित–

न्यायार्थमञ्जूषायाः

# स्वोपज्ञो न्यासः

श्रीजिनवरगणधरगणमानम्य विशेषयत्ययं किंचित् ।
न्यासेन हेमहंसः स्वकृतां न्यायार्थमञ्जूषाम् ॥ १ ॥

**त्रैलोक्येत्यादि ।** अत्रादौ सर्वगुरुर्मगणः, पृथ्वीतत्त्वं श्रीहेतोर्न्यस्तम् । त्रैलोक्यशब्दश्च ह्रीं-कारवाची । ह्रींकारश्च श्रीसिद्धचक्रयन्त्रस्य पञ्चसु बीजेषु मध्यवर्त्ति तृतीयं बीजम् । ततश्च तुलामध्य-न्यायेन, कोऽर्थः । यथा तुलाया मध्ये गृह्यमाणे आद्यन्तग्रहणं स्वयं स्यात्तथाऽत्र मध्यवर्त्तिबीजोपादानेन शेषाण्यपि बीजान्युपात्तानि ज्ञेयानि । यद्वा । पुरःस्थनम इति पदयोजने, ह्रीं नम इति पठितसिद्धमन्त्रः श्री सिद्धचक्राङ्गभूतोऽत्र पठितः शास्त्रस्य शिष्यप्रशिष्यसन्ततिविस्तरणार्थं पालनार्थं च । अयमेव चार्थः **तायिने** इत्यनेन सूच्यते; तायेः सन्तानपालनार्थत्वात् । श्रीसिद्धचक्रयन्त्रस्थापनायाश्च वृत्ताकारत्वात् सोमोपमा । श्रीसोमसुन्दर इति च स्वगुरुनामकीर्त्तनम् । इह च मङ्गलाभिधेयप्रयोजनसम्बन्धा दिग्मात्रतो दर्श्यन्ते । तथाहि । आद्यन्तग्रहणे मध्यस्यापि ग्रहणमिति न्यायबलेन सकलस्यापि शास्त्रस्य मङ्गलत्वं दर्शयितुं तावदाद्यन्तयोर्मङ्गलमवश्यं वाच्यम् । तत्र न्यायवृत्तेरादाविदं श्रीसिद्धचक्रस्वगुरुना-मप्रणिधानं मङ्गलम् । अन्ते तु यत् सिद्ध इति शब्दो न्यस्तोऽस्ति तदेव मङ्गलमिति । अथ न्यायान् प्रशंसंस्त एवात्राभिधेया इति सूचयति । **न्यायाध्वनीत्यादि ।** अत्राद्ये पादे न्यायशब्दो राजनीति-वाची । द्वितीये अगर्हितवाणिज्यादिव्यापारवाची । तृतीये तार्किकप्रतीतानुमानादिप्रमाणवाची । तुर्ये वैयाकरणप्रसिद्धन्यायवाची, समुदितसर्वप्रकारन्यायवाची वा । **शुभपदेति ।** शुभानि निरवद्यानि यानि पदानि प्रयोगास्तद्रूपफलदाम् । अनेनैतां न्यायवृत्तिमधीत्य न्यायानां यथावत्प्रयोगं कुर्वन् शुभपदानि साधयितुं शक्नोतीति शास्त्रप्रयोजनं दर्शितम् । अन्याऽपि च न्यायवृत्तिर्नित्यं सन्मार्गप्रवृत्तिराद्रियमाणा सती शुभं यत्पदं प्रतिष्ठा तत्फलदा स्यादित्युक्तिलेशः । अथ शास्त्रस्य सम्बन्धमाह । **इह तावदित्यादि । अनित्यत्वमुपेक्ष्येति ।** न्यायाः किल सर्वेऽपि "सिद्धिः स्याद्वादात्"॥१।१।२॥ इति भणनाद्यथाशिष्टप्रयोगं क्वचित्प्रवर्त्त्यन्ते क्वचिच्च न प्रवर्त्यन्ते इति प्रायो अनित्या एव सन्ति; नच तेषामनित्यता प्राक्तनटीकाकारेण का-पि प्रकटितेति भावः । **न्यायार्थमञ्जूषानाम्नीति ।** न्यायानामर्था अभिधेयानि ते एव येऽर्था धनानि तेषां मञ्जूषेव मञ्जूषा । अस्मिन्नाम्नि विद्वन्मानसहंस इत्यादाविव परंपरितरूपकाख्योऽलङ्कार इति काव्यप्रकाश-मतम् । **सम्यग्दृष्टिपरिगृहीतत्वेनेति ।** यदुक्तम् । "व्याकरणच्छन्दोलंकृतिनाटककाव्यतर्कगणितादि । सम्यग्दृष्टिपरिग्रहपूतं जयति श्रुतज्ञानम्" इति । **सूचीकटाहन्याय इति ।** सूचीकटाहाविव न्यायो दृष्टा-न्तः । तथाहि । यथा लोहकारः प्रथमं कटाहार्थिना आगत्य कटाहघटनाय यद्यभ्यर्थ्यते पश्चाच्च सूच्यर्थिना सूचीघटनाय, तथापि स सूचीमल्पकृत्यत्वात्प्रथमं घटयित्वाऽर्पयति कटाहं तु बहुकृत्यत्वात्पश्चादेव । तथा यत्र पश्चान्निर्दिष्टं प्रमेयमल्पवक्तव्यत्वात्प्रथमं प्ररूप्यते पूर्वनिर्दिष्टं तु बहुवक्तव्यत्वात्पश्चात्, तत्रायं

न्यायः। यथा समासान्ताधिकारे "अथ समासान्तो वक्ष्यते" इति निर्दिश्य विधिपूर्वको निषेध इति न्याये सत्यप्यल्पवक्तव्यत्वात्प्रथमं "न किमः क्षेपे"॥७।३।७०॥ इत्यादि चतुःसूत्र्या समासान्तनिषेध उक्तः। तदनु "इच्युद्धे"॥७।३।७४॥ इति सूत्रादारभ्य द्व्युत्तरशतमितसूत्रैस्तद्विधिरिति॥ **काकाक्षिगोलकन्यायो, डमरुकमणिन्यायो, घण्टालालान्याय इत्यादि।** यथा काकस्यैक एवाक्षिगोलको यथाप्रयत्नं द्वयोरपि चक्षुश्छिद्रयोर्यातीति लोकोक्तिः। यथा वा डमरुके वाद्यमाने तद्रज्जुबद्धो मणिस्तदुभयतो लगन् डमत्कारकारी स्यात्। यथा वा घण्टायां वाद्यमानायां तल्लाला उभयतोऽपि लगन्ती ध्वनिमुत्पादयेत्। तथा यत्रैकमेव पदं मध्ये स्थितं पुरःपश्चात्स्थितवाक्ययोः सम्बध्यमानं सदर्थमुद्दीपयति तत्रैते न्यायाः। यथा "तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः"॥३।१।२६॥ इति सूत्रे मिथ इति पदं पुरः पश्चाच्च वाक्ययोर्लगति। तथाहि। तत्र मिथ आदायेति रूपे युद्धे वाच्ये, तेन मिथः प्रहृत्येति रूपे च युद्धे वाच्येऽनेनाव्ययीभावः स्यात्। तत्राद्ये यथा। केशेषु च केशेषु च मिथ आदाय कृतं युद्धं केशाकेशि। द्वितीये यथा। दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धं दण्डादण्डीति। **इत्यादीति।** आदिशब्दात् तुलामध्यन्यायादयोऽप्यूह्याः। तदुदाहरणादि च प्रसङ्गादत्रैव त्रैलोक्येत्यादिश्लोकव्याख्याद्यवसरे प्रागुक्तम्॥

**स्वं रूपं शब्द-॥ व्याकरणसूत्रे सर्वत्रेति।** इमे द्वे पदे सर्वन्यायानां वृत्तिष्वनुक्ते अपि प्रत्येकं वाच्ये। न्यायेषु व्याकरणस्यैवाधिकृतत्वात्। **ग्राह्यमिति।** [1]साऽध्याहाराणि हि प्रायःसूत्राणीत्यतोऽस्मिन्न्यायसूत्रे ग्राह्यमिति लभ्यते। एवमग्रेऽपि यथायोगं वाच्यम्। **अशब्दसंज्ञेति।** शब्देन संज्ञा शब्दसंज्ञा न तथा अशब्दसंज्ञा। **यदि तेनेति।** अनेनाशब्दसंज्ञेत्यत्र "तदः सेः स्वरे पादार्था" ॥१।३।४५॥ इतिसूत्रवद्यदिशब्दोऽध्याहार्य इति सूचितम्। **शब्देन संज्ञेतीति।** प्राक्तन्यां न्यायवृत्तौ त्वशब्दसंज्ञेतिपदस्य, यदि पुनः शब्दः संज्ञारूपः स्यात्तदा रूपस्याग्रहणमिति व्याख्याऽस्ति। तथा च संज्ञेतिपदस्य संज्ञायतेऽनेनेति करणसाधनत्वाच्छब्दसंज्ञाशब्दयोर्विशेषणविशेष्यभावभवनेन कर्मधारयसमाससम्भवात् सूत्रे संज्ञेत्यस्य प्राक्पातः प्रसज्यते विशेषणत्वान्नीलोत्पलमित्यत्र नीलशब्दवत्। तथा च स्वं रूपं शब्दस्यासंज्ञाशब्द इति सूत्रपाठः स्यादित्यतोऽस्माभिः संज्ञानं संज्ञेतिभावसाधनतां संज्ञेत्यस्योद्भाव्य तेन सह शब्देत्यस्य तृतीयासमास एव यथास्थितसूत्रपाठसमर्थनार्थं व्याख्यातः। **रूपमनादृत्येति।** रूपं भवतु मा वा; न कश्चित्तदाग्रह इत्यर्थः। **गौणमुख्ययोरित्यादिन्यायानामपवादोऽयं न्याय इति।** अनेन वाक्येन प्रकृतन्यायस्य प्रयोजनं दर्शितम्। एवमग्रेतनन्यायेष्वपि वाच्यम्। **यथायोगमिति।** पञ्चनदं, सप्तगोदावरमित्यत्रात्समासान्तो; द्वियमुनं, त्रिगङ्गमित्यनयोर्ह्रस्वो; विभक्तेरम्भावश्च चतुर्ष्वपीति भावः। **दारूपमेवेति।** ननु "प्राज्ज्ञश्च"॥५।१।७९॥ इत्यस्य वृत्तौ दारूपग्रहणे ज्ञारूपसाहचर्यं हेतूकृतमस्ति। तथाच तद्वृत्तिः। ज्ञारूपसाहचर्याद्दारूपमेवेह ग्राह्यं न तु दासंज्ञेति; तथाचैतन्न्यायांशानित्यतायाः किमागतम्। एतन्न्यायांशानित्यत्वेऽपि ज्ञारूपसाहचर्याद् दारूपग्रहणस्यैव सम्भवात्। मैवम्। यतोऽशब्दसंज्ञेत्यंशश्चेन्नित्यः स्यात्तदा साहचर्येण किं चलति। "गापास्थासा-"॥४।३।९६॥ इति सूत्रेऽपि तावद्गापादिरूपाणां साहचर्येषु सत्स्वपि देति दासंज्ञा एव गृह्यमाणाः सन्ति नतु दारूपाः। परमत्राशब्दसंज्ञेत्यंशस्यानित्यत्वाद् दुर्बलतां वीक्ष्य सूरिणा ज्ञारूपसाहचर्यव्यपदेशेन स्वेष्टं दारूपग्रहणमत्र प्रसह्य स्थापितमिति ज्ञायते। ततश्च यथा

१ सोपस्काराणि इति पाठान्तरम्।

पर्वतोऽयं वह्निमान् धूमवत्त्वादित्यनुमाने वह्न्यविनाभावी धूमो वह्निं ज्ञापयति; तथा एतदनित्यत्वाविनाभाविनी दारूपग्रहणोक्तिरेतदनित्यतां ज्ञापयतीति व्यक्तमेव दारूपग्रहणोक्तेः प्रस्तुतांशानित्यताज्ञापकत्वम् । **नास्तीति** । ननु द्वितीयांशस्याप्यस्यनित्यता । "प्राञ्ज्ञश्च"॥५।१।७९॥ इत्यत्र दारूपाणां "दश्चाङः" ॥५।१।७८॥ इत्यत्र दाग एव च ग्रहणात् । मैवम् । यतः "दश्चाङः"॥५।१।७८॥ इत्यत्र "समः ख्यः"॥५।१।७७॥ इति पूर्वसूत्रानुवृत्तख्यारूपस्य, "प्राञ्ज्ञश्च"॥५।१।७९॥ इत्यत्र च ज्ञारूपस्य साहचर्यान्न दारूपमेव तावद् ग्राह्यम्, नतु दासंज्ञा । "दश्चाङः"॥५।१।७८॥ इत्यत्र तु दारूपाणामपि मध्ये दागेव ग्राह्यो नत्वन्ये; दाग एव आङा योगात् । इति हेतू प्रदर्शितौ स्तः । यच्चैतौ दर्शितौ तदेतन्न्यायांशशङ्कयैवेति, प्रत्युतास्य न्यायांशस्य ज्ञापकमिदं स्यान्नत्वानित्यतासाधकम । ननु दर्शितहेतुभ्यामपि "दश्चाङः"॥५।१।७८॥ "प्राञ्ज्ञश्च"॥५।१।७९॥ इति सूत्रयोर्दासंज्ञग्रहणं चेद्भ्रमम्, तदा द्वितीयांशस्यानित्यता जातैव । सत्यम् । परमेतावान्विशेषोऽस्ति, यदुत "दश्चाङः"॥५।१।७८॥ इत्यादि सूत्रस्थं दागादिग्रहणमस्यांशस्यानित्यतायास्तात्त्विकं साधनमिति वक्तुं न शक्यते । व्यतिरेकव्याप्तिमत एव साधनस्य तात्त्विकसाधनत्वसम्भवात् । न चास्य व्यतिरेकव्याप्तिरस्ति । तथाहि । "साध्याभावे साधनस्याप्यवश्यमभावः" इति तावद्व्यतिरेकव्याप्तिलक्षणम् । ततश्चैतन्न्यायांशानित्यत्वाभावे दागादिग्रहणं न सिध्यत्येवेतीह व्यतिरेकव्याप्तिरुच्यते, न चैषाऽत्रास्ति । एतन्न्यायांशानित्यत्वाभावेऽपि, व्याख्यातो विशेषार्थप्रतिपत्तिरिति न्यायादेव तत्र तत्र यथोक्तदागादिग्रहणसिद्धेः । यदि परमन्वयमात्रमत्रास्ति, यथा "दश्चाङः"॥५।१।७८॥ इत्यादौ दागादिग्रहणदर्शनादेष न्यायांशो अनित्य इति । नचान्वयमात्रं साध्यसाधकं भवितुमर्हति । चक्रीवत्यासन्ने सति पटनिष्पत्तिं दृष्ट्वा तस्यापि पटनिष्पत्तिहेतुत्वकल्पनप्रसङ्गादित्यतो नेदं "दश्चाङः"॥५।१।७८॥ इत्यादिसूत्रस्थं दागादिग्रहणमेतन्न्यायद्वितीयांशस्यानित्यतायास्तात्त्विकं साधनमिति वक्तुं पार्यते । व्यावहारिकं तु साधनं स्यादितीह दर्शितम् । अतएव चानुबन्धनिर्दिष्टं न यङ्लुपीत्यस्योत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं न तदन्तस्येत्यस्य गामादाग्रहणेष्वित्येतत्प्रथमांशस्य चानित्यतायामेवंविधमप्यनित्यतोदाहरणमादरिष्यते; स्थानाशून्यत्वार्थं उद्भावयिष्यते च तत्र तत्र तत्तथैव ॥ १ ॥

सुस- ॥ **सुमगधेष्वित्यादि** । शोभना मगधाः सुमगधाः; "सुः पूजायाम्"॥३।१।४४॥ इति तत्पुरुषः । सर्वे च ते मगधाश्च सर्वमगधाः; "पूर्वकालैकसर्वजरत्पुराणनवकेवलम्"॥३।१।९७॥ इति कर्मधारयः । अर्धं मगधानामर्द्धमगधाः; "समेंऽशेऽर्द्धं नवा"॥३।१।५४॥ इति तत्पुरुषः । **पूर्वमगधेष्विति** । पूर्वोऽशो मगधानाम् । कोऽर्थः । यस्यां तस्यां दिशि प्रथमोंऽशो मगधानां पूर्वमगधाः; "पूर्वापराधरोत्तरमभिन्नेनांशिना"॥३।१।५२॥ इत्यनेनांशितत्पुरुषः । ततस्तेषु भवः पूर्वमागधकः; अत्र पूर्वशब्दोऽवयववाची । यदि तु पूर्वदिक्स्थत्वादवयवोऽपि पूर्वस्तदवयवयोगाच्च मगधा अपि पूर्वे । ततस्तेषु पूर्वेषु मगधेषु भव इत्यखण्ड एव "दिगधिकं संज्ञातद्धितोत्तरपदे"॥३।१।९८॥ इत्यनेन तद्धितप्रत्ययविषये कर्मधारयः क्रियते, तदा पूर्वशब्दो मुख्यवृत्त्या दिग्वाच्यपि तात्स्थ्यात्तद्व्यपदेश इत्युपचारादवयववाची, तदन्ववयवावयविनोरभेदोपचारे देशवाची च स्यात् । यदा तु पूर्वस्यां मगधाः पूर्वमगधाः; "सर्वादयोऽस्यादौ"॥३।२।६१॥ इति पुंवद्भावः । ततस्तेषु भवः पूर्वमागधक इति क्रियते, तदा केवलदिग्वाच्यपि । एषु च सर्वेषु प्रकारेषु पूर्वशब्दो वृत्त्युक्तयुक्त्या दिक्शब्द इत्युच्यते । **बहुविषयेभ्य इत्यकञिति** । ननु ग्रहणवतेति न्यायस्यापवादोऽयं न्याय इत्युक्तम्; अपवादत्वं च प्रसक्ते सति स्यात्, ग्रहणवतेति न्यायश्च तदा प्रसज्यते यदि "दन्तपादनासिका-"॥२।१।१०१॥ इति सूत्रवज्जामपरिगणनं

कृतं स्यात् । इह तु बहुत्वविषयेभ्यो राष्ट्रवाचिनामभ्य इति सामान्येनैवोक्तम्; ततः कथं सुमागधकादिषु ग्रहणवतेत्यस्य प्रसङ्गः । उच्यते । बहुविषयेभ्यो राष्ट्रवाचिभ्य इत्यप्युक्ते येभ्यो बहुवचनमेव प्राप्नोति ते अङ्गवङ्गवृजिमद्रमगधपञ्चालादयः प्रतिनियता एव राष्ट्रशब्दा लभ्यन्ते; ततोऽत्र नामपरिगणनमकृतमपि कृतप्रायमेवेत्यतः स्पष्ट एव सुमागधकादिषु ग्रहणवतेत्यस्य प्रसङ्गः । एवमग्रेतनन्यायोक्ते "भर्तुसन्ध्यादेरण्"॥६।३।८९॥ इति सूत्रेऽपि ग्रहणवतेत्यस्य प्रसज्यमानता भाव्या । तथाहि । ऋतु इति सामान्योक्तेऽपि वर्षाप्रावृड्भ्यामिकणेण्ययोर्विधानाच्छेषऋतुनामान्येव तत्र लभ्यन्ते इत्यतस्तत्रापि नामपरिगणनमकृतमपि कृतप्रायमेवेति । **उत्तरपदवृद्धिविधानमेवेति** । ननु "मद्रादञ्"॥६।३।२४॥ इति सूत्रवृत्तौ दिक्शब्दपूर्वान्मद्रात्सूत्रोक्तस्यैवाञ्विधानस्य अकञ्कापवादत्ववचनं सुसर्वार्द्धेतिन्यायस्य ज्ञापकमुक्तमस्ति । तथाहि । पूर्वमद्रेषु भवः पौर्वमद्रः। स्त्रीत्वे तु "अणञेये-"॥२।४।२०॥ इति ङ्यां पौर्वमद्री इत्यत्र प्रथमं "बहुविषयेभ्यः"॥६।३।४५॥ इत्यकञ् प्राप्तस्तदनु प्रतिपदोक्तत्वाद् "वृजिमद्राद्देशात्कः"॥६।३।३८॥ इति कः प्राप्तः । परं दिक्शब्दपूर्वत्वरूपविशेषविधानात् "मद्रादञ्"॥६।३।२४॥ इति अञेव अकञ्कौ बाधित्वा प्रवर्तते॥ अत्र कश्चिदाह । नन्वत्राकञ्कयोः प्राप्तिरपि नास्ति । केवलादेव मद्रादकञ्कयोर्विधानादिति । तत्रोत्तरम् । नन्विदमेवाञ्विधानस्याकञ्कापवादत्ववचनं ज्ञापयति, यदुतास्ति सुसर्वार्द्धेति न्याय इति । तेन सुपाञ्चालकः, सर्वपाञ्चालकः, अर्द्धपाञ्चालकः, पूर्वपाञ्चालकः, अपरपाञ्चालकः, सुमागधकः, सर्वमागधकः, अर्द्धमागधक इत्यादौ "बहुविषयेभ्यः"॥६।३।४५॥ इत्यकञ्; सुवृजिकः, सुमद्रक इत्यादौ "वृजिमद्राद्देशात् कः"॥६।३।३८॥ इति कश्च तदन्तविधिना सिद्धौ । ततश्च पौर्वमद्र इत्यादौ दिक्शब्दपूर्वान्मद्रादपि सुसर्वार्द्धेति न्यायेनाकञ्कयोः प्राप्तिसद्भावात्तौ बाधित्वा "मद्रादञ्"॥६।३।२४॥ इत्यञो भवनं नासंगतम् । तदेवमञोऽकञ्कापवादत्ववचनं सुसर्वार्द्धेति न्यायस्य ज्ञापकमुक्तमस्ति; तद्भवद्भिरप्येतन्न्यायज्ञापकं तदेव कस्मान्न दर्शितम् । पुरातनन्यायवृत्तौ तस्यैव ज्ञापकस्य दर्शितत्वात् । उच्यते । तज्ज्ञापकं स्यात्, परं दिक्शब्देभ्यो जनपदस्येत्येतावत एवांशस्य स्यान्नतु सुसर्वार्द्धेत्येतावतोंऽशस्य। अस्मदुक्तं तु ज्ञापकमखण्डमपि न्यायं ज्ञापयतीति तदेव दृढम्। **बाधभवनादिति** । राष्ट्रवाचिभ्यो योऽकञादिविधिरुक्तः सोऽवयवप्राधान्यविवक्षायां राष्ट्रान्तेभ्योऽपि प्राप्नोति, परं ग्रहणवतेति न्यायेन निषिद्धः स एतन्न्यायेन पुनः प्रसूयते इति भावः । ननु पूर्वमागधक इत्यत्र यदा तद्धितप्रत्ययविषये पूर्वेषु मगधेषु भव इति कर्मधारयः क्रियते तदा वाक्यावस्थायामसमस्तादेव मगधशब्दात्तद्धितोत्पत्तिर्दृश्यते इत्यतो ग्रहणवतेति न्यायस्याप्रसङ्गात्तद्बाधकैतन्न्यायस्याप्यप्रवृत्तेः कथं तदानीमस्य प्रतिप्रसवकारिता । उच्यते । तद्धितप्रत्यये उत्पत्स्यमाने तावत्कर्मधारय उक्तोऽस्तीत्यतस्तद्धितोत्पत्तिरवश्यं पूर्वमगधेतिसमुदायभवनादन्वेव स्यात्तथाच पूर्वोक्तरीत्या स्पष्टैवास्य कर्मधारयपक्षेऽपि प्रतिप्रसवकारिता ॥ २ ॥

**ऋतो-॥ पूर्ववार्षिकमिति ।** अत्र ऋतुविशेषवाचकाद्वृद्धिमद्विधिः "वर्षाकालेभ्यः"॥६।३।८०॥ इत्यत्र वर्षाशब्दोक्तेः । पूर्वशैशिरमित्यत्र तु ऋतुसामान्यवाचकात्; "भर्तुसन्ध्य-"॥६।३।८९॥ इति सूत्रे ऋतुसामान्यस्यैवोक्तत्वात् । ऋतोर्वृद्धिमद्विधाविति न्यायसूत्रे च ऋतोरित्युक्त्या ऋतुविशेषवाचकाद्यो वृद्धिमद्विधिर्यश्च ऋतुसामान्यवाचकाद्वृद्धिमद्विधिस्तावुभावपि संगृह्येते इत्येतदर्थज्ञापनार्थमेवात्रेदमुदाहरणद्वयं दर्शितम् । **माभूदिति** । ननु तर्ह्यत्र किं स्यात् । उच्यते । "भवे"॥६।३।१२३॥ इत्यनेनाणि पूर्वप्रावृष इत्येव स्यादणो वृद्धिमत्त्वात् । **काललक्षण एवेकणिति** । नन्वत्र सोऽपि न प्राप्नोति। ग्रहणवतेति न्यायेन तदन्तविधेर्निषेधात् । मैवम् । यतो ग्रहणवतेति न्यायस्तत्रैव प्रवर्त्तते यत्र "दन्त-

पादनासिका-"॥२।१।१०१॥ इति सूत्रवन्नामानि परिगणितानि स्युः; सामर्थ्येन प्रतिनियतानामेव लभ्यमानत्वात्परिगणितप्रायाणि वा स्युः। इह तु "वर्षाकालेभ्यः"॥६।३।८०॥ इत्यत्र कालेभ्य इति बहुवचनं यथाकथञ्चित्कालवृत्तिभ्यः प्रत्ययप्रापणार्थम् । तेन मासे भवं मासिकम् । एवं सांवत्सरिकं, दैवसिकमित्यादौ साक्षात्कालवृत्तिभ्यो यथेकण् स्यात्, तथा उपचरितकालवृत्तिभ्योऽपि । तथाहि । निशासहचरितमध्ययनं निशा । प्रदोपसहचरितं प्रदोषः। अत्र निशाप्रदोषशब्दौ कालवाचकावप्यध्ययने उपचरितौ स्तस्ततस्तयोर्निशाप्रदोषयोरध्ययनयोर्जयी नैशिकः, प्रादोषिकः । तथा कदम्बपुष्पसहचरितः कालः कदम्बपुष्पम् । व्रीहिपलालसहचरितो व्रीहिपलालम् । अत्र कदम्बपुष्पव्रीहिपलालशब्दावकालवाचिनावप्युपचारात्कालवृत्ती स्तः । ततश्च तयोः कदम्बपुष्पव्रीहिपलालयोः कालयोर्देयमृणं कादम्बपुष्पिकं, व्रैहिपलालिकमित्यादि । नचैवंविधानां प्रकाराणां परिगणेयत्वमस्ति, ततो ये शब्दा एवंविधप्रकारैः कालवाचिनो वर्त्तन्ते तेऽप्यपरिगणेया एवेत्यतो नात्र ग्रहणवतेत्येतत्प्रवर्त्तते । **बाधभवनादिति ।** ऋतुवाचिभ्यो योऽणादिविधिरुक्तः सोऽवयवप्राधान्यविवक्षायामृत्वन्तेभ्योऽपि प्राप्नोति; परं ग्रहणवतेति न्यायेन निषिद्धः स एतन्न्यायेन पुनः प्रसूयते इति भावः ॥ ३ ॥

**स्वर— ॥** ननु व्यञ्जनस्यार्द्धमात्रिकत्वेनैकमात्रत्वादिलक्षणानां ह्रस्वत्वानां प्रसङ्ग एव नास्तीति कोऽर्थोऽत्र न्यायेन । मैवम् । अर्द्धमात्रिकयोः समुदाये एकमात्रत्वमपि संभवेत् । तथाच प्रतक्ष्येत्यत्र क्षस्य ह्रस्वसंज्ञत्वे "ह्रस्वस्य तः-"॥४।४।११३॥ इति तागमप्रसङ्ग इत्यादौ न्यायसाफल्यात्। स्वरस्येत्येकवचनोक्तेश्च तितउ छत्रमित्यत्रादुतोः समुदितयोर्द्विमात्रत्वेऽपि दीर्घसंज्ञाया अभावात् "अनाङ्माङ-" ॥१।३।२८॥ इति छस्य द्वित्वविकल्पो न स्यात् । **बहुषु स्थानेष्विति ।** यद्यपि "समानानां तेन दीर्घः"॥१।२।१॥ "ऋलृति ह्रस्वो वा"॥१।२।२॥ इत्यादौ ह्रस्वदीर्घविध्योः स्थान्युपात्तोऽस्ति । परं यौ ह्रस्वदीर्घविधी एतन्न्यायस्य वृत्तावुदाहृतौ, तयोस्तावत् स्थान्युपात्तो नास्ति । ततोऽन्यत्रापि "खित्यनव्ययारुषोर्मोऽन्तो ह्रस्वश्च"॥३।२।१११॥ "इच्यस्वरे दीर्घ आच्च"॥३।२।७२॥ इत्यादौ यत्र ह्रस्वदीर्घविध्योः स्थान्युपात्तो नास्ति, तान्येव स्थानान्यत्र बहुशब्देन विवक्षितानि । **स्थानाशून्यत्वार्थमेवेति ।** अयं भावः । उदाहरणं किल तदेव यत्र न्यायफलं दर्शयितुं शक्यते । हे चैत्र ३ एहीत्यत्र तु यत्स्वरस्य प्लुतत्वं जातं तद् "दूरादामन्त्र्यस्य-" ॥७।४।९९॥ इति सूत्रेणैव सिद्धमिति नात्र काऽप्येतन्न्यायापेक्षा । व्यञ्जनस्य च यदि प्लुतत्वप्रसङ्गः कथमपि स्यात्तदा तन्निवारणेन न्यायफलं प्रकटयितुं शक्यते स तु नास्ति। प्लुतविधौ स्वरस्यैव स्थानित्वोक्तेः । ततश्च हे चैत्र ३ एहीति यदुदाहरणं दर्शितं तत्स्थानपूर्त्तिमात्रार्थमेव नतु तात्त्विकं किञ्चित्। **बोधकं भावीति ।** उपलक्षणमिदम्। तेन यथा सूरिमते ह्रस्वदीर्घांशयोरुदाहरणं सान्वयव्यतिरेकं दर्शितं, तथा तन्मतरीत्या प्लुतांशस्योदाहरणमपि किमपि सान्वयव्यतिरेकं भावीत्यपि ज्ञेयम् ॥ ४ ॥

**आद्यम्— ॥ तत्र तदेवैकमित्यादि ।** प्राक्तन्यां न्यायवृत्तावाद्यन्तवदेकस्मिन्निति न्यायस्य व्याख्यैवमस्ति । एकस्मिन्नपि सत्याद्यन्तयोरिव सतोः कार्यं पर्यालोच्यते इति । अस्यां व्याख्यायां चायं भावो लक्ष्यते। यत्रैकमेव शब्दरूपं स्यात्कार्यं तु तदन्तस्य तदादिकस्य चोक्तं तत्र तस्य आदिरन्तश्चासन्तावपि सद्वद्विवक्ष्येते इति । "अनातो नश्चान्त-"॥४।१।६९॥ इत्यस्य न्यासेऽप्येतद्व्याख्यानुसारेणोदाहृतं दृश्यते । तथाहि । ऋधातोरसन्नप्यन्तो यदा सन् विवक्ष्यते, तदाऽयमृदादिरित्युच्यते। यदा त्वस्यैवादिरसन्नपि सन्विवक्ष्यते, तदाऽयमेव ऋदन्त इत्यप्युच्यते इति । एवं चाद्यन्तवदिति पदं मत्वन्तं स्यात्; मन्तव्यमिति क्रियाऽध्याहारश्च । एकस्मिन्नेव शब्दरूपे सति, तच्छब्दरूपमाद्यन्तसहितं मन्तव्य-

मिति । असद्व्याख्यया चाद्यन्तवदिति पदं "स्यादेरिवे"॥७।१।५२॥ इति वत्प्रत्ययान्तं स्यात्; कार्यं कार्यमिति वाक्याध्याहारश्च । तदनयोर्मध्ये या व्याख्या सुसङ्गता प्रतिभाति सा तज्ज्ञैर्मान्या ॥ **ईये इति ।** यद्यपीदं "गुरुनाम्यादेः-"॥३।४।४८॥ इत्यस्य न्यासे परमतव्यपदेशेनोचे, तथाप्याचार्यस्यापि संमतमिति बुद्ध्या अस्यां न्यायवृत्तौ सूरिमतवदेवात्रोक्तम् । अन्यत्रापि हि क्वचित् क्वचिदेवं कृतं दृश्यते । यथा कुप्यतेः पुष्यादित्वं केचिन् नेच्छन्तीत्यतः पुष्याद्यङो अभावे, अकोपीदिति स्यादित्युक्तं, धातुपारायणे परमतव्यपदेशेनोक्तमपि "शास्त्यसूवक्ति-"॥३।४।६०॥ इत्यस्य न्यासे स्वमतव्यपदेशेनैव स्थापितम् । तथाहि । अस्यतेः "शास्त्यसू-"॥३।४।६०॥ इत्यत्र, पुष्यादौ चेति द्विष्पठनेन इदं ज्ञाप्यते । अस्यतेः पुष्याद्यङ् न व्यभिचरति; अन्येभ्यस्तु क्वचिद् व्यभिचरत्यपि । तेन बालरामायणोक्तं 'माकोपीः' इति सिद्धमिति । तदेवं अन्यत्रापि परमतस्यापि सूरिमतवदुक्तेर्दर्शनात् इहापि तथोक्तिर्न दुष्यति । ननु भवत्वेवम्; परं ईये इत्यादीनामाचार्यसाम्मत्यं कथं ज्ञातम् । उच्यते । असाम्मत्ये सति, ईये इत्यादयोऽपप्रयोगा एवेत्यवक्ष्यदाचार्यः । यथा माघे; 'व्यथां द्वयेषामपि मेदिनीभृताम्' इत्यत्र सामादेशोऽपपाठ एव; द्वयानामिति तु सत्पाठ इत्युक्तम् । "अवर्णस्यामः साम् ॥१।४।१५॥ इत्यस्य वृत्तौ । **स्याद्यधिकार इत्यादि ।** "अत आः स्यादौ-"॥१।४।१॥ इत्यतः स्याद्यधिकारः किल तुर्यपादे सर्वत्रानुवर्त्तते । तेन च सर्वत्र नामाधिकारोऽप्याक्षिप्यते । नाम्नोऽग्रे एव स्याद्युत्पत्तेः । ततश्च "सर्वादेः स्मैस्मातौ" ॥१।४।७॥ इति सूत्रे सर्वादेरिति नाम्न इति च द्वे पदे षष्ठ्यन्ते स्त इत्यागतम् । ते च व्यधिकरणे तावन्न घटेते । नामसंबन्धिनः सर्वादेः, सर्वादिसम्बन्धिनो वा नाम्नः कस्याप्यप्रतीतत्वात् । अतः सामानाधिकरण्यमेवावश्यमभिप्रेतव्यम् । तथा सति च विशेषणविशेष्यभावेन भाव्यमेव । तस्मिंश्च सति यद्विशेषणभूतं पदं तद्, "विशेषणमन्तः"॥७।४।११३॥ इति परिभाषया विशेष्यभूतपदस्यावश्यमन्ततया व्याख्येयम् । तत्रापि च नामान्तस्य सर्वादेरिति पक्षस्तावद्व्याख्यातुं न शक्यते । सर्वशास्त्रायेत्यादावेव स्मायादिप्रसङ्गात्, परमसर्वस्मै सर्वस्मै इत्यादौ स्मायाद्यभवनप्रसङ्गाच्च । ततः सर्वाद्यन्तस्य नाम्न इत्येव पक्षः श्रेयान् । यत एवं सति परमसर्वस्मै इत्यादि न्यायनिरपेक्षं सिद्ध्यति; सर्वस्मै इत्यादि चाद्यन्तवदेकस्मिन्निति न्यायादित्येतदेवाह । **"विशेषणमन्तः"** ॥७।४।११३॥ **इति** । इत्यादि ॥५॥

**प्रक्र— ॥ धातुत्वाभावादिति ।** त्यादयो हि कृत्सूत्रैर्धातुभ्य एव विहिताः । "धातोः कण्ड्वादेः-"॥३।४।८॥ इत्यतो धातोरित्यधिकारस्य कृत्सूत्रेष्वप्यनुवृत्तेः। **शब्दार्थानुकरणमिति ।** यत्र स्याद्वादबलेनानुकार्यानुकरणयोर्भेदविवक्षा, तत्र शब्दः प्रस्तावादनुकार्यरूप एवार्थो यस्य, तच्च तदनुकरणं च, शब्दार्थानुकरणम् । यत्र तु तयोरभेदविवक्षा, तत्रानुकार्यरूपस्यार्थस्यानुकरणशब्दान्तरेव विलीनत्वाच्छब्द एवानुकरणं शब्दानुकरणम् ॥६॥

**एक-॥ वैसदृश्येनेति ।** ननु विकृतशब्दस्य विकारापन्नमिति व्याख्या प्राक्तन्यां न्यायवृत्तावस्ति, सैव युष्माकमप्यत्र कर्तुं युक्ता तत्कथं वैसदृश्येनेत्यूचे । उच्यते । विकारापन्नमिति व्याख्याने भूतपूर्वकन्यायेन प्रकृतन्यायविषयस्य सर्वथाऽपहरणात् प्रकृतन्यायो निर्विषय एव स्यात् । तथाहि । यत्किल प्रागन्यथाभूत्वा पश्चादन्यथासंपन्नं कोऽर्थः पूर्वं स्वरूपेण भूत्वा पश्चाद्व्याकरणसूत्रेण एतन्न्यायोदाहरणार्हप्रकारेण सम्पन्नं तद्विकारापन्नमित्युच्यते । यदि च विकृतशब्देन तद्व्याख्यायते तदा अतिजरसा कुलेनेत्यादौ भूतपूर्वकन्यायेनापि सरतीत्यतः प्रकृतन्यायो निर्विषय एव स्यात् । वैसदृश्ये व्याख्याने त्वतिसारकीत्युदाहरणं प्रकृतन्यायस्यासाधारणमेव स्यात् । भूतपूर्वकन्यायेनानाम्नातत्वात् ।

अनाघ्रातत्वमेव कथमिति चेत्। उच्यते। "साल्वाद्गोयवाग्वपत्तौ"॥६।३।५४॥ इत्यत्रैकदेशविकृतस्यानन्यत्वात् सल्वशब्दोऽपि ग्राह्य इत्युक्तम्। नच तत्र साल्वो भूत्वा सल्वः सम्पन्नः। "सलेर्णिद् वा" (उणा-५१०) इति वा णिति वैतन्निष्पत्तेः। तथा च। "वातातीसारपिशाचात्कश्चान्तः"॥७।२।६१॥ इत्यत्रैकदेशविकृतस्यानन्यत्वादतिसारशब्दोऽपि ग्राह्य इत्युक्तम्। नखल्वत्र प्रथममतीसार इति रूपेण भूत्वा पश्चाद्व्याकरणसूत्रेण एतन्न्यायोदाहरणार्हमतिसार इति रूपं जातम्, येन भूतपूर्वकन्यायस्य प्रवेशः स्यात्, किंतु "घञ्युपसर्गस्य बहुलम्"॥३।२।८६॥ इति विकल्पेन दीर्घभवनाद्वैसदृश्यमात्रमनयोरस्तीति। **टायामिति**। केचित् क्त्वाटाशब्दयोः स्त्रीत्वमभ्युपगच्छन्ति तन्मतेऽत्र, याम्। अन्यथा तु "लुगातोऽनापः" ॥२।१।१०७॥ इत्याकारलोपे टि इति स्यात्। **अतिजरसा कुलेनेति**। इदं भूतपूर्वकन्यायेनापि सिद्ध्येत्, परमाचार्यैरत्रैतन्न्यायप्रवृत्तिः दर्शितेत्यतोऽस्माभिरपि तथैवोचे। **त्याद्युत्पत्त्यादिपरकार्ये इति**। त्यादीनां कृत्सूत्रैर्विधानात्परकार्यत्वम्। **लिपिलिव्योरिति**। लिम्पतेरौणादिके "नाम्युपान्त्य-" (उणा-६०९) इति किदिप्रत्यये, लिपिः। तत्रैव जपादित्वात् पस्य वत्वे, लिविः॥७॥

**भूत-॥** पूर्वं भूतो भूतपूर्वः "नाम नाम्ना-"॥३।१।१८॥ इति समासः; स एव स्वार्थे के भूतपूर्वकः; तद्वदुपचारोऽस्येति बहुव्रीहिः। **वधिरिति**। नन्वत्र "इकिश्तिव् स्वरूपार्थे"॥५।३।१३८॥ इति इः कथम्। यतः स धातोरुक्तः; अयं तु न धातुर्धात्वादेशो वा, किंतु धात्वादेशानुकरणम्। उच्यते। अनुकरणत्वादेव तावद्धात्वादेशत्वमस्य सिद्धम्। प्रकृतिवदनुकरणमिति न्यायात्। धात्वादेशत्वसिद्धौ च धातुत्वमपि सिद्धम्। तदादेशस्तद्वदिति वचनात्। ततश्च धातुत्वात् इः॥८॥

**भावि-॥** भविष्यतीति "भुवो वा" (उणा-९२२) इत्यौणादिके णिनि, तस्य च "वर्त्स्यति गम्यादिः"॥५।३।१॥ इत्यनेन भविष्यदर्थतानियमे भावीति सिद्धम्। **पदे इत्युक्तमिति**। प्राक्तन्यां न्यायवृत्तौ तु 'एकपदे इति ज्ञापकम्' इति यदुक्तमस्ति तत् "रषृवर्णात्-"॥२।३।६३॥ इति सूत्रे एकपद इति समासं दृष्ट्वेति सम्भाव्यते। यतो ज्ञापकत्वं वृत्त्युक्तयुक्त्या पदे इत्येतावत एव दृश्यते नत्वेकशब्दस्य किमपीति॥९॥

**यथासं-॥** "**भुजिपत्यादिभ्यः-**"॥५।३।१२८॥ इति। अस्यार्थः। भुज्यादिभ्यः कर्मण्यनट् स्यात्; यथा भुज्यते इति भोजनम्, एवमशनम्। पत्यादिभ्यस्त्वपादानेऽनट् स्यात्; यथा प्रपतन्त्यस्मादिति प्रपतनः; एवं निर्झरण इत्यादि। "**पूर्वावराधरेभ्यः-**"॥७।२।११५॥ इति। अस्यार्थः। पूर्वावराधरशब्देभ्यः प्रत्येकं दिग्देशकालवृत्तिभ्योऽस् अस्तात् इत्येतौ प्रत्ययौ स्याताम्; पुर् अव् अध् इत्यादेशाश्च क्रमादेषां स्युः। यथा पूर्वा दिग् देशः कालो वा वर्यः पुरोवर्यम्, पुरस्ताद्वर्यम्। अवरा दिग् देशः कालो वा वर्यः अवोवर्यम्, अवस्ताद्वर्यम्। अधरा दिग् देशः कालो वा वर्यः अधोवर्यम्; अधस्ताद्वर्यमित्यादि॥१०॥

**अपे-॥** अत्राद्यं ज्ञापकमधिकारस्य प्रवृत्तेर्द्वितीयं तु निवृत्तेः। **असन्नित्यधिकार इति**। नन्वसन्नित्यस्याधिकारत्वं कथम्। द्वित्रिसूत्रेष्वनुवृत्त्यभावात्। उच्यते। यद्यप्यस्याधिकारत्वं प्राग्नाभूत् परमग्रेतनसूत्रद्वये यद्येतदागतं तदाऽधिकारत्वं जातमेव। **अम्मयमिति**। आपः प्रकृता अस्मिन्निति वाक्ये "तयोः समूहवच्च बहुषु"॥७।३।३॥ इत्यनेन मयट्। ननु विशेषातिदिष्ट इति न्या-

यस्य मण्डूकप्लुतिन्यायस्य च, कः प्रतिविशेषः। उच्यते। आद्ये अधिकारस्यान्तरालसूत्रेषु सतोऽपि न्यग्भूततया अदृश्यमानता विवक्षिता; द्वितीये तु सर्वथा असत्तया। तथैव च वृत्तौ व्याख्यातम्॥१२॥

**अर्थवशा—**॥ अत्रैकेनापि ज्ञापकेन सरति। परमत्यासन्नसूत्रस्थत्वाद् द्वितीयमपि प्रसङ्गाद् दर्शितम्॥१३॥

**अर्थवदग्र—**॥ "सङ्ख्याडतेः-"॥६।४।१३०॥ इति। अस्य सूत्रस्यार्थः। शदन्तत्यन्तष्ट्यन्तवर्जायाः सङ्ख्याया डतिप्रत्ययान्ताच्चकारात् त्रिंशद्विंशतिभ्यां च क्रीताद्यर्थे कः प्रत्ययः स्यात्। यथा द्वाभ्यां कतिभिस्त्रिंशता विंशत्या वा क्रीतं द्विकं, कतिकं, त्रिंशत्कं, विंशतिकम्। अशत्तिष्टेरिति प्रतिषेधे प्राप्ते, डतित्रिंशद्विंशतीनामुपादानम्। अशत्तिष्टेरिति किम्। चात्वारिंशत्कं, साप्ततिकम्, षाष्टिकम्। एष्विकणेव। आद्ये च "ऋवर्णोवर्णदोसिसुसशश्वदकस्मात्त इकस्येतो लुक्"॥७।३।३७॥ इत्यनेन इकण इलोपः॥१४॥

**नाम—**॥ "त्यदाम्-"॥१।१।३३॥ इति। ननु कथमत्र बहुवचनम्; त्यद एकत्वात्। उच्यते। येषां शब्दानामादौ त्यदस्ति, ते सर्वेऽपि "आद्वेरः"॥२।१।४१॥ इत्यत्वाद्येककार्याधिकारित्वेनोपचारात् त्यद उच्यन्ते। ततश्च त्यच्च त्यदश्च त्यदः। "त्यदादिः"॥३।१।१२०॥ इत्येकशेषो बहुवचनं च। **सा स्या इति**। पुल्लिङ्गवैशिष्ट्ये तु स इत्याद्युदाहरणं स्फुटमेव। अत्र "आद्वेरः"॥२।१।४१॥ इति अन् इति। क्लीबलिङ्गवैशिष्ट्ये तु तन् इत्यादौ सर्वेभ्यो लोप इति न्यायेन प्रथममेव सेर्लुग्भवनात् "आद्वेरः"॥२।१।४१॥ इत्यादीनां प्रवृत्तेरसम्भवात्ते कुले इत्याद्युदाहरणं योज्यम्। **तथाच आप इति**। कचिद् ङीप्रत्ययस्यापि नामग्रहणेन ग्रहणं सम्भवति। यथा पयस्कुम्भ इत्यत्रवत् पयस्कुम्भी इत्यत्रापि "अतः कृकमि-"॥२।३।५॥ इत्यनेन रस्य स इति। **अयस्कुशेति**। अत्रायोविकारस्याविवक्षितत्वात् "भाजगोणनागस्थलकुण्डकालकुशकामुककटकवरात्पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे"॥२।४।३०॥ इति ङीर्न। ततश्च अयः प्रधानं यस्याः सा अयःप्रधाना सा चासौ कुशा चेति कर्मधारयं मयूरव्यंसकादित्वात्प्रधानशब्दलोपः। **महाराज्ञीति**। कर्मधारयस्य तत्पुरुषसंज्ञाऽप्यस्तीत्यनोऽत्राट् प्राप्नोति। **विषूची शब्दादिति**। विपूर्वस्य पूत् प्रेरणे इत्यस्य विषुवतीति क्विपि, विषूः। विष्वमञ्चतीति क्विपि, विष्वङ्। स्त्रीत्वे, विषूची। "अच्च् प्राग्दीर्घश्च"॥२।१।१०४॥ इत्यनेन अचश्चः। ततश्च विष्वञ्चमञ्चतीति क्विपि डद्रौ विष्वद्र्यङ् इति स्यात्। विषूचीमञ्चति विषूचद्र्यङ् इति तु न स्यात्। डद्रेरनिष्टत्वादिति भावः॥ १६॥

**तिवा—**॥ तिवत्र धातुस्वरूपोक्तौ श्तिवेव नतु वर्त्तमानायाः। तदग्रे स्याद्यसम्भवात्। **लुप्तेनेति**। ननु कथं तल्लोपः। उच्यते। सौत्रत्वात्। **निस्तातपीतीति**। अत्र भृशं निष्टपतीत्येव वाक्यं कार्यं नत्वभीक्ष्णमिति। आभीक्ष्ण्ये षत्वप्राप्तेरेवाभावात्। यतो "निसस्तपेऽनासेवायाम्"॥२।३।३५॥ इत्यनेन अनासेवायां षत्वमुक्तम्। आसेवाशब्देन च आभीक्ष्ण्यमेवोच्यते इति। **अद्युतदिति**। अत्र "द्युद्भ्योऽद्यतन्याम्"॥३।३।४४॥ इत्यात्मनेपदस्य विकल्पितत्वात्परस्मैपदम्। **अनुज्ञाविधिरिति**। ननु "तेर्ग्रहादिभ्यः"॥४।४।३३॥ इत्येतत्तावन्नियमसूत्रम्। तथाहि। ग्रहादिभ्य एव परस्य तेरादिरिट् स्यान्नत्वन्यधातुभ्य इति; तत्कथं भवद्भिरनुज्ञासूत्रमिदमुक्तम्। उच्यते। यत एवेदं नियमसूत्रं तत एवानुज्ञासूत्रमपि; नियमस्यानुज्ञापूर्वकत्वनिश्चयात्। तथाहि। ग्रहादिभ्यस्तेरादौ "स्ताद्यशितः-"॥४।४।

३२॥ इत्यनेन य इट् प्राप्तोऽस्ति, स भवतु इत्येषाऽनुज्ञा; परमन्यधातुभ्यस्तेरादिरिट् "स्ताद्यशितः-" ॥४।४।३२॥ इति प्राप्तोऽपि न स्यात् इति निषेधपर्यवसायी नियमश्च "तेर्ग्रहादिभ्यः" ॥४।४।३३॥ इति सूत्रेण साध्येते । इत्येवमन्यत्राऽपि सर्वत्र नियमोऽनुज्ञापूर्वक एव स्यादिति प्रतिपत्तव्यम् । इह च ग्रहादिभ्यस्तेरिटो याऽनुज्ञा सा बहुवचननिर्दिष्टेति कृत्वा तत्फलं दर्शितम् । **बम्भाण्टीति।** अत्र "अहन्पञ्चमस्य-" ॥४।१।१०७॥ इति दीर्घत्वम्, "तवर्गस्य-" ॥१।३।६०॥ इति तस्य टत्वं च । **प्रायोऽन्यः कोऽपि नेति ।** प्रायः शब्दप्रयोगेऽयं भावः– क्वचिदन्योऽपि विशेषोऽस्ति, तथाहि— "वेत्तिच्छिदभिदः कित्" ॥५।२।७५॥ अत्र वेत्तीति निर्देशाद् विदक् ग्राह्यः, न तु विदिंच विदूलूंतीर्विदिंप् वा । तथा "संप्राद् वसात्" ॥५।२।६१॥ अत्र शब्निर्देशात् 'वसं निवासे' इति धातुर्ग्राह्यः, न तु 'वसिक् आच्छादने' इत्येष इत्यादि, परं सोऽल्पत्वादिना न विवक्ष्यते। **अनुबन्धनिर्दिष्टोऽपीति।** ननु नृतादीनामैदित्करणं किमर्थम् ? । क्तयोरिड्निषेधार्थमिति चेत् । तन्न, "कृतचृतनृतच्छृदतृदोऽसिचः सादेर्वा" ॥४।४।५०॥ इत्यनेन नृतादीनां वेट्त्वाद् "वेटोऽपतः" ॥४।४।६२॥ इत्यनेनैव तत्सिद्धेः । उच्यते । "वेटोऽपतः" ॥४।४।६२॥ इत्यनेनैकस्वराणामेव नृतादीनामिड्निषेधः सिध्यति, यथा नृत्त इत्यादि, परं यङ्लुप्यनेकस्वरत्वे स न सिध्येत् "वेटोऽपतः" ॥४।४।६२॥ इत्यत्रैकस्वराधिकारसद्भावात् । न च वाच्यं 'प्रकृतिग्रहणे यङ्लुबन्तस्याऽपि' इति न्यायेन केवलानामिव यङ्लुबन्तानामप्येकस्वरत्वमेव गणयित्वा "वेटोऽपतः" ॥।४।४।६२॥ इत्यनेनैव इड्निषेधः करिष्यत इति । 'तिवा शवा' इति न्यायेन एकस्वरनिमित्तककार्यस्य यङ्लुपि निषेधात् । ततश्च यङ्लुपि नरीनृत्त इत्यादौ "डीयश्व्यैदितः-" ॥४।४।६१॥ इत्यनेनेड्निषेधसिद्ध्यै नृतादीनामैदित्त्वं कृतम् । ननु यद्येवं तर्हि नरीनृत्त इत्यादाविड्निषेधे ऐदित्करणस्यैव हेतुता जाता, न तु न्यायतृतीयांशाऽनित्यतायाः; यतस्तां विनाऽपि ऐदित्करणसामर्थ्यादेव नरीनृत्त इत्यादाविड्निषेधः सिध्यत्येव, अन्यथैदित्करणस्य वैयर्थ्यापातात् । सत्यम्, परं यद्यनुबन्धनिर्दिष्टं यङ्लुपि न स्यादित्येकान्तः सूरेर्मनस्यभविष्यत्, तदा नरीनृत्त इत्यादाविड्निषेधसिद्ध्यै ऐदित्करणं विनाऽप्यन्यं कञ्चिदुपायममण्डयिष्यत्सूरिः । यत्तु अनुबन्धनिर्दिष्टं यङ्लुपि न स्यात् इति जानताऽप्याचार्येणानुबन्धनिर्देशो मण्डितस्तदेतदंशानित्यत्वादेव । "वेटोऽपतः" ॥४।४।६२॥ इत्यग्रेतनसूत्रे तदनुवृत्त्यन्यथानुपपत्तेः । "डीयश्व्यैदितः-" ॥ ४।४।६१ ॥ इति सूत्रत इड्निषेधश्च नरीनृत्त इत्यादौ यङ्लुप्यपि जातः इत्येवमेकस्वरनिमित्तं न यङ्लुपीत्यस्याऽप्यंशस्याऽनित्यताऽत्र लक्ष्यमाणाऽस्ति सा भवद्भिः किं नोदाहृता ? । उच्यते । 'प्रकृतिग्रहणे' इति न्यायेन यङ्लुबन्तस्यानेकस्वरत्वेऽपि यदेकस्वरकार्यं प्रसञ्जितम्, तन्निषेधस्तावदनेन न्यायेन क्रियते, पूर्वापवादत्वादस्य । स च निषेधो यदि शिथिलीभवन् स्यात् । कोऽर्थः ? यदि यङ्लुबन्तस्यैकस्वरकार्यं किमपि जायमानं स्यात् तदा प्रस्तुतांशस्याऽनित्यता वक्तुं युज्यते, अत्र तु तथा नास्ति, यतो "डीयश्व्यै-" ॥४।४।६१॥ इत्यत्रैकस्वराधिकारे सत्यपि नरीनृत्त इत्यादाविड्निषेधो यः सूरिभिः साधितः; स नरीनृत्तादीनामनेकस्वरत्वमेवाऽङ्गीकृत्य । तथाचोक्तम्– "डीयश्वि-" ॥४।४।६१॥ इत्यस्य वृत्तौ "नृतादीनामैदित्त्वं यङ्लुबर्थं कृतं, तेन नरीनृत्त इत्यादावनेकस्वरत्वेऽपीड्निषेधः सिद्धः" इति । ततश्चेड्निषेधस्यैकस्वरकार्यत्वाभावाद् न प्रस्तुतांशानित्यतोदाहरणतोक्ता ॥ १८ ॥

**सन्नि– ॥ चिह्नमिति ।** यद्येषा निमित्तसामग्री मिलिता तदाऽमुकेन विधिनाऽत्र भाव्य-

मेवेत्येवं निजविधेर्ज्ञापकमिति भावः। एस्करणेऽपीति। ननु एसि कृते देवैरित्यादि कथं सिध्यति? "लुगस्यादेत्यपदे"॥२।१।११३॥ इत्यल्लोपसंभवेन देवैरित्यादिभवनात्। मैवम्। यत एस्करणसामर्थ्यादेव न स्यादल्लोपः। अयं भावः-यद्याचार्यस्य देवैरित्यभीष्टं स्यात् तदा इसादेशमेव कुर्यात्, यत्तु एस् कृतस्तज्ज्ञापयति न स्यादल्लोप इति; तदेवमेस्करणे ईदृगुत्तरसद्भावाद् नैतच्चर्चोत्थानसंभवः। अतिजरसैरिति। यद्यप्यत्राऽनित्यताया उदाहरणं ज्ञापकं च विभज्य न दर्शिते, तथाप्यतिजरसैरित्येतदनित्यताया उदाहरणम्, ऐस्करणं तु तज्ज्ञापकमिति विभागः स्वयमभ्यूह्यः। एवमन्यत्रापि यथायोग्यं वाच्यम्॥ १९॥

असि-- ॥ दध्यत्रेत्यादाविति। आदिशब्दाद् मध्वत्रेत्यादौ वत्वाद्याश्रित्य वाच्यम्॥२०॥

न स्व-- ॥ इयेषेति। नन्वत्र एत्वस्य 'असिद्धं बहिरङ्गम्' इतिन्यायेन यदसिद्धत्वं प्रसक्तं तद् 'न स्वरानन्तर्ये' इत्यपवादन्यायेन निवार्यताम्, परं तथापि पूर्वस्येकारस्य "पूर्वस्याऽस्वे स्वरे-"॥४।१।३७॥ इतीय् न प्राप्नोति "स्वरस्य परे प्राग्विधौ" ॥७।४।११०॥ इत्यनेनैत्वरूपस्य गुणस्यावश्यं स्थानिवद्भावभवनात्। मैवम्। यतः स्थानिवद्भावं तावत् "स्वरस्य परे प्राग्विधौ" ॥७।४।११०॥ इत्यनेन प्रसञ्जयसि, तत्र च पर इति सप्तम्या निर्देशः 'सप्तम्या निर्दिष्टे पूर्वस्य' इति च परिभाषा; ततश्च सप्तम्या निर्दिष्टे यत्कार्यमुच्यते तत्पूर्वस्यानन्तरस्यैव स्यात्, न तु व्यवहितस्य। ततो यद्यत्रैत्वमनन्तरपरनिमित्तकमभविष्यत्, तदा स्थानिवद्भावोऽभविष्यत्, यथा कथयतीत्यत्रानन्तरपरे णौ निमित्ते कृतस्य "अतः"॥४।३।८२॥ इत्यल्लोपस्य स्थानिवद्भावात् "ञ्णिति"॥४।३।५०॥ इति प्राप्ताया उपान्त्यवृद्धेरभावः सिद्धः, न तु तथाऽत्रास्ति। यत एत्वरूपगुणस्य तन्निमित्तणवश्च षकारेण व्यवधानमित्यतो व्यवहितस्य स्थानिवद्भावरूपं कार्यं न स्यात्। भवतु वा स्थानिवद्भावः, तथापि स्वेऽपि स्वरेऽत्रेयादेशो भावी, अस्व इति नञा निर्दिष्टस्यानित्यत्वात्। यद्वा, 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति न्यायात् लक्षणेन तावत् स्वविषयं प्राप्य सर्वत्र प्रवर्तितव्यमेव, तेन कृतस्थानिवद्भावोऽपि यत्र क्वापि अस्वः स्वरः स्यात्, तत्र "पूर्वस्याऽस्वे-" ॥४।१।३७॥ इत्यनेन इयुवौ स्यातामेव। न च स्थानिवद्भावेनाऽऽदेशस्य स्थानिरूपभवनात् अस्वस्वराऽस्थित्या कथमियुवाविति शङ्क्यम्?। यतः स्थानिवद्भावेन स्थानिवत् कार्यमेव स्यात्, न तु स्थानिवद् रूपम्, वत्करणस्यैतावन्मात्रार्थत्वात्, अथवा 'स्थानिवद्भावपुंवद्भाव-' इति न्यायेन न स्यादत्र स्थानिवद्भावः। 'नानिष्टार्था शास्त्रप्रवृत्तिः' इति न्यायाद् वा। इदं चेदृग् जर्जरमुदाहरणं "पूर्वस्याऽस्वे स्वरे-"॥४।१।३७॥ इत्यस्य न्यासे दर्शितमस्ति, इत्यतोऽस्माभिरपि दर्शितम्। दृढमुदाहरणं तु बभूवुषेत्येतद् ज्ञेयम्॥ २१॥

गौण-- ॥ कठकालापमित्यादि। कठेन प्रोक्तां वेदशाखां विदन्त्यधीयते वा ये द्विजास्ते कठाः, कलापिना कुथुमिना च प्रोक्तां वेदशाखां विदन्त्यधीयते वा ये ते कालापाः कौथुमाश्च॥ करणादित्वेनेति। अत्र कर्मादित्वेनेति वक्तुं युक्तेऽपि स्थाधातोरकर्मकत्वात् करणादित्वेनेत्येवोचे। ननु तर्हि—

पाण्डवमात्रा कुन्त्या संजाते श्रीयुधिष्ठिरे पुत्रे।
श्रीचन्द्रप्रभदेवः प्रतिष्ठितो जयति नासिक्ये॥ १॥

इत्यत्र प्रतितिष्ठतेः सकर्मकस्य कथं प्रयोगः ?। मैवम्। यतो नायं प्रतितिष्ठतेः सकर्मकस्य प्रयोगः, किन्तु प्रतिष्ठाशब्दात् करोत्यर्थे णिजि क्ते प्रतिष्ठित इति सिद्धम्।

यद्वा—

वान्ति पर्णशुषो वाता वान्ति पर्णमुचोऽपरे।
वान्ति पर्णरुहोऽप्यन्ये ततो देवः प्रवर्षति॥ १॥

इत्यत्र यथा शुषिमुचिरुहिधातवोऽन्तर्भूतणिगर्थाः सन्ति; कथं पर्णानि शोषयन्ति मोचयन्ति रोपयन्ति इति पर्णशुषः पर्णमुचः पर्णरुह इति ? तथाऽत्रापि प्रतिष्ठित इति। कोऽर्थः? प्रतितिष्ठन् प्रयुक्त इत्येवमन्तर्भूतणिगर्थत्वविवक्षायां प्रतितिष्ठतेः सकर्मकत्वमपि संभवेत्। तथाचात्र कर्मादित्वेनेति पठनेऽप्यदोषः; प्रयोगोऽपि प्रत्यष्ठायिषातां कठकालापौ गुरुणेति पठनीयः, गुरुणा कठकालापौ प्रतिष्ठापिताविति च तस्यार्थः। **न तु कर्तुरिति**। कर्तुः प्रधानत्वे हि प्रत्यष्ठायीत्यत्र द्विवचनमभविष्यत् कर्तुर्द्विवचनान्तत्वात्, यत्तु एकवचनमेव प्रयुक्तं तद्भावस्यैव प्राधान्यात्, तस्य चासत्त्वरूपत्वात् संख्याया अभावेन औत्सर्गिकैकवचनस्यैव प्रयोगार्हत्वात्। **व्यभिचारित्वेनेत्यादि**। उत्पलं हि नीलमनीलं च स्यात् इत्यतो नीलशब्देनाऽनीलव्यवच्छेदः; नीलमप्युत्पलमनुत्पलं च स्यात् इत्यत उत्पलशब्देन अनुत्पलस्य व्यवच्छेदः; तदेवं उभयोरपि मिथो नियामकत्वात् विशेषणत्वं, नियम्यत्वात् विशेष्यत्वं च स्फुटमेव॥ २२॥

**कृत्रि--॥ परिभाषानिष्पन्नमिति**। स्वेष्टानुसारेण यया व्यवस्था क्रियते सा परिभाषा। **अविकार इत्यादि**। एतच्छ्लोकव्याख्या "असहनञ्-"॥२।४।३८॥ इति सूत्रस्य बृहद्वृत्तितो ज्ञेया॥ २३॥

**क्वचित्--॥ बहुनाडिरिति**। नाडीशब्दस्य "गोश्चान्त-"॥२।४।९६॥ इति ह्रस्वः। **बहुतन्त्रीरिति**। औणादिके "तॄस्तृ-"॥ (उणा–७११)॥ इति ईप्रत्यये तन्त्रीर्धमनिः, तेनात्र ङ्यन्तत्वाभावाद् "गोश्चान्त-"॥२।४।९६॥ इति ह्रस्वो न॥२४॥

**सिद्धे--॥ पूजार्ह इत्यादाविति**। अत्रादिशब्दात् "अर्होऽच्"॥५।१।९१॥ इत्यस्याग्रे यानि "धनुर्दण्डत्सरुलाङ्गल-"॥५।१।९२॥ इत्यादिपञ्चसूत्राणि सन्ति तेषामुदाहरणानि धनुर्ग्रहः, दण्डग्रह इत्यादीनि गृह्यन्ते, एषां सर्वेषां "लिहादिभ्यः"॥ ५।१।५०॥ इत्यच्प्रत्ययेनापि सिद्धिसंभवात्॥ २५॥

**धातोः--॥ धातोरेवेति**। धातोरेवाग्रे यो विहितः स धातोरेव संबन्धी। **स्थानिवद्भावकरणे इति**। ननु कश्चिदादेशः कृतः स्यात्, तथा तस्य स्थानिवद्भावः क्रियते, क्विपोऽदर्शनं तु नाऽऽदेशरूपं लुग्लुब्रूपत्वाभावात्; किन्त्वप्रयोगित्वादेव तज्जातं, तथा चोक्तं "न वृद्धिश्चाविति-"॥४।३।११॥इत्यस्य न्यासे "न हि क्विपो लुग् लुब् वा, किन्त्वप्रयोगीत्" इति। सत्यम्, परं न्यासकारस्यैवाऽयमभिप्रायः, वृत्तिकृता तु 'अदर्शनं लुग्' इति लुगदर्शनमनुसरता क्विपोऽदर्शनं लुग्रूपमेवेष्टं तस्य स्थानिवद्भावोऽपि च। तथा चोक्तं "ईर्व्यञ्जनेऽयपि"॥४।३।९७॥ इत्यस्य वृत्तौ–शं सुखं तत्र तिष्ठतीति क्विपि शंस्थाः पुमान्, अत्र क्विब्लुकि तस्य स्थानिवद्भावेन प्राप्तमपि "ईर्व्यञ्जनेऽयपि"

॥४।३।९७॥ इति ईत्वं न स्यात्, साक्षाद् व्यञ्जनाभावात्, तत्सूत्रे च व्यञ्जनग्रहणस्य साक्षाद् व्यञ्जनप्रतिपत्तये कृतत्वादिति वृत्तिकारगीरेव चात्राऽनुसृतेत्यदोषः । ननु यद्येवं क्विप्लुकः आदेशत्वं भवद्भिः स्थापितं, तदा न केवलं रज्जुसृड्भ्यामित्यादौ, किन्तु दूषयतीत्यत्राप्येष न्यायोऽनपेक्षणीय एव स्यात्, तथाहि--दुषणिगोर्व्यवधानार्थं क्विप्लुकः स्थानिवद्भावः करिष्यते, तथा च क्विपा णेर्व्यवधानादेव दुष ऊत्वं न प्राप्नोतीति क्वैतन्न्यायापेक्षा ?, मैवम् । यतः कस्मिन्नपि कार्ये कर्तव्ये स्थानिवद्भावः स्यात् कार्याणि च गुणवृद्ध्यादीनि एव उच्यन्ते न तु व्यवधायकत्वं किमपि कार्यं नाम, अतो व्यवधायकत्वे कर्तव्ये स्थानिवद्भावो न स्यात् ततश्च दूषयतीत्यत्र ऊत्वाभाव एतन्न्यायाश्रयणं विना न सिद्ध्यत्येव ॥ २६ ॥

**उक्ता--** ॥ **द्वितीयादि न स्यादिति** । उपलक्षणत्वात् प्राजन्त्यनेन इति प्राजनो दण्डः, दीयतेऽस्मै इति दानीयो द्विजः, इत्यादौ करणसंप्रदानादिषु अनडनीयाद्युत्पत्तेः करणसंप्रदानादिशक्तिप्रकाशनार्थं दण्डद्विजादिभ्यस्तृतीयाचतुर्थ्यादयो न स्युरित्याद्यपि वाच्यम् ॥ २८ ॥

**निमि--** ॥ **बिम्बाकारलुकि चेति** । ननु लुञ्चतः "कृत्संपदादिभ्यः-" ॥५।३।११४॥ इति क्विपि लुचिति चान्तोऽयं शब्दः, तत्कथं लुकीत्यूचे । उच्यते, लवनं लुक् इत्यौणादिके "द्रागादयः" ॥ (उणा–८७०) ॥ इति किक्प्रत्यये निपातनात् कान्तोऽप्यस्ति, तत्प्रयोगोऽयं यथा– "ङ्यादेर्गौणस्याक्विपस्तद्धितलुकि-" ॥२।४।९५॥ इति । "न सेटोऽसन्तस्यावमिकमिचमां प्रत्ययलुकाम्-" ॥ (का०–४।१।४) इत्यादौ ॥ १९ ॥

**नान्वा--** ॥ **निवर्तत इति** । यथा बटो ! भिक्षामट, गां चानय, इत्युक्ते स भिक्षां तावदटत्येव यदि च गां पश्यति तदा तामप्यानयति, नोचेन् न, एवमत्रापि प्राधान्योक्तो विधिः स्यादेव, यस्त्वन्वाचयोक्तः स यथोक्तनिमित्तसद्भावे स्यान्नो चेन्न ॥ ३१ ॥

**एका--** ॥ **त्र्यनुबन्धकस्य चेति** । इदं क्यङाद्यपेक्षयोक्तम् ॥ ३३ ॥

**नानु--** ॥ **सर्वादेशत्वार्थमिति** । सर्वस्याः ष्यायाः आदेशः सर्वादेशः तद्भावस्तत्त्वं तदर्थम् । **अभेदनिर्देश इति** । यदि हि ष्याया ईच् स्यात् इति भेदेन निर्दिश्यते तदा "षष्ठ्या अन्त्यस्य" ॥७।४।१०६॥ इति परिभाषया आप एव ईच् प्रसज्यते । ननु ष्यस्तावदण इञो वा प्रत्ययस्य स्थाने स्यात् इत्यतः प्रत्ययादेशत्वात् प्रत्यय एव, "तदादेशास्तद्वत्" इत्युक्तेः; आप् च स्वयं प्रत्यय एव । तथाच ष्येण आपा च निष्पन्नस्य ष्या इत्येतस्याऽपि प्रत्ययत्वमेव, तज्जत्वात्, ब्राह्मणयोर्मातापित्रोः पुत्रस्य ब्राह्मणत्ववत् । यश्च प्रत्ययस्याऽऽदेशः स एकवर्णोऽनेकवर्णो वाऽस्तु, परं "प्रत्ययस्य" ॥७।४।१०८॥ इति परिभाषया सर्वस्यापि प्रत्ययस्य स्यात्, इत्यतः ष्याया ईच् स्यादिति भेदनिर्देशकरणेऽपि ईचादेशः ष्या इत्येतस्य संपूर्णस्यैव भावी; इत्यतोऽभेदनिर्देशकरणं व्यर्थमेवापद्यते । अत्रोच्यते । ष्यस्य प्रत्ययादेशत्वात् प्रत्ययत्वमस्तु, परं ष्या इत्येतस्य यत् प्रत्ययत्वमुक्तं, तदयुक्तम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । न हि पुत्रे ब्राह्मणे मातापित्रोर्ब्राह्मणयो रूपे पृथक् पृथक् दृश्येते इह तु ष्या इत्येतस्मिन्नुभयोरपि प्रत्यययो रूपे पृथक् पृथक् साक्षादेव लक्ष्यमाणे स्तः । अतः ष्या-इत्ययं न प्रत्ययरूपः; किन्तु प्रत्ययसमुदायरूपः । नच प्रत्ययसमुदायस्य प्रत्ययकार्यं कर्तुं युक्तम्, तथा

सति शोभनं पाणिपादं यस्याः सा शोभनपाणिपादा इत्यत्र स्वाङ्गसमुदायस्य स्वाङ्गत्वप्रसङ्गे "असह-नञ्-"॥२।४।३८॥ इति ङीप्रत्ययस्यापि प्रसङ्गात्; एवं च सति "प्रत्ययस्य"॥७।४।१०८॥ इति परिभाषाऽत्र न प्रवर्तते, तथा च ष्याया ईच् स्यादिति भेदनिर्देशे कृते ष्या इत्यस्य संपूर्णस्य ईचादेशः कथमपि न स्यात्, किन्तु "षष्ठ्याऽन्त्यस्य" ॥७।४।१०६॥ इति परिभाषया आप एव ईच् प्रसज्यते । अत्र कश्चिदाह–ननु नास्त्ययमेकान्तो यदुत ष्या इत्ययं सर्वत्र प्रत्ययसमुदायरूप एव स्यादिति, यतो भोजवंशजा क्षत्रिया भोज्या, अत्र आपि परे "भोजसूतयोः क्षत्रियायुवत्योः"॥२।४।८१॥ इत्यनेन भोजशब्दान्त्याकारस्य ष्य आदेशः, न चायं प्रत्ययः, प्रत्ययादेशत्वाभावात्; ततः कथं तत्र प्रत्ययसमुदायमाश्रित्योक्ता युष्मद्वाचोयुक्तिः संगच्छते ?। उच्यते–मा संगच्छतां सा, परं ष्याया ईच् स्यादिति भेदनिर्देशे कृते भोज्या इत्यत्र निर्विवादमेव "षष्ठ्याऽन्त्यस्य" ॥ ७।४।१०६ ॥ इति परिभाषया आप एव ईच्प्रसक्तिरित्येतावत् संगच्छत एव । तदेवमभेदनिर्देशं विना संपूर्णस्य ष्या इत्येतस्य ईचादेशः कथमपि न सिध्यतीति सिद्धम् । **द्वितीयाकृत्य इति** द्वितीयवारं क्षेत्रं कृत्वा गतः, कोऽर्थः ? द्वितीयवारं क्षेत्रं कृष्ट्वा गत इति द्वितीयाकृत्य क्षेत्रं गतः "तीयशम्ब–" ॥ ७।२।१३५ ॥ इत्यनेन कृष्यर्थेन कृगा योगे डाच् ॥ ३४ ॥

**समा– ॥ जंजभीतीत्यादि** । प्राय इडागमस्यैवाऽनित्यता क्वापि क्वापि उद्भाविता दृश्यते, न त्वागमान्तराणाम्; ततो मा भूद् इडागम एवाऽनित्योऽस्तीति भ्रमः, इत्यतो नागममागमयोरप्यनित्यतोदाहृता । **दशैकादशानिति** । दशभिरेकादश गृह्णातीत्यर्थः । **ऋगयनमित्यत्रेति** । ननु ऋग्वदन्येऽपि गन्ताः शब्दाः सन्ति रुगादयः, ततश्च ऋगयनमित्यादावपि णत्वं निषेद्धुमग इत्युक्तिः संभवति, तत ऋगयनमित्यादाविति वक्तुं युक्ते कथमृगयनमित्यत्रेत्यसाधारणमेवोक्तम् ?। उच्यते–संज्ञायामेव णत्वविधानात् ऋगयनमित्यस्यैव च शास्त्रविशेषसंज्ञारूपत्वादत्रैव णत्वप्रसङ्गोऽस्ति, न तु रुगयनमित्यादौ । **गणनिर्दिष्टं यथेति** । ननु गणनिर्दिष्टस्य गणपाठरूपज्ञापकनिर्दिष्टस्य च कः प्रतिविशेषः ?। उच्यते–गणनिर्देशेन तत्सूत्रोक्तमेव कार्यं साध्यते, यथा "कुटादेर्ङिद्वत्"–॥ ४।३।१७ ॥ इति सूत्रे कुटादेरिति गणनिर्देशेन कुटादेः परस्य प्रत्ययादेर्ङिद्वत्त्वम्, गणपाठरूपज्ञापकनिर्देशेन तु अन्यसूत्रोक्तमपि, यथा "शिक्षादेश्चाण्" ॥६।३।१४८॥ इति सूत्रस्थशिक्षादिगणे ऋगयनमिति नान्तपाठेन न केवलं नान्तऋगयनशब्दात् तस्य व्याख्यानं, तत्र भवं वा इत्यर्थयोरणेव "शिक्षादेश्चाण्"॥६।३।१४८॥ इति सूत्रोक्तः साध्यते, किन्तु नान्तपाठरूपज्ञापकबलेन "पूर्वपदस्थात्"–॥ २।३।६४ ॥ इति प्राप्तणत्वनिषेधोऽपीति। **स्सात इति** । यथा शुक्लैकदेशोऽपि स्तम्भः शुक्ल इति उच्यते, तथा सादिरपि स्सात् स् इत्युच्यते, ततश्चात्र स् चासौ साच्च स्सात् इति समासः कार्यः । **षत्वनिषेधज्ञापनार्थं इति** । सातस्तावत् सादित्वाव्यभिचारात् सादिरिति विशेषणप्रयोगो न युक्तः 'संभवे व्यभिचारे च विशेषणमर्थवत्' इति न्यायात्; तथापि यत्कृतः, तज्ज्ञायते–नियमार्थमेव । नियमश्चायम्–सात् सर्वदापि सादिरेव स्यात्, न तु कदापि षादिः; इति रीत्या द्विसकारपाठस्य षत्वनिषेधज्ञापकत्वं भाव्यम् । **केचिदेव समासान्तादय- इति** । अत एव च ये समासान्तादयो भवन्ति च, न भवन्ति च; त एव एतन्न्यायस्य वृत्तावुदाहरणीकृताः ॥ ३५ ॥

**पूर्वे– ॥ अङ् न स्यादिति** । तेन अश्लिषत् कन्यामिति प्रयोगो न स्यात् ॥ ३६ ॥

**मध्ये**— ॥ **अणमित्यादि** । अणटकौ हि कालसामान्ये विहितौ, इत्यतो भूतकालेऽपि प्राप्नुतः, णिन् तु भूतकाल एव विहितोऽस्ति, इत्यतः प्राप्नोत्येव ॥ ३७ ॥

**यं वि**— ॥ **तदित्यादि** । इदं चतुष्कस्योदाहरणम्, संचस्कारेति तु आख्यातस्य । **स्सट् तल्लुक् चेति** । ननु "संपरेः" ॥ ४।४।९१ ॥ इति स्सट् द्वितीयवारमपि प्राप्नोतु, द्विरुक्तिजस्य चस्य भूतपूर्वन्यायेन कृग्रूपत्वविवक्षणात्; परं द्वितीयवाराऽऽनीतस्य स्सटो लुक् कथं प्राप्नोति? यतः "**अघोषे शिटः**" ॥ ४।१।४५ ॥ **इति** । अस्यायमर्थः–द्वित्वे सति यः पूर्वः तत्संबन्धिनः शिटः तत्संबन्धिन्येव अघोषे परे लुक् स्यादिति । इह च द्वितीयवाराऽऽनीतस्य स्सटो द्वित्वसंबन्धिताऽपि नास्तीति । सत्यम् । द्वित्वसंबन्धिता नास्ति, परं द्वित्वे सति यः पूर्वश्चकारः तत्संबन्धिता त्वस्त्येव, स्सटो धात्वादिभूतत्वेन विहितत्वात् । ननु यदि व्यर्थो विधिर्न प्रवर्त्यते, तदा गोपायति, पापच्यत-इत्यादिष्वाययङ्डादीनामदन्तत्वेन तदन्तधातूनामपि अदन्तत्वादेषु शवानयनस्य कार्याभावात् शव् नानेतव्य इत्यागतम् । तथाच 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति न्यायस्य निर्विषयत्वमेवापत्स्यते, इत्याशङ्क्याह– **एवं च यत्र क्वापि क्रियानुपरम इत्यादि** । अनेन च गोपायतीत्यादावनपेक्ष्यमाणोऽपि शव् 'पर्जन्यवत्' इति न्यायान् आनीयत एवेति सूचितम् ॥ ३८ ॥

**यस्य**— ॥ ननु सप्रयोजनो यो विधिः स क्रियत एवेति स्वयं सिद्धमेव, इत्यत्रार्थे किं न्यायेन ?। सत्यम्, परं तद् त्यद् इत्यत्रेव तच्चारु इत्यत्राऽपि सद्यः फलाभावं विभाव्य मा कश्चिन् अनन्तरन्यायं प्रवीवृतत्, इति पूर्वन्यायप्रवृत्तिरोधकत्वादस्य साफल्यम् । **गत्वकत्व इति** । यदा जोऽभूत् तदा गत्वस्य प्राप्तिः, यदा तु चोऽभूत् तदा कत्वस्य ॥ ३९ ॥

**येन**— ॥ **स्वनडुत् कुलमिति** । अत्र शोभना अनड्वाहो यत्रेति बहुवचने वाक्यं कार्यम्, न तु शोभनोऽनड्वान् यत्रेत्येकवचने "पुमनडुन्नौपयोलक्ष्म्या एकत्वे" ॥ ७।३।१७३ ॥ इत्यनेन स्वनडुत्कमिति कसमासान्तप्रसङ्गात् ॥ ४० ॥

**बल**— ॥ **अकार्ष्टेति** । अत्राऽद्यतन्याः परस्मैपदे युष्मदर्थबहुवचनम् । **नित्यत्वादिति** । ननु सिज्लोपे कृते कथं वृद्धिप्राप्तिः ? सिचि परे तस्या उक्तत्वात्, तथाऽप्राप्तौ च कथं वृद्धेर्नित्यता ?। उच्यते–सिचो लुक्यपि स्थानिवद्भावाद् वृद्धिः प्राप्नोतीत्यतो नित्यैव । **पटुलघ्वादिशब्देष्वपि नित्यत्वादेतन्न्यायेन बलवत्त्वादिति** । नन्वन्त्यस्वरादिलोपस्य न केवलं नित्यत्वादेव बलवत्ताऽस्ति, किन्तु परत्वादपि; ततोऽन्त्यस्वरादिलोपस्य परत्वहेतुकबलवत्त्वाशङ्कयाऽपि प्रथमं वृद्धिभवनज्ञापनाय कलिहलिवर्जनं कृतं स्यात्, इति कथं नित्यत्वस्यैव केवलस्य ज्ञापकमिदमुद्भावितं भवद्भिः ?। उच्यते–प्रधानधर्मे संभवति अप्रधानधर्मस्य व्यपदेशो न युज्यते, परत्वनित्यत्वयोश्च नित्यत्वमेव प्रधानो धर्मः "परान् नित्यम्" इति न्यायात्, ततः प्रधानधर्मस्य नित्यत्वस्यैव व्यपदेशः कृतः । **व्यवस्थापनार्थेति** । ननु "धातोः कण्ड्वादेः" ॥ ३।४।८ ॥ इत्यतो धात्वधिकारानुवृत्त्या धातोरेव वृद्धौ प्राप्तायां नाम्नोऽपि वृद्धिज्ञापनार्थं कलिहलिवर्जनं कृतमित्युक्तमस्ति बृहद्वृत्तौ, तत्कथमेवं भवद्भिरुच्यते ?। सत्यम्, परं एतावन्मात्रे एव प्रयोजने नामिनो नाम्नश्चेत्येतावताऽपि सूत्रेण सरति, यत्तु कलिहलिवर्जनमुखेन नाम्नो वृद्धिज्ञापनं कृतम्, तन्नाम्नोऽपि वृद्धिः स्यादिति ज्ञापनार्थम्; तत्रापि कलिहल्योर्वृद्धिमकृत्वा प्रथमत एवाऽन्त्यस्वरादिलुक् कार्या, पटुलघ्वादीनां तु प्रथमं वृद्धिं कृत्वा पश्चादन्त्य-

स्वरादिलुक् कार्येति वृत्त्युक्तरीतेश्च ज्ञापनार्थमेव । **इत्याद्यैरिति** । अग्रेतनवक्षस्कारेऽपि केचिन्न्याया एतन्न्यायबाधकाः सन्ति तेऽत्र आद्यशब्देन संग्राह्याः । एवमग्रेतनन्यायस्यापि वृत्तावेतत्स्थानस्याद्यशब्दस्य फलं वाच्यम् ॥ ४१ ॥

**वार्णा**— ॥ **वार्णेष्वेवान्तर्भावादिति** । यथा नद्यै इत्यादौ नदीति नामरूपा प्रकृतिः, तत्कार्यं च यत्वरूपं वार्णमेवोच्यते ॥ ४४ ॥

**य्वृद् य्वृ**— ॥ **दीर्घ इति** । इदं य्वृदाश्रयं कार्यम् ॥ ४५ ॥

**उप**— ॥ **नमस्यतीति** । नमः करोतीति क्यनि नमस्य इति धातुः । ननु कथमत्र चतुर्थीप्राप्तिः ? यतस्तत्र 'अर्थवद्ग्रहणे-' इति न्यायाद् नमःशब्दोऽर्थवानेव ग्राह्य उक्तः; इह तु नमस्यधातुरर्थवान्, न तु तदेकदेशो नमःशब्दः । सत्यम्, परम् 'अर्थवद्ग्रहण-' इति न्यायो नात्र प्रवर्त्तते, यतो न्यायाः स्थविरयष्टिप्रायाः । **व्यर्थकीभूतत्वादिति** । प्रतिशब्दस्यार्थो लक्ष्यलक्षणभावः, स च यस्मै कोप इत्युच्यमाने चतुर्थ्यैव प्रत्यायितः, इत्यतः प्रतिशब्दस्य नैरर्थक्यं जातम् । **निमित्ताभावे इत्यादि** । निमित्तं शब्दस्य सार्थकत्वं, नैमित्तिकं शब्दस्य प्रयोगः, यदि च शब्दस्यार्थो नष्टस्तदा तत्प्रयोगोऽपि नश्यतीत्यर्थः ॥ ४६ ॥

**लुब**— ॥ **युष्मद् अस् ईय स् इति** । अस् इति षष्ठीङसः, स् इति प्रथमासेश्च स्थापना, एवमग्रेऽप्यूह्यम् । **प्रकृतिप्रत्ययावित्यादि** । त्वदीय इत्यादावैकार्थ्यं प्रकृतिप्रत्ययापेक्षम्, मत्पुत्रा इत्यादौ तु पदद्वयापेक्षम्, इति क्रमेण योज्यम् ॥ ४७ ॥

**सर्वे**-- ॥ **लुग् ग्राह्येति** । ननु लुप्लुकोः को विशेषः ? अदर्शनरूपलक्षणसाम्यात् । उच्यते— लुकि स्थानिवद्भावेन लुग्भूततन्निमित्तकं कार्यं स्यात्, यथा गोमानित्यत्र सेर्लुकि तन्निमित्तो दीर्घः; लुपि तु नैवम्, "लुप्यय्वृल्लेनत्" ॥७।४।११२॥ इति निषेधात् । **गोबलीवर्दन्यायादिति** । यथाऽत्र गोबलीवर्दास्तिष्ठन्तीत्युक्ते गोशब्दो धेनुवृषवाचकोऽपि बलीवर्दशब्दस्य पृथगुक्तेर्धेन्वर्थ एव व्यवस्थाप्यते, तथाऽत्रापि ॥ ४८ ॥

**आग**-- ॥ **तिसरि कृते सतीति** । ननु परत्वादेव तिस्रादेशः प्रथमं भावीति किमत्र न्यायेन ? । मैवम्, नागमः किल तिस्रादेशे कृतेऽकृतेऽपि च प्राप्नोतीति कृताकृतप्रसङ्गित्वाद् नित्यः, "परान्नित्यं बलवत्" इति च न्यायः, तेन नागमस्यैवात्र प्रथमं प्राप्तिः । **नागमव्यवधान इति** । ननु कथं नागमने व्यवधानम् ? "स्वाङ्गमव्यवधायि" इति न्यायात् । उच्यते—यस्माच्छब्दाद् नागमः समानीतः, तस्य यदि किमपि प्राप्नोति तदाऽयं न्याय उपतिष्ठते, इह तु नोऽन्तः प्रियत्रि इति समुदायादानीतः, तिस्रादेशरूपं कार्यं तु त्रीत्यवयवस्य प्राप्नोति, इति तदपेक्षया नागमस्याऽस्वाङ्गत्वाद् व्यवधानं स्यादेव ॥ ५१ ॥

**परा**-- ॥ **मा भवानटन्तं प्रयुक्त इति** । माङ्योगसद्भावात् प्रयुक्तेत्यत्र नाडागमः । **मा भवानटीटदिति** । यद्यत्र माङ् न प्रयुज्यते तदा "स्वरादेस्तासु" ॥४।४।३१॥ इत्याद्यस्वरस्य वृद्धिः स्यात्, तथा च न ज्ञायते—उपान्त्यह्रस्वभवनादनु अकारस्य वृद्धिः जाता, उत अकृतह्रस्वस्याकारस्यैव, इत्यतो वृद्धेर्निवारणार्थं माङः प्रयोगोऽत्र कृतः, कृतेऽपि च तस्मिन् माङ आकारस्य समानदीर्घत्व

भवनादनु न ज्ञायते–उपान्त्यह्रस्वस्य कृतत्वादकारेण सह दीर्घत्वं जातम्, आहोस्विन् तस्याकृतत्वादाकारेण सह, इत्यतो ह्रस्वव्यक्तिकरणार्थं माङस्त्याद्यन्तपदस्य चान्तराले भवानिति न्यस्तम्। एवं मा भवानोणिणदित्यत्राऽपि वाच्यम् ॥ ५२ ॥

**उत्स--** ॥ **निपातनमिति** । निपातनेन हि सर्वं सिध्यति,

यदुक्तम्—

"अकृतस्य क्रिया चैव प्राप्तेर्बाधनमेव च ।
अधिकार्थविवक्षा च त्रयमेतद् निपातनात्" ॥ १ ॥ ५५ ॥

**नानि--** ॥ अत्रार्थशब्दश्चतुर्थ्यर्थे, अनिष्टायेति अनिष्टार्था, "तदर्थार्थेन" ॥ ३ । १ । ७२ ॥ इत्यनेन तत्पुरुषः, "ङेऽर्थो वाच्यवत्" (लिङ्गा–१३४) इत्यनेन च विशेष्यलिङ्गता, नित्यसमासश्चायम्। चतुर्थ्यैवाऽर्थशब्दार्थस्य उक्तत्वेन 'उक्तार्थानामप्रयोगः' इति न्यायादर्थशब्दप्रयोगाभवनेन वाक्यासंभवात्। ननु कोऽयं नित्यसमासः ? । उच्यते–यस्य समासस्यार्थकथनार्थं समस्तपदान्येवाऽसमस्तीकृत्य वाक्यं कर्तुं शक्यते सोऽनित्यसमासः, यथा राज्ञः पुरुषो राजपुरुष इति । यत्र तु समस्यमानपदैर्वाक्यं कर्तुं न शक्यते, किन्तु पदान्तरैरर्थः प्रतिपाद्यते स नित्यसमासः, यथा शोभनो राजा सुराजेति । **चैत्रस्येत्यादि** । अत्राद्ये उदाहरणे व्याप्यं कर्तृस्थं नास्ति, द्वितीये त्वमूर्तं नास्ति, तृतीये कर्तृस्थामूर्तं करणमस्ति, न तु व्याप्यम् ॥ ५७ ॥

इति स्वकृतन्यायार्थमञ्जूषायाः प्रथमवक्षस्कारकन्यासः ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
र्गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते सांप्रतम् ।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक आद्य एष सुषमां न्यासेन संप्रापितः ॥ १ ॥

---

अर्हम्

# अथ द्वितीयो वक्षस्कारः ।

**प्रकृ--** ॥ स्वार्थः प्रकृत्यर्थ एव ज्ञाप्यतयाऽस्त्येषां "अतोऽनेकस्वरात्" ॥ ७।२।६ ॥ इतीके स्वार्थिकाः । ते च द्विधा–आख्यातीयाः, तद्धितीयाश्च । तत्र आख्यातीया आयादयः, तद्धितीयास्तु द्विधा–कारादयः, तमबादयश्च । तत्राऽऽयादीनां कारादीनां च प्रकृत्यर्थमात्र एवोत्पादाद् नास्त्युपाधिविशेषापेक्षा । यथा "गुपौधूप–"॥ ३।४।१ ॥ इत्याये पणायति, "वर्णाव्ययात् स्वरूपे कारः" ॥ ७।२।१५६ ॥ इति कारप्रत्यये अकारः । ननु चिकित्सतीत्यादौ सनः संशयाद्यर्थविशेषे उत्पादादायादीनामित्यत्र चैतस्याऽपि संगृहीतत्वात् कथमुच्यते–आयादीनां नास्त्युपाधिविशेषापेक्षेति ? । मैवम्, यतो धातूनामनेकार्थत्वेन संशयादीनां धात्वर्थत्वमेवोच्यते, न तूपाधिविशेषत्वम्; उपाधिर्हि स उच्यते यः प्रकृत्यर्थादधिकः स्यात् । संशयाद्यर्थास्तु धात्वर्थत्वात् प्रकृत्यर्थरूपा एव, न तूपाधिरूपाः; तमबादीनां त्वस्ति प्रकृत्यर्थादधिकस्य प्रकृष्टत्वाद्युपाधेरपेक्षा, यथा बहूनां मध्ये प्रकृष्ट-

आढ्यः आढ्यतमः " प्रकृष्टे तमप् " ॥ ७।३।५ ॥ इत्यादि, परं तत्र प्रकृष्टादिविशेषणं प्रकृतितएवाऽवसीयते, केवलं प्रत्ययेन द्योत्यते, चादिभिः समुच्चयाद्यर्था इव। एवं च ये प्रकृत्यर्थमात्रे निष्ठिताः, ये च प्रकृत्यर्थस्यौपाधिद्योतकाः, ते उभयेऽपि स्वार्थिका इह ग्राह्याः। **अपणिष्टेति**। क्रयविक्रये द्यूतपणत्वे वा शर्तं विनियुक्तवानित्यर्थः। **अपणायीदिति**। ननु अपणायीदिति स्थाने पणायतीत्येव सरलं कस्माद् नोदाहृतम्? । उच्यते–यदि पणायतीति दृश्यते तदा जातु इत्थमपि शङ्का स्यात्, कथम्?–"विनिमेयद्यूत–"॥२।२।१६॥ इति सूत्रे पणीत्येवोक्तेऽपि पणायतीत्यत्र शित्प्रत्यये परे "गुपौधूप"–॥ ३।४।१ ॥ इत्यनेनायप्रत्ययस्य नित्यमेव विहितत्वेन अनायान्तस्यासंभवादेव आयान्तस्यापि पणेर्ग्रहणं सिद्धमिति। तथा चैतन्न्यायस्य फलं किमपि न, अशित्युदाहृते त्वेतच्छङ्काऽनुत्पादाद् न्यायस्य फलं प्रकट्यभूत्। कथम्?–"अशवि ते वा" ॥३।४।४॥ इत्यनेन अशित्यायादयो विकल्पिताः, ततः केवलस्य पणेः संभवेऽपि यदायान्तस्यापि पणेर्ग्रहणं सिद्धम्, तदेतन्न्यायबलादेवेति। **परस्तादिति**। परस्यां दिशि इति वाक्ये " पराऽवरात् स्तात् " ॥ ७।२।११६ ॥ इति स्तात्प्रत्ययः ॥ १ ॥

**प्रत्य-- ॥ न तु तरति, ताम्यतीत्यादि व्युत्पन्ने नाम्नीति**। ननु तरतमाविव तन इत्यचि किं न स्यात्, येनात्र नोक्तम्?। उच्यते–न स्यात्, "तन्व्यधीण्श्वसातः-"॥५।१।६४॥ इति णे तान इति भवनात्। **"नारी-"॥२।४।७६॥ इत्यादीति**। नृश् नये नृणाति इत्यचि नरः, स्त्री चेद् नारी, ङीप्रत्यये परे "नारीसखीपङ्गूश्वश्रू" ॥२।४।७६॥ इत्यनेन निपातः। **अव्युत्पन्नत्वेनेति**। यद्यपि उणादौ तृधातोः " तृस्तृतन्द्रि-" (उणा–७११) इत्यनेन ईप्रत्यये तरीशब्दो व्युत्पादितोऽस्ति, तथा च तरीशब्दस्य ईप्रत्ययान्तताऽप्यस्ति, तथाऽपि 'उणादयोऽव्युत्पन्नानि नामानि' इति न्यायमाश्रित्य अव्युत्पत्तिपक्ष एवात्र आदृतः, न त्वौणादिकानां व्युत्पत्तिपक्षः। अत एव वृत्तौ " प्रत्ययरहिताः " इत्युक्तम् ॥ २ ॥

**अदा-- ॥ असत्यस्यत्योरिति**। असी गत्यादानयोः, असूच् क्षेपण इत्यनयोः ॥ ३ ॥

**प्राक-- ॥ कृत्संबन्धिन्यपीति**। यद्यप्याख्यातकृत्प्रकरणे भिन्ने तथाऽपीत्यपिशब्दार्थः। ननु " संख्यासंभद्राद् मातुर्मातुर्च " ॥ ६ । १ । ६६ ॥ इत्यस्य न्यासे आख्यातकृत्प्रकरणयोरैक्यमित्युक्तमस्ति, तत् कथं भवद्भिस्तयोर्भेदमुद्भाव्य न्यायानित्यता दर्शिता?। उच्यते–तत्रापि प्रथमं भेदपक्ष एवाश्रितोऽस्ति, तथाहि–तत्र तावत् परेणैवमाशङ्कि–द्वयोर्मात्रोः कोऽर्थः?–धान्यादिमानकारिणोरपत्यमिति वाक्ये " संबन्धिनां संबन्धे" ॥ ७ । ४ । १२१॥ इति परिभाषया जनन्यर्थएव मातृशब्दे "संख्यासंभद्राद्-" ॥६।१।६६॥ इत्यस्य प्रवृत्तिसंभवेनाऽत्राऽप्रवृत्तेः " ङसोऽपत्ये " ॥६।१।२८॥ इत्यनेनैवाऽणि द्वैमात्र इति। अत्र " नामिनोऽकलिहलेः " ॥४।३।५१॥ इति ऋतो वृद्धिः कस्माद् नेति?। उत्तरं त्वेवम्—न, द्वितीये ञ्णिति प्रत्यये परे तक्रकौण्डिन्यन्यायेन " नामिनोऽकलि-" ॥ ४ । ३ । ५१ ॥ इत्यस्य बाधभवनाद् नात्र प्रवृत्तिः, अयं भावः–यथा द्विजेभ्यो दधि देयमित्युक्त्वा कौण्डिन्याय तक्रं देयमित्युक्ते कौण्डिन्यस्य दधिदाननिषेधः स्वयं प्रतीयते, तथा " नामिनोऽकलि-" ॥ ४ । ३ । ५१ ॥ इति सूत्रे ञ्णिति प्रत्यये परेऽन्त्यस्य नामिनो वृद्धिरित्युक्त्वा " वृद्धिः स्वरेष्वादेः-" ॥७।४।१॥ इति सूत्रे न द्वितीये ञ्णिति परे आदेः स्वरस्य वृद्धिरिति यदुक्तम्, तदा तद्द्वितीये ञ्णिति परे " नामिनोऽकलि-" ॥ ४ । ३ । ५१ ॥ इति सूत्रे विहिताया वृद्धेर्निषेधः

स्वयमेव प्रतीयते, इत्यतो नात्र " नामिनोऽकलि-" ॥ ४ । ३ । ५१ ॥ इत्यनेन ऋतो वृद्धिः । यद्वा, आख्यातकृत्प्रकरणमैकमेव, इत्यतो " नामिनोऽकलि-"॥ ४ । ३ । ५१ ॥ इत्यत्र आख्यातकृत्प्रकरण-विहितो ञ्णित्प्रत्ययो गृह्यते, अयं तु भिन्नप्रकरणविहित इत्यतो न गृह्यते इति । तदेवं " संख्यासं-भद्राद्-" ॥ ६ । १ । ६६ ॥ इत्यस्य न्यासेऽपि आख्यातकृत्प्रकरणयोरभेदो द्वितीयोत्तरे चेत् प्रकटि-तः, तदा आद्यमुत्तरं पारिशेष्याद् भेदपक्ष एव हृदि विवर्तमाने सति सूरिणा कृतमिति प्रतिपत्तव्यम्, भेदाभेदव्यतिरिक्तप्रकाराभावात्; अत्रापि च भेदपक्ष आदृत इत्यदोषः । ननु कथमुच्यते—भेदाभे-दव्यतिरिक्तप्रकाराभावादिति ?, यतोऽस्ति स्याद्वादिनां संमिलितभेदाभेदनामा तृतीयोऽपि पक्षः । एवं तर्हि भेदाभेदोभयात्मके आख्यातकृत्प्रकरणरूपे वस्तुन्येकस्य भेदपक्षस्याश्रयणेनाऽत्र प्ररूपणा कृतेत्यपि अदोष एव ॥ ४ ॥

साह-- ॥ **व्यभिचारीति** । यो विवक्षितप्रकारेण, अन्यथा च संभवेत्, स व्यभिचारी; यस्य तु विवक्षितप्रकारेणैव संभवः, सोऽव्यभिचारी । **पाचयाञ्चकृषेति** । अत्र कसोरामादेशः । **लुप् सिद्ध इति** । ननु पाचयाञ्चकृषेत्यत्र आमन्तस्याव्ययत्वात् विभक्तेर्लोपस्तावत् स्यादेव, तथा च विभक्त्युत्पत्तेः किं फलम् ? । उच्यते— पाचयामित्यत्र मोऽनुस्वार एव, तथाहि— यद्यत्र विभक्त्यु-त्पत्तिर्न स्यात् तदा अविभक्त्यन्तत्वेनापदत्वाद् मस्य पदान्तस्थत्वाभावात् " तौ मुमो-" ॥१।३।१४॥ इत्यनुस्वारो न स्यात्, किं तु " म्नां धुड्वर्गे- " ॥ १।३।३९ ॥ इति अन्त्य एव । ननु अत्र स्यादिवि-भक्त्यन्तत्वं मा भूत्, त्यादिविभक्त्यन्तत्वं तु भवत्येव, कसोः परोक्षावद्भावसद्भावेन तदादेशस्या-मोऽपि परोक्षावद्भावसंभवात् । मैवम्, यतः कसोः परोक्षावद्भावे सत्यप्यामः परोक्षावद्भावो नास्ति, " वेत्तेः कित् " ॥ ३।४।५१ ॥ इति सूत्रे तथाज्ञापनात् । तत आमन्तस्याविभक्त्यन्तत्वेन अपद-त्वाद् मः " म्नां धुड्वर्गे- " ॥ १।३।३९ ॥ इत्यन्त्य एव प्रसज्यते, स्याद्युत्पत्तौ तु पदत्वाद् मोऽनुस्वा-रः सिद्धः॥ ननु भवत्येवम्, परं कसोः परोक्षावद्भावोऽस्तीति कृत्वा कस्वन्तस्य त्याद्यन्तत्वान् चकृवा-नित्यादौ कस्वन्तात् स्याद्युत्पत्तिर्विरुध्यते, नाम्नोऽग्रे स्यादेर्विधानान् । त्याद्यन्तस्य च पदत्वेन ना-मत्वाभावात् । मैवं वोचः, यतः क्वसोः परोक्षावद्भावो द्वित्वादिसाध्यसाधनार्थमकारि, इत्यतः स्याद्यनुत्पत्तिरूपानिष्टापादनाय न प्रभवति ' नानिष्टार्था शास्त्रप्रवृत्तिः ' इति न्यायात् । अत्र "वेत्तेः कित् " ॥ ३।४।५१ ॥ इत्यत्रामः परोक्षावद्भावनिवृत्तिः कथं ज्ञापिता ? इति चेत् । उच्यते— "वेत्तेः कित् " ॥ ३ । ४ । ५१ ॥ इत्यनेन आमः कित्त्वं तावद् विदाञ्चकारेत्यादौ गुणाभावार्थं कृतमस्ति, यदि च ' वेत्तेरवित् ' इति सूत्रं क्रियते, एवं च व्याख्यायते— वेत्तेः परस्याः परोक्षाया आम् स्यात्, स चाऽवित् इति; तदाऽपि विदाञ्चकारेत्यादिषु गुणाभावः सिध्यत्येव, कथम् ?—' वेत्तेरवित् ' इत्यनेन तावत् आमोऽवित्त्वं कृतमस्ति, आमश्च स्थानिवद्भावेन परोक्षात्वमारोप्यते । ततश्च तस्याऽऽ-मोऽवित्परोक्षारूपस्य " इन्ध्यसंयोगात् परोक्षा किद्वत् " ॥४।३।२१॥ इत्यनेन कित्त्वं क्रियते, तेन च गुणाभावः सिध्यतीति । तथापि यद् ' वेत्तेरवित्' इति न कृतम्, किन्तु 'वेत्तेः कित्' ॥३।४।५१॥ इति कृतम्; तज्ज्ञापयति—आमः परोक्षावद्भावो नास्तीति । तेन चाऽऽमि परोक्षावद्भावहेतुकं कित्त्वद्वि-त्वादिकं कार्यं न स्यात् । यथा जुहवाञ्चकतुरित्यादौ "इन्ध्यसंयोगात्-"॥४।३।२१॥ इति कित्त्वस्या-ऽभवनाद् गुणः सिद्धः, द्वित्वं त्वत्र " भीह्रीभृहोस्तिव्वत् " ॥३।४।५०॥ इत्यनेनाऽऽमस्तिव्वत्करणात् " ह्वः शिति " ॥ ४।१।१२ ॥ इत्यनेन जातमस्ति, तथा आमः परोक्षावद्भावाभावाद् विदाञ्चकारे-

त्यादौ " द्विर्धातुः परोक्षा- " ॥४।१।१॥ इति द्वित्वं नाभूत्, गुणाभावस्त्वत्र " वेत्तेः कित् " ॥३।४।५१॥ इत्यनेन आमः कित्त्वकरणाज्ज्ञातः, तथा आमः परोक्षावद्भावाभावादेव दयाञ्चक्रे इत्यादौ " अनादेशादेरेकव्यञ्जनमध्येऽतः " ॥ ४।१।२४ ॥ इत्येत्वं नेत्यादि । ननूच्यतामेवं परं ' वेत्तेरवित् ' इत्यकृत्वा ' वेत्तेः कित् ' इति यत् कृतं तल्लाघवार्थमेव लक्ष्यते, तथाहि– यदि ' वेत्तेरवित् ' इति सूत्रं क्रियते तदा वर्णाधिक्याद् वर्णगौरवं स्यात्, प्रक्रियागौरवं च । कथम् ?–प्रथमं 'वेत्तेरवित् ' इत्यनेन आमोऽवित्त्वं साध्यते, ततः " इन्ध्यसंयोगात्- " ॥ ४।३।२१ ॥ इत्यनेन अवित्परोक्षारूपस्य तस्य कित्त्वम्, ततस्तस्मिन् परे विदाञ्चकारेत्यादौ गुणाभावः सिध्यतीति । ' वेत्तेः कित् ' ॥ ३।४।५१ ॥ इति करणे च वर्णन्यूनत्वाद् वर्णलाघवं तावत् स्फुटमेव, प्रक्रियालाघवं च स्यात् " इन्ध्यसंयोगात्- " ॥ ४।३।२१ ॥ इति सूत्रापेक्षायाष्टलनात् । ' मात्रालाघवमप्युत्सवाय मन्यन्ते वैयाकरणाः ' इति च न्यायः, ततो लाघवार्थैत्र " वेत्तेः कित् " ॥ ३।४।५१ ॥ इति सूत्ररचना । यत्त्वामः परोक्षावद्भावनिवृत्तिज्ञापनार्थेयमित्युच्यते, तन्न क्षोदक्षमम्। मैवम्। यतो लाघवं कार्यमेवेत्याचार्यस्यैकान्तो नास्ति, कथमन्यथा " क्लीबे " ॥ २।४।९७ ॥ इति सूत्रवत् " नपुंसकस्य शिः " ॥ १।४।५५ ॥ इति सूत्रे नपुंसकशब्दस्थाने क्लीबशब्दो न प्रयुक्तः ? । ततो " मात्रालाघवमप्युत्सवाय " इति न्यायस्यानित्यत्वेन लाघवं प्रत्याग्रहाभावात् " वेत्तेः कित् " ॥ ३।४।५१ ॥ इति सूत्ररचना आमः परोक्षावद्भावनिवृत्तिज्ञापनार्थमेव कृतेति सूरिवचः सम्यक् श्रद्धीयताम् । तदर्थं च करणे यदि प्रसङ्गाद् लाघवमपि जातम्, तदा प्रत्युत गुण एव, न तु कश्चिद् दोषः। अन्यत्रापि चैवं दृश्यते–यथा "अनवर्णा नामी" ॥१।१।६॥ इत्यत्र संज्ञाऽग्रे एकवचनोपन्यासेन वचनभेदं कुर्वताऽऽचार्येणैवं बोधितम्– यत्र नामिनः कार्यं क्रियते तत्र यदि कार्यात् कार्यी स्वरो न्यूनः स्यात्, तदैव नामिसंज्ञा स्यात्, नान्यथा, तेन ग्लायति, म्लायतीत्यादौ धात्वैकारस्य नामिसंज्ञत्वाभावाद् " नामिनो गुणोऽक्ङिति " ॥४।३।१ ॥ इति गुणो न। अयं भावः–गुणो ह्यधिकविशेषारोप उच्यते, ग्लायतीत्यादौ च य ऐकारोऽस्ति, तस्य तावदासन्नत्वादेकाररूपो गुणः प्राप्नोति, एकारश्चैकाराद् न्यूनः । ननूभयोरपि द्विमात्रत्वादिना साम्यमेव दृश्यते, तत् केन गुणेन एकार ऐकाराद् न्यूनः ?। उच्यते–एकारे उच्चार्यमाणे विवृततराख्य एव आस्यप्रयत्न उत्पद्यते, ऐकारे त्वतिविवृततराख्यः, इत्येतावतैव एकार ऐकाराद् न्यूनः । ततो यदि ऐत एत् क्रियते, तदा दूरेऽस्त्वधिकविशेषारोपः, प्रत्युत न्यूनता स्यात् । ततोऽत्रैकाररूपे गुणे कर्तव्ये ऐकारस्य नामिसंज्ञा नास्तीति "नामिनो गुणोऽक्ङिति" ॥४।३।१॥ इति गुणो न स्यादिति। एतदर्थज्ञप्त्यर्थं "अनवर्णा नामी" ॥१।१।६॥ इति सूत्रे संज्ञाऽग्रे एकवचनोपन्यासेन वचनभेदः कृतः, एतदर्थं च वचनभेदे क्रियमाणे यदि प्रसङ्गाद् वर्णलाघवं जातं, तदा प्रत्युत गुण एव, न तु कश्चिद् दोषः । इत्येवमत्रापि मन्तव्यम् ॥ ६ ॥

**वर्ण–** ॥ **अमुकवर्णस्येतीति** । अमति गच्छति विवक्षितप्रत्ययविषयतामिति "कञ्चुकाशुक"–॥ (उणा-५७) ॥ इत्यादिना आदिशब्दादौणादिके उकेऽमुक इति निपात इति नरचन्द्रीयमुरारिनाटकटिप्पनके । **णद्वयस्येति** । धातुपारायणे एवमुक्तत्वादत्राप्येवमूचे, अन्यथा तु "तवर्गस्य"–॥ १।३।६० ॥ इत्यत्र 'अनु' इत्यधिकारसद्भावेन तदानीमद्यापि नागमस्य णत्वाभवनाद् 'न्ण' इति पञ्चमद्वयस्येति वक्तुं युक्तम्। एवं च सुविनावेत्यत्र 'निमित्ताभावे'–इति न्यायं विनाऽपि सरति। "**धुटां**"– ॥ १।४।६६ ॥ इति । धुट्संज्ञा हि वर्णानामित्यतो धुड्ग्रहणं वर्णग्रहणं कथ्यते । **विशि-**

**ष्टवर्णेत्यादि** । नन्वत्रोदाहरिष्यमाणं णिग्रहणं किं वर्णग्रहणं नोच्यते, येन विशिष्टवर्णसमुदायेत्याद्युच्यते ?। उच्यते— नोच्यते । कथमिति चेत् ?। उच्यते—यथा इडाश्रयो विधिर्वर्णविधिर्नोच्यते, इडिति विशिष्टवर्णसमुदायाश्रितत्वात्; तथा णिग्रहणमपि वर्णग्रहणं न, किन्तु णीति विशिष्टवर्णसमुदायग्रहणमेव। न च दृष्टान्तोऽप्यसिद्ध इति वाच्यम्, अग्रहीदित्यत्रेटो दीर्घत्वस्य स्थानिवद्भावेन दृष्टान्तसिद्धेः, तथाहि—यदि तावदिडाश्रयविधेर्वर्णविधित्वं स्यात्,तदा अग्रहीदित्यत्रेटो दीर्घत्वे कृते सति इडाश्रये "इट ईति"।।४।३।७१।। इति सिज्लोपे कर्तव्ये दीर्घत्वस्य कथं स्थानिवद्भावः स्यात् ?, "स्थानीवाऽवर्णविधौ" ।।७।४।१०९।। इत्युक्तेः, तदभावे च कथं सिज्लोपः सिद्धः ?; परमिडाश्रयोऽपि सिज्लोपो न वर्णविधिः, विशिष्टं ह्येष वर्णसमुदायमाश्रयते इटं नामेति । तदेवं यथा इडाश्रयविधेर्वर्णविधित्वं न स्यात्, तथा णिग्रहणं वर्णग्रहणं नोच्यते, किन्तु विशिष्टवर्णसमुदायग्रहणमेव ।। ७ ।।

**वर्णैक— ।। ऋमध्यस्थरेफस्याऽग्रहणादिति** । ननु यद्यत्र ऋमध्यस्थो रेफो गृह्यते, तदापि क्तयोस्तो नत्वं न प्राप्नोति, रेफात् परेण स्वरभागेण व्यवधानात् । सत्यम्, परं स्वरभागस्य तुरीयत्वेनाऽत्यल्पत्वात् तेन व्यवधानं न विवक्ष्यते; सूरिणाऽपि ह्यस्य व्यवधानस्याऽविवक्षा कृताऽस्ति । कथमिति चेत् ? । उच्यते—"रदादमूर्च्छ"—।। ४।२।६९।। इत्यस्य वृत्तावेवमुक्तं यदुत—"कृतः कृतवानित्यत्र ऋकारैकदेशभूतस्य रेफस्य रेफरूपवर्णग्रहणेनाऽग्रहणात्, "रदादमूर्च्छ"—।। ४।१।६९ ।। इत्यनेन प्राप्तं क्तस्य तो नत्वं न स्यात्; रेफात् परेण स्वरभागेण व्यवधानाद् वा"इति । तदेवं सूरिणाऽपि प्रथमहेतूद्भावनसमये स्वरभागव्यवधानं न विवक्षितमित्यतोऽस्माभिरपि तदविवक्षणादत्र ऋमध्यस्थरेफाग्रहणमेव हेतुमुद्भाव्य प्रकृतन्यायस्याऽनित्या प्रकटिता ।। ८ ।।

**आग— ।। लक्षणयेति** । अत्र

" मुख्यार्थबाधे मुख्यार्थासन्नत्वे लक्ष्यतेऽपरः ।
रूढेः प्रयोजनाद् वाऽर्थो यत् सोक्ता लक्षणा बुधैः " ।। १ ।।

इति लक्षणाया लक्षणं भाव्यते, तथाहि—गुणशब्दस्तावत् स्वाश्रयव्यापिषु रूपादिषु रूढः, अतः स्वाश्रयैकदेशनिष्ठेष्ववयवेषु प्रयुज्यमानस्य तस्य मुख्यार्थबाधः, स्वाश्रययोगित्वसाधर्म्येण चाऽवयवा गुणानामासन्नाः, तत आगमरूपाणामवयवानामात्यन्तिकी स्वाश्रययोगिताऽस्ति, इति ज्ञप्तिरूपात् प्रयोजनाद् गुणत्वमुपचर्यत इत्यर्थः । न चैषां स्वाश्रययोगिताऽऽत्यन्तिकी नास्तीति वाच्यम्, यतो यथा घटग्रहणे तद्गतरूपादिगुणग्रहणं जायते, तथाऽऽगमाश्रयभूतस्य धात्वादेर्ग्रहणे तन्निश्रितानामागमरूपाणामवयवानामप्येतन्न्यायाद् ग्रहणसिद्धेः, तेषामप्यात्यन्तिकी स्वाश्रययोगिता सिद्धैव । **अवयवीभूता इति** । आगमाः किल ये आदिशब्देन निर्दिश्यन्ते,ते पुरस्थस्य धात्वादेरात्मावयवा उच्यन्ते; ये त्वन्तशब्देन, ते पश्चात्स्थस्याऽन्त्यावयवा इति । **तल्लुकीति** । ईतो बहुलं भवनाद् यदा नेत्, तदा केवलस्य देर्लुक्; यदा तु ईत्, तदा ईतः परादित्वेन प्रकृतन्यायात् सेतोऽपि देर्लुक् । **अनिटः क्सोरिति** । नित्यत्वाद् द्वित्वस्य प्रथमं भवनेन भूधातोरनेकस्वरत्वभवनात् "धसेकस्वरातः क्सोः" ।। ४।४।८२ ।। इत्यनेनेटोऽप्राप्त्या क्सोरनिट्त्वम् । **अट्यपीति** । ननु 'शिडान्तरेऽपि' इत्यधिकारेणाऽन्यव्यवधानस्याऽननुमतत्वादटा व्यवधाने षत्वाऽप्राप्तेरट्यपीति तत्रोक्तमास्ति, तत्कथमिदमनित्यत्वख्यापकमुक्तम् ?। उच्यते—अस्याऽनित्यत्वाभावे सुगादीनां ग्रहणेनाऽट्सहितानामपि तेषां ग्रहणसिद्धेरटा व्यवधानमिति वक्तुमपि न शक्यम्, इत्यतो युक्तमेवेदम्; तदियमत्र भावना—

अभ्यषुणोदित्यादौ तावत् सुगः षत्वं सूरेरिष्टम्, तच्च 'शिङ्नान्तरेऽपि' इत्यधिकारेणाऽन्यव्यवधानाऽनुमत्यभावादडागमव्यवधाने निषिषिधानम्, तदनु 'आगमा यद्‌गुणीभूताः-'इति न्यायेन पुनः प्रसूतम्, परं न्यायानामनित्यत्वात् सूरेर्विश्वासो न, तेनाडागमव्यवधानेऽपि षत्वार्थमस्त्यपीत्युक्तम् ॥ १० ॥

**स्वाङ्ग— ॥ द्विरुक्तादिकमिति।** अत्राऽऽदेरागमाः संगृह्यन्ते, परं ते पूर्वन्यायविषयत्वाद् नेहोदाहृताः, अत एव पूर्वन्यायोऽस्य प्रपञ्चः । **परत्वादिति ।** परोक्षायाः कृत्स्नसूत्रेषु विधानाणवः परत्वम्। ननु संचस्कारेत्यत्र परत्वादिना प्रथमं णव् भवतु, द्वित्वं तु "स्सटि समः"॥१।३।१२॥"लुक्"॥१।३।१३॥ इति सूत्रद्वयं प्रवर्त्य पश्चात् करिष्यत इत्याशङ्कयाह— **तदाश्रित इति ।** अयं भावः— णवि कृतेऽवश्यं द्वित्वादिनैव भाव्यम्, विष्कम्भे हेत्वभावात्; अन्यथा णवो द्वित्वं प्रत्यहेतुत्वप्रसङ्गात्, विष्कम्भकाभावेऽपि स्वकार्येऽव्याप्रियमाणो हि हेतुर्वस्तुतोऽहेतुरेव । **निमित्ताभाव इतीति ।** इयं परशङ्का दर्शिता, अयं भावः—संचस्कारेत्यत्र पर एवं शङ्कते यदुत—द्वित्वे कृते सति चेन व्यवधानात् संकुगोरानन्तर्यं गतम्, तेन स्सटो निवृत्तिः प्राप्नोति'निमित्ताभावे-'इति न्यायादिति।अत्र ग्रन्थकृदुत्तरयति—द्वित्वजस्य धातोश्चस्य स्वाङ्गत्वात् तद्‌व्यवधानाऽभवनेन संकुगोरानन्तर्यरूपस्य स्सड्निमित्तस्य विघाताऽसम्भवात् स्सटो निवृत्तिर्न स्यादिति । **द्वित्वेऽपीत्युक्तिरिति ।** ननु 'शिङ्नान्तरेऽपि' इत्यधिकारात् प्राग्वदत्राऽपि द्वित्वेन व्यवधाने षत्वाऽप्राप्तेर्द्वित्वेऽपीति तत्रोक्तमस्ति, तत्कथमिदमनित्यत्वख्यापकमुक्तम् ? । उच्यतेअस्याऽनित्यत्वाभावे द्वित्वेन व्यवधानमिति वक्तुमपि न शक्यम्, इत्यतो युक्तमेवेदम्,तदियमत्र भावनाप्रतितष्ठावित्यादौ तावत् स्थाधातोः षत्वं सूरेरिष्टम्,तच्च 'शिङ्नान्तरेऽपि'इत्यधिकारेणाऽन्यव्यवधानानुमत्यभावाद् द्वित्वव्यवधाने निषिषिधानम्, तदनु 'स्वाङ्गमव्यवधायि' इति न्यायेन पुनः प्रसूतम्, परं न्यायानामनित्यत्वात् सूरेर्न विस्रम्भः, तेन द्वित्वव्यवधानेऽपि षत्वार्थं द्वित्वेऽपीत्युक्तम् ॥ ११ ॥

**उप— ॥ व्यवहित इत्यादि ।** तत्र व्यवहितो यथा—"तं पातयां प्रथममास पपात पश्चात्" अत्र पातयामासेत्यव्यवहितं विलोक्यते, विपर्यस्तो यथा—"नाऽरेश्चकार गणयामयमस्त्रपातान्" अत्र गणयाञ्चकारेति क्रमोपन्यासो विलोक्यते, तेनैतौ व्यवहितविपर्यस्तप्रयोगावसाधू ॥ १२ ॥

**येन ना— ॥ गुणवाचिशब्देष्विति ।** द्रव्यवाचिषु तु तितउरित्यत्र स्वरात्पर उरव्यवहितः संभवत्यपि ॥ १३ ॥

**सका— ॥ असासक् इतीति।** "सस्य शषौ" ॥१।३।६१॥ इत्यत्र "र्हादर्हस्वरस्याऽनु नवा" ॥१।३।३१॥ इति सूत्रादनुवृत्तस्याऽन्वित्यधिकारस्य सद्भावात् "संयोगस्यादौ स्कोर्लुक्" ॥ २।१।८८ ॥ इत्यस्य च परत्वादसासक्, मूलवृट् इत्यादौ सस्यैव सतो लुक् प्राप्नोतीत्यतो नास्य न्यायस्योदाहरणं सम्यक् किञ्चिद् विभाव्यते, परमाचार्यैर्धातुपारायणे एवमेवोदाहृतत्वादत्रापि तथैवोदाहारि । **चञ्चलता त्वस्य नेति ।** साहित्ये त्वेतन्न्यायस्य चञ्चलताऽस्त्यपि तत्र सामान्येन शसयोरैक्योक्तेस्तथाहि—

"आदौ धनभवं येन घृतमेघायितं तथा ।
जज्ञे यथोर्वीशस्य-श्रीः श्रीनाभेयः स वः श्रिये" ॥ १ ॥

अत्र हि धान्यार्थसस्यशब्दो दन्त्यादिः, पक्षे उर्वीशस्य राज्ञः ॥ १५ ॥

**ह्रस्व— ॥ नेक्ष्यत इति ।** नन्वस्त्यस्याऽनित्यता, तथाहि—हे बटो३ एहीत्यादौ बटु स् इति स्थिते परत्वान्न प्रथमम्,उतः प्लुतत्वं कृत्वा ततोऽस्य न्यायस्याऽनित्यत्वाद्"ह्रस्वस्य गुणः"॥१।४।४१॥

इति गुणः करिष्यते। मैवम्, आमन्त्र्यमात्रापेक्षत्वेन गुणस्यान्तरङ्गत्वात् प्लुतस्य तु दूरादामन्त्र्यापेक्षत्वेन बहिरङ्गत्वात् 'परादन्तरङ्गम्' इति च न्यायात् पूर्वं ह्रस्वस्यैव भवनात्॥ १६ ॥

**संज्ञो—** ॥ **अर्थो नेति** । ननु यद्येवमर्थः स्यात् तदा किं विनश्येत् ? । उच्यते—काष्ठगृहं युष्मत्पुत्राणामित्यादौ काष्ठशब्दस्य गृहमिति विभक्त्या पदत्वे ततः परस्य युष्मदः स्थाने पुत्राणामिति विभक्त्या सह वसादेशः स्यात्, ददाति नः शास्त्रमित्यादौ च ददातीत्यादेर्विभक्तिसंज्ञत्वेन पदाभावाद् नस् न स्यात्। **तनाद्या इति** । आद्यशब्दात् तरतमयोर्ग्रहः। **केवला एवेति** । यथा पूर्वाह्णे भवः पूर्वाह्णेतनः "पूर्वाह्णापराह्णात्तनट्" ॥६।३।८७॥ इति तनट्, द्वयोः पूर्वाह्णयोर्मध्ये प्रकृष्टे पूर्वाह्णे पूर्वाह्णेतराम् "द्वयोर्विभज्ये च तरप्" ॥ ७।३।६ ॥ इत्यनेन तरप्प्रत्ययः । बहूनां पूर्वाह्णानां मध्ये प्रकृष्टे पूर्वाह्णे पूर्वाह्णेतमाम् " प्रकृष्टे तमप् " ॥७।३।५॥ इत्यनेन तमप् " किन्त्याद्येऽव्ययाद् " ॥ ७।३।८ ॥ इत्यनेन तरप्तमपोरन्तस्य आमादेशः, त्रिष्वपि "कालात् तनतर—" ॥ ३।२।२४ ॥ इत्यनेन सप्तम्या अलुप्च । **इन्नन्तस्य ग्रह इति** । ननु यद्येतन्न्यायस्य दार्ढ्यमेव स्यात् तदाऽपि "नेन्सिद्धस्थे" ॥३।२।२९॥ इत्यत्र इन् प्रत्ययः केवलोऽसंभवादेव ग्रहीतुं न शक्यते, तथाहि—इन्प्रत्ययस्तावद् द्विविधः कृत् तद्धितश्च, तत्र कृद् धातोरेव विधीयते, यथा जयी; तद्धितोऽपि प्रथमान्तादेव, तदस्याऽस्त्यस्मिन्नित्यर्थे स्यात्, यथा दण्डी। ततः सप्तम्यन्तादिनो विधानाऽसंभवात् तदन्ते उत्तरपदे परे सप्तम्या अलुबनेन निषिध्यते, इत्यसम्भव एवाऽत्र तदन्तग्रहणे कारणम्; तथा च न्यायाऽनित्यतायाः किमागतम् ?। सत्यम्, परमेवमप्येतन्न्यायोक्तमवधारणं भग्नमेव, अनित्यतैव चात्र दर्शयितुमुपक्रान्ताऽस्तीत्यतो यथाकथञ्चित् सा दर्श्यत इति न कश्चिद् दोषः ॥ १७ ॥

**ग्रह—** ॥ **समासादिनेति** । आदिशब्दादीषदूनो नडः "नाम्नः प्राग्बहुर्वा" ॥७।३।१२॥ इत्यनेन नडशब्दात् प्राग् बहुप्रत्यये बहुनडस्तस्याऽपत्यं बाहुनडिः, अत्राऽपि नडशब्दस्यान्तभूतत्वादायनण् न स्यादित्याग्रूह्यम्। **इन्द्ररूपावयवप्राधान्यविवक्षयेति** । यः शब्दः सूत्रे नामग्राहमुक्तः स यस्य समासादेः समुदायस्य आद्यावयवभूतोऽन्त्यावयवभूतो वाऽस्ति, तस्य समुदायस्य तदवयवयोगात् तथारूपत्वमेव विवक्ष्यते, यथा शुक्लावयवयोगात् स्तम्भोऽपि शुक्ल इत्युच्यते, ततश्च गवेन्द्रयज्ञ इत्यत्रेन्द्रयज्ञशब्दस्येन्द्ररूपाद्याऽवयवयोगादिन्द्ररूपत्वस्यैव विवक्षया " इन्द्रे " ॥१।२।३०॥ इत्यनेनाऽव आदेशः सिद्धः, सूत्रनडशब्दस्य च नडरूपान्त्यावयवयोगेन नडरूपत्वविवक्षया " नडादिभ्यः " ॥६।१।५३॥ इत्यायनण् प्राप्नोति, इत्येवमन्यत्राप्यवयवप्राधान्यविवक्षा भावनीया। ननु प्राग् 'आद्यन्तवदेकस्मिन' इत्यस्य वृत्तौ गवेन्द्र इत्यत्रेन्द्रशब्दस्याऽनिन्द्रादेरपि 'आद्यन्तवदेकस्मिन्' इति न्यायेन इन्द्रादित्वाविवक्षया अवादेश इत्युचे, तत्कथमत्रावयवप्राधान्यविवक्षयेत्युच्यते ?। उच्यते—"इन्द्रे" ॥१।२।३०॥ इति सूत्रस्य न्यासे एवमुक्तमस्ति यदुत—इन्द्रे इति कोऽर्थः? इन्द्रादौ शब्दे परे इति, तथाच गवेन्द्रयज्ञ इत्यादि सिद्धम्, गवेन्द्र इत्यत्र तु 'आद्यन्तवत्-' इति न्यायादिन्द्रशब्दस्येन्द्रादित्वं कल्प्यत इति, ततश्चायं न्यासकाराऽभिप्राय एव 'आद्यन्तवत्-' इति न्यायस्य वृत्तौ प्रकटितः, इह तु याऽवयवप्राधान्यविवक्षा ऊचे, सा वृत्तिकारस्य सूरेरेवाभिप्रायेण, तेन हि "इन्द्रे" ॥१।२।३०॥ इत्यस्य वृत्तावेवमुक्तं यदुत-इन्द्रे इति कोऽर्थः? इन्द्रस्थे स्वरे परे इति, तथा च गवेन्द्र इति तावत् सिद्ध्यत्येव, गवेन्द्रयज्ञ इत्यत्र च इन्द्रयज्ञशब्दस्थोऽपि इस्वर-इन्द्रस्थ इत्युच्यते, तेनाव आदेशः स्यादिति; इत्थं चावयवप्राधान्यविवक्षैव तत्र वृत्तिकारेणाऽऽदृतेति लक्ष्यते, इहाऽपि चास्माभिर्वृत्तिकाराभिप्रायेण सैवोक्ता, इति न कश्चिद्दोषः। **प्रियसखाविति** । अत्र बहु-

व्रीहिः कार्यः, न तु कर्मधारयः, कर्मधारयस्य तत्पुरुषसंज्ञाया अपि सद्भावेन तत्पुरुषसमासोक्तस्य "राजन्सखेः" ॥७।३।१०६॥ इत्यट्समासान्तस्य प्रसङ्गात् । **अननग्न इति** । 'द्वौ नञौ प्रकृतमर्थं गमयतः' इति न्यायाद् नग्न इत्यर्थः । **अव्युत्पत्तिपक्ष इति** । अयं भावः-न्यञ्चतीति वाक्ये "नेरञ्चेः" ॥ ( उणा-७२४ ) ॥ इत्युः "न्यङ्कूद्गमेघादयः"॥४।१।११२॥ इति कत्वमित्युणादिषु व्युत्पादितोऽपि न्यङ्कुशब्दः 'उणादयोऽव्युत्पन्नानि नामानि' इति न्यायादव्युत्पन्न एवोच्यते, एतन्न्यायनित्यत्वात् तु व्युत्पन्नोऽपि, ततश्च यदाऽव्युत्पत्तिपक्ष आश्रीयते तदा न्यङ्कुशब्दस्य ञ्णित्यणादौ प्रत्यये परे "य्वः पदान्तात्-"॥७।४।५॥ इति प्रागैदागमो न प्राप्नोति, न्यङ्कुशब्दस्याऽखण्डस्याऽव्युत्पादितस्यैव सद्भावेन यकारस्य पदान्तगत्वाभावात्, इत्यतोऽप्राप्ते ऐदागमे विकल्पेन तद्विध्यर्थम् "न्यङ्कोर्वा" ॥७।४।८॥ इति सूत्रं कृतम् । यदा तु व्युत्पत्तिपक्षस्तदा यकारस्य न्युपसर्गसंबन्धित्वेन पदान्तगत्वाद् "य्वः पदान्तात्-"॥७।४।५॥ इत्यनेन यात् प्राग्नित्यमैदागमे प्राप्ते तद्विकल्पार्थं "न्यङ्कोर्वा" ॥७।४।८॥ इति सूत्रं कृतम् । एवं केवलस्य न्यङ्कुशब्दस्य पक्षद्वयेऽपि प्रत्येकं नैयङ्कवं न्याङ्कवमिति द्वैरूप्यं स्यात् । यदि च 'ग्रहणवता नाम्ना न तदादिविधिः' इति न्यायो न स्यात् तदा न्यङ्कुचर्मण इदं न्याङ्कुचर्मणमित्यादौ न्यङ्कुशब्दादिप्रयोगेऽपि व्युत्पत्त्यव्युत्पत्तिपक्षयोरुभयोरपि प्रत्येकं "न्यङ्कोर्वा"॥७।४।८॥ इत्यनेनैव वा ऐदागमे नैयङ्कुचर्मणं न्याङ्कुचर्मणमिति द्वैरूप्यं स्यादेव । एतन्न्यायसद्भावात्तु न्यङ्क्वादिप्रयोगे "न्यङ्कोर्वा" ॥७।४।८॥ इत्यस्य प्रवृत्तिर्न स्यादित्यागतम् । ततश्च न्यङ्कुशब्दस्याऽव्युत्पत्तिपक्षे यकारस्य पदान्तगत्वाभावेन "य्वः पदान्तात्-"॥७।४।५॥ इत्यस्याऽप्रवृत्त्या "वृद्धिः स्वरेष्वा-" ॥७।४।१॥ इत्याद्यस्वरस्य वृद्धौ न्याङ्कुचर्मणमित्येकमेव रूपं स्यात्, न्यङ्कुशब्दस्य व्युत्पत्तिपक्षस्त्विह नाद्रियते,न्यायसत्तासन्देहापादकत्वात्, तथाहि-व्युत्पत्तिपक्षाश्रयणे यकारस्य पदान्तगत्वेन "य्वः पदान्तात्-" ॥७।४।५॥ इत्यैदागमे नैयङ्कुचर्मणमित्यपि रूपभवनेन रूपद्वयस्याऽपि भवनाद् न ज्ञायते एतन्न्यायसद्भावाद् न्यङ्क्वादिप्रयोगे "न्यङ्कोर्वा"॥७।४।८॥ इत्यस्य प्रवृत्तौ निषिद्धायामपि व्युत्पत्त्यव्युत्पत्तिपक्षाभ्यां द्वैरूप्यं जातम्, आहोस्विदेतन्न्यायाभावात् केवलन्यङ्कुशब्द इव न्यङ्कुशब्दादिप्रयोगेऽपि पक्षद्वयेऽपि प्रत्येकं "न्यङ्कोर्वा" ॥७।४।८॥ इत्यस्यैव प्रवृत्त्या द्वैरूप्यं जातमिति । अव्युत्पत्तिपक्षस्यैवाश्रयणे तु यकारस्य पदान्तगत्वाभावेन "य्वः पदान्तात्-" ॥७।४।५॥ इत्यैदागमाभवनाद् "न्यङ्कोर्वा"॥७।४।८॥ इत्यस्य त्वेतन्न्यायनिषिद्धत्वेनाऽप्रवृत्त्या नैयङ्कुचर्मणमिति रूपस्य कथमप्यभवनेन न्याङ्कुचर्मणमित्येकमेव रूपमव्युत्पत्तिपक्षे स्यात्, इत्येवमेतन्न्यायसद्भावः फलेन निश्चिक्ये ॥ १८ ॥

**अनि-** ॥ **प्रयोजयन्तीति** । युजण् संपर्चने प्रयुञ्जत इत्यर्थः ॥ १९ ॥

**गामा-** ॥ **गायतेरेवेति** । ननु "गस्थकः"॥५।१।६६॥ इत्यस्य वृत्तौ गाङोऽग्रहणे इत्थं हेतुर्दर्शितोऽस्ति; तथाहि-शिल्पिनि वाच्ये तावद् गस्थकः स्यात्, गाङः प्रत्यये च शिल्पी न गम्यते इत्यतोऽत्र गायतेरेव ग्रहणम्, न तु गाङ इति । ततः शिल्प्यनभिधानस्यैवात्र गाङोऽग्रहणे हेतुत्वात् प्रकृतन्यायांशाऽनित्यतायाः किमागतम्? तन्नित्यत्वेऽपि शिल्प्यनभिधानहेतुनैव गाङः पुरः प्रत्ययाऽनागमनात् । मैवम्, यतः शिल्प्यनभिधानहेतुना गाङः पुरः प्रत्ययो नायातीति वाक्यस्य तावदयमर्थः 'गाग्रहणेऽविशेषः' इति न्यायांशो विद्यमानोऽपीष्टार्थप्रत्यायनाऽभावहेतुना "गस्थकः"॥५।१।६६॥ इत्यत्राऽप्रवृत्त्या अनित्यो जात इत्युचितमेवेदमनित्यतोदाहरणम् । **ज्ञारूपसाहचर्यादिति** । "प्राज्ञश्च" ॥५।१।

७९॥ इत्यत्र दासंज्ञां प्रत्याग्रहो न कार्यः, इत्येवं रूपमर्थं साधयितुं ज्ञारूपसाहचर्यबलं यदुद्भावितमस्याचार्येण, तत् 'स्वं रूपं शब्दस्य-' इति न्यायस्थेनाऽशब्दसंज्ञेत्यंशेन दासंज्ञानामेव ग्रहणमत्र मा प्रसाङ्क्षीदिति बुद्ध्यैवेति स्वयं ज्ञेयम्। **न तु दासंज्ञां प्रतीति**। दासंज्ञत्वं भवतु मा वा, न कश्चित् तदाग्रहः, केवलं दारूपमवश्यं विलोक्यत एवेति भावः। **षड्भ्योऽपीति**। दीङ्च् क्षये इत्यस्य यबक्ङिति दारूपं सप्तममपि संभवेत्, परं तस्याऽकर्मकत्वात् "प्राज्ज्ञश्च" ॥ ५।१।७९ ॥ इत्यत्र तु कर्मणः परात् पूर्वाद् दारूपाद् ड इत्युक्तत्वाद् न तेनाऽत्रोपयोगः ॥ २० ॥

**श्रुता—** ॥ **अनुमित इति**। ननु वाशब्दः प्रथमं विधेयतया ङीप्रत्ययस्य प्रधानत्वात् तेनैव सह संबध्यते, न त्वौकारेण सह, तस्य ङीसन्नियोगशिष्टतया गौणत्वादिति "मनोरौ च वा"॥२।४।६१॥ इत्यस्य न्यासे 'गौणमुख्ययोः-' इति न्यायस्य बलमुद्भावितम्, ततः प्रकृतन्यायाऽनित्यतायाः किमागतम्?। सत्यम्, परं यद्ययं न्यायः सार्वदिकः स्यात् तदा 'गौणमुख्य-' न्यायं बाधित्वाऽप्येतन्न्यायात् श्रुतेनौकारेणैव सह वाशब्दः समभन्त्स्यत, न त्वनुमितेन ङीप्रत्ययेन। यत्तु अनुमितेन ङीप्रत्ययेन समं समबध्यत, तदेतन्न्यायाऽनित्यत्वादेव। **ङ्यामिति**। ननु कथमत्र दाम्, ङी इत्यस्य स्त्रीलिङ्गत्वाभावात्?। उच्यते—नदीत्यादौ ङ्यन्तसमुदायस्य स्त्रीत्वं दृष्टमित्यतोऽवयवेऽपि समुदायोपचारादत्राऽपि स्त्रीत्वं प्रयुक्तम्, यथा "अस्य ङ्यां लुक्"॥२।४।८६॥ इत्यत्र। **अंशभूत एवेति**। 'निर्दिश्यमानस्यैवादेशाः स्युः' इत्यनेन ह्यादेशा एव नियम्यन्ते, 'श्रुतानुमित-' न्यायस्थविधिशब्देन तु आदेशानादेशरूपाः सर्वेऽपि विधयो नियम्यन्ते, इत्यतः प्रस्तुतन्यायस्यांशभूत एव 'निर्दिश्यमानस्य-' इति न्यायः ॥ २१ ॥

**कृते—** ॥ **विहितेवैति**। न त्वन्या, तेन अचीकरदित्यत्र णौ पूर्वम् "नामिनोऽकलि-"॥४।३।५१॥ इति वृद्धिस्तदन्वयतनीङ्प्रत्ययद्वित्वादिशेषकार्याणि। **ऐयरुरिति**। अत्र प्रथमं "ऋ॒तः शिति" ॥४।१।१२॥ इति द्वित्वे पूर्वस्य ऋतोऽति "पृभृमाहाङामिः"॥४।१।५८॥ इति इः, ततः "धातोरिवर्ण-" ॥२।१।५०॥ इति इयादेशः, पश्चात् "स्वरादेस्तासु"॥४।४।३१॥ इति वृद्धिः। **अध्यैयतेति**। अत्र "धातोरिवर्ण-"॥२।१।५०॥ इतीयादेशे कृते पश्चात् "स्वरादेस्तासु"॥४।४।३१॥ इति वृद्धिः। **अचीकरदिति**। ननु कथमिदमुदाहरणं युक्तम्?, यतोऽयमद् वृद्धिबाध्यो नास्ति। उच्यते—यः स्वरादेर्धातोः प्राक् प्राप्नोति स एवाद् तावद् वृद्धिबाध्यः, स च वृद्ध्यबाधितत्वादेव क्वाऽपि न प्राप्नोति, तेन तद्बाध्योऽद् इति वाक्यं मुख्यार्थे बाधितं सत् समानशब्दवाच्यतया मुख्यार्थस्यासन्नं व्यञ्जनादेर्धातोः प्राग्विधीयमानमटं लक्षयति; स एव चात्र दर्शित इति युक्तमेवेदमुदाहरणम्। अपि च, तद्बाध्य इति विशेषणं साक्षादटि योजितमपि वृद्धिव्यवच्छेदे विश्राम्यति- कथम्? "नामिनोऽकलि-"॥४।३।५१॥इत्याद्युक्ता वृद्धिरिह न ग्राह्या, तस्या अड्बाधकत्वाभावात्, किन्तु "स्वरादेस्तासु"॥४।४।३१॥ इत्युक्तैव, तस्या अड्बाधनायैव विहितत्वात्। **तद्व्यवधाने न किञ्चिद् विनश्यतीति**। ननु अडागमे कृते सति तद्व्यवधानात् प्राकृतषत्व 'निमित्ताभावे-' इति न्यायाद् निवर्तते—उपसर्गधातोरानन्तर्यं हि षत्वस्य निमित्तम्, अटा व्यवधाने च तयोरानन्तर्यं नष्टमिति हेतोः तत्कथमुच्यते न किञ्चिद् विनश्यतीति?। उच्यते— 'आगमोऽनुपघाती' इति न्यायादडागमेन व्यवधानं न स्यात् ॥ २५ ॥

**पूर्वे—** ॥ **आत्वे अग्नान्द्राविति**। नन्वत्र कथमात्वम्; तस्योत्तरपदे परे विधानात्?; इह च पुरो न्द्र इत्यस्य सद्भावात्, तस्य चोत्तरपदत्वाभावात्, सत्यम्, परमवयवे समुदायोपचारात् न्द्र इत्यपि

इन्द्र इत्यखण्डमिव व्यपदिश्यते, यथा युष्मानाचक्षाणाभ्यां युषाभ्यामित्यादौ युष्मदो णिजि "त्र्यन्त्यस्वरादेः ॥७।४।४३॥ इत्यलुकि युष्म इत्यवयवस्य युष्मद्रूपव्यपदेशाद् " युष्मदस्मदोः " ॥२।१।६॥ इति मस्याऽऽत्वम्, एवमग्रे अग्न इत्यस्य पूर्वपदत्वे अन्यत्राऽपि च यथासम्भवं चालनाप्रत्यवस्थाने स्वयमूह्ये ॥ २६ ॥

संज्ञा न-- ॥ संज्ञाऽभिधायकानि सूत्राणीति । " करणं च " ॥ २ । २ । १९ ॥ इति सूत्रस्य न्यासे 'प्रतिकार्यं संज्ञा भिद्यन्ते' इति न्यायस्य व्याख्यैवमस्ति, इत्यतोऽत्राऽपीयमेव व्याख्या भावयित्वा दर्शिता, सरलाध्वना तु अन्याऽपि व्याख्याऽस्ति, तथाहि--वृक्षं प्रति विद्योतते विद्युदित्यत्रवदत्र प्रतिशब्दो लक्षणार्थे, ततोऽयमर्थः--कार्यं लक्ष्यीकृत्य तावद् भिन्नभिन्नाः संज्ञाः क्रियन्ते, अयं भावः--एकस्यैवाऽन्यान्यसंज्ञा यत् क्रियन्ते तत् तत्तत्संज्ञाहेतुकाऽन्यान्यकार्यकरणार्थमेव, यथा वारिशब्दे इकारस्य स्वरसंज्ञासद्भावाद् वारीणामित्यत्र "ह्रोदर्हस्वरस्याऽ-"॥१।३।३१॥ इत्यनेन द्वे रूपे नाऽभूताम्, तत्राऽर्हस्वरस्येति स्वरवर्जनात्, ह्रस्वसंज्ञासद्भावाच्च "ह्रस्वापश्च"॥१।४।३२॥ इत्यनेनाऽऽमो नाम्, समानसंज्ञासद्भावाच्च "दीर्घो नाम्यतिसृ-"॥१।४।४७॥इत्यनेन दीर्घः, नामिसंज्ञासद्भावाच्च हे वारे!, हे वारि! इत्यत्र " नामिनो लुग्वा "॥१।४।६१॥ इत्यनेनामन्त्र्यसेर्लुग्विकल्प इत्यादि । यदि तु अन्यान्यसंज्ञाहेतुकमन्यान्यकार्यं चिकीर्षितं न सिध्येत् तदा किमर्थमन्यान्यसंज्ञाः क्रियन्ते ? ततोऽत्राऽप्यक्षान् दीव्यतीति द्वितीयाप्रयोगो यदि न स्यादेव किन्तु स्पर्द्धे परत्वात् तृतीयाप्रयोग एव यदि स्यात् तदा "करणं च" ॥२।२।१९॥ इति सूत्रेण दिवः करणस्य सर्वत्र कर्मकरणसंज्ञाद्वयं किमर्थमाचार्यः कुर्यात्? । अतः सार्वत्रिकस्य कर्मकरणसंज्ञाद्वयस्य विधानादेवं ज्ञायते--करणसंज्ञाहेतुकतृतीयावदेकवारं कर्मसंज्ञाहेतुकाऽक्षान् दीव्यतीति द्वितीयाऽपि स्यादेव, न तु स्पर्द्धे परत्वहेतुकस्तृतीयया तस्या बाध एव स्यात्, कर्मसंज्ञाविधानस्य द्वितीयाभवनस्यैव मुख्यप्रयोजनत्वात् ॥ २७ ॥

सापे-- ॥ समासादीति । अत्रादिशब्दादाख्यातकृद्वृत्त्यादिग्रहः, तेन महान्तं पुत्रमिच्छतीत्यत्र महान्तं पुत्रीयतीति क्यन् न स्यात्, महान्तं कुम्भं करोतीत्यत्र महान्तं कुम्भकार इत्यण् न स्यादित्याद्यप्युदाहार्यम् । यत्नान्तरेति । ननु कृत एवाऽस्ति यत्नः " समर्थः पदविधिः " ॥७।४।१२२॥ इति । सत्यम्, परं तस्यैव प्रपञ्चोऽयं न्यायः, इत्यतो नासौ यत्नान्तरमुच्यते ॥ २८ ॥

प्रधा-- ॥ किं हि वचनादिति । वचनमिष्टार्थप्रत्यायनं तद्भवनाभवनापेक्षयैव हि अस्योत्तरस्य च न्यायस्योदाहरणप्रत्युदाहरणेषु समासस्य तद्धितीयभावप्रत्ययस्य च भवनाभवने संजाते स्तः, इत्यतः किं हि वचनादित्यस्यैव प्रपञ्चाविमौ ॥ २९ ॥

तद्धि-- ॥ काकस्य कार्ष्ण्यमित्यादि । ननु कृष्णस्य भावः कार्ष्ण्यमिति सामान्येन निष्पाद्य पश्चाद् विशेषप्रतीत्यर्थं काकस्येत्यनेन योजयिष्यते, तथा च कैतन्न्यायावकाशः? । उच्यते--कृष्णस्येत्यत्र कृष्णशब्दो गुणवाची गुणाङ्गवाची वा त्वयेष्यते ?, यदि कृष्णाख्यस्य वर्णस्य भाव इति गुणवाची तदा ट्यण् न प्राप्नोति गुणाङ्गतस्तद्विधानात्, यदि तु कृष्णगुणयोगाद् यः कृष्णो गुणी तस्य भाव इति गुणाङ्गवाची तदा कृष्णस्येत्यस्य विशेषणत्वमापन्नम्, विशेषणाच्च या षष्ठी सा विशेष्यषष्ठीत एवोत्पद्यते न त्वन्यतः, तथा च प्रथमतोऽपि काकस्येति विशेष्यं षष्ठ्यन्तमस्ति तदपेक्षाऽपि च कृष्णस्येति शब्दस्याऽस्तीत्यवश्यमङ्गीकार्यम्, सापेक्षत्वेऽपि च यत्तद्धितप्रत्ययोत्पत्तिस्तदेतन्न्या-

यादेवेति स्पष्ट एवैतन्न्यायावकाशः । **पुरुषशब्दादिति** । अत्र सूत्रे हृदयशब्दः सन्नप्युपेक्ष्य मुक्तः, पुरुषशब्देनैव कार्यसिद्धेः । **परमपुरुषत्वमिति** । अत्र परमस्य पुरुषस्य भाव इति तावत् समासादर्वागवस्था, तदानीं च भावपदापेक्षया परमपुरुषशब्दाभ्यां षष्ठ्यौ, इत्यतः परमपुरुषशब्दयोः सामानाधिकरण्यसद्भावात् "सन्महत्परमोत्तमोत्कृष्टं पूजायाम्" ॥३।१।१०७॥ इत्यनेन कर्मधारयः प्राप्नोति, परं त्वप्रत्यये समानीते सति "प्रत्ययः प्रकृत्यादेः"॥७।४।११५॥ इति परिभाषया त्वप्रत्ययः पुरुषशब्दसंबन्ध्येव जातः, तस्मादेव विहितत्वात् । ततश्च परमशब्दस्य भावशब्दसंबन्धषष्ठ्यन्तस्य पुरुषत्वेत्यनेन सह सामानाधिकरण्याभावात् कर्मधारयस्याऽप्राप्त्या "षष्ठ्ययत्नाच्छेषे" ॥३।१।७६॥ इति षष्ठीतत्पुरुष एवाऽभूत्,एवं परमपौरुषमित्यस्मिन्नसाधुरूपेऽपि वाच्यम्, यतोऽत्र त्वप्रत्ययवदणोऽपि पुरुषशब्दस्यैव संबन्धित्वात्, तस्यैव वृद्धिर्जाता। यदि त्वत्राऽपि परमपुरुषशब्दयोः सामानाधिकरण्यहेतुना कर्मधारयसमासो जातोऽभविष्यत् तदा परमपुरुषशब्दादणि "प्रत्ययः प्रकृत्यादेः" ॥७।४।११५॥ इति परिभाषयाऽणः परमपुरुषशब्दस्यैव संबन्धित्वात् तस्यैवाऽऽद्यस्वरस्यैव वृद्धौ पारमपुरुषमिति रूपं दर्शितमभविष्यदिति । ननु परमपौरुषमिति रूपस्याऽसाधुत्वात् तच्चिन्ता कर्तुं न युज्यते। सत्यम्, परमस्मिन्नसाधुन्यपि रूपे कर्मधारयभवनाऽभवनस्य फलं दर्शयितुं शक्यते, परमपुरुषत्वमित्यस्मिंस्तु न शक्यते, अतोऽस्याऽसाधुनोऽपि चिन्ता कृता ॥ ३० ॥

**गति--** ॥ **विकिरति पक्षावितीति** । अर्थकथनमात्रमिदम्, यतो नात्र राज्ञः पुरुष इत्यादाविवाऽसमस्तपददर्शनरूपं वाक्यं कर्तुं शक्यते, नित्यसमासत्वात्; एवमग्रेऽपि, चर्मणा क्रियते स्म, कच्छं पिबति, विषं धरतीत्येतानि अर्थकथनमात्ररूपाण्येवेति वाच्यम् । **स्किर इति स्थिते इति** । ननु यथाऽन्तरङ्गत्वात् स्सट् प्रथममायाति तथा तस्य षत्वमप्यन्तरङ्गत्वात् प्रथममेव भावि, ततः ष्किर इति स्थिते इति किं नोक्तम्?। उच्यते—समासरूपे परविधौ कर्तव्ये "षणमसत्—"॥२।१।६०॥ इति वचनात् षत्वशास्त्रस्याऽसत्त्वेनाऽप्रवृत्तेर्न तदानीं षत्वम् । **आपः प्राप्ताविति** । ननु यथा समासादर्वागवस्थायां स्किरेत्यस्याग्रे आपः प्रसङ्ग उद्भाव्यमानोऽस्ति, तथा तदैव तत्र ङीरेव कस्माद् नायाति?।उच्यते—विष्किरीत्यत्र जातिवाचित्वे ङीरुक्तः, जातिवाचित्वं च पदद्वयसमुदायमिलनादनु एव स्यात्, समुदायमिलनं च समासभवनादनु एव, इत्यतोऽसमासादर्वागवस्थायां स्किराग्रे अदन्तत्वमात्रापेक्षस्य आप एव प्राप्तिर्न तु ङ्याः, एवं कच्छपीविषधरीशब्दयोरपि वाच्यम्, चर्मक्रीतीत्यत्र च क्रीतस्य करणादित्वं समासभवनादनु एव स्यादित्यतः "क्रीतात् करणादेः" ॥ २।४।४४ ॥ इत्यनेन ङीरपि तदैव प्राप्नोति, नतु समासादर्वागवस्थायाम् । आप्प्रत्यय एव तु तदानीं प्राप्नोति, सामान्यविहितत्वादिति; अपि च "ङस्युक्तं कृता" ॥३।१।४९॥ इत्यस्य वृत्तौ आचार्यैः प्रष्ठीति गत्युदाहरणं दर्शितम्, तथाहि—प्रतिष्ठते इति प्रष्ठोऽग्रयायी तस्य भार्या प्रष्ठी "धवाद्योगादपालकान्तात्" ॥ २।४।५९ ॥ इति ङीः, अत्र गतिसंज्ञस्य प्रस्य स्थेत्यनेन सह 'गतिकारक'—इति न्यायेन विभक्त्युत्पत्तेः प्रागेव समासः। यदि तु समासात् प्राग् विभक्त्युत्पत्तिरिष्यते तदा वृत्त्युक्तयुक्त्याऽन्तरङ्गत्वाद्विभक्तेः प्रागेव आपः प्राप्तेस्तदनु चाऽदन्तत्वाऽभवनाद् ङीर्न स्यादिति, परं प्रष्ठीत्येतद् यथा गत्युदाहरणं स्यात् तथा प्रष्ठ इत्यस्य "उपसर्गादातो डोऽश्यः" ॥५।१।५६॥ इति डप्रत्ययान्तत्वात्तत्र चोपसर्गादिति पदेनोक्तस्य प्रस्य ङस्युक्तस्यैव सद्भावाद् ङस्युक्तोदाहरणमपीदं स्यात् । इत्यतोऽस्माभिर्विष्किरीत्यसाधारणं गत्युदाहरणमूचे । **पञ्चम्यन्तेनेति** । 'प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम्,इति न्यायात् प-

ञ्चम्यन्तेनेत्युक्त्या पञ्चम्यन्ताद् यः स्वार्थिकस्तत्प्रत्ययो विहितस्तदन्तमपि ङस्युक्तमिह ग्राह्यं यथा "यत्कर्मस्पर्शात्कर्त्रङ्गसुखं ततः"॥५।३।१२५॥ इत्यत्र "किमद्व्यादिसर्वाद्यवैपुल्यबह्वोः पित्तस्"॥७।२।८९॥ इति तस्प्रत्ययान्तं तत इति पदम्। अस्य सूत्रस्याऽर्थः—येन कर्मणा स्पृश्यमानस्य कर्तुरङ्गस्य सुखं जायते तस्मात्कर्मणः पराद् धातोः क्लीबे भावेऽर्थेऽनट् स्यात्, यथा पयःपानं सुखम्, ओदनभोजनं सुखम्, अत्र पयःशब्दस्य तत इति ङस्युक्तत्वेनैतन्न्यायादविभक्त्यन्तेनैव पानशब्देन सह "ङस्युक्तं कृता" ॥३।१।४९॥ इत्यनेन समासः, तेनाऽत्र पयसः पानसुखमिति वाक्यं न स्यात् यदि तु विभक्त्यन्तेन पानेत्यनेन समास इष्यते तदा समासतद्धितानां वृत्तिर्विकल्पेनेति न्यायाद् वाक्यमपि प्रसज्येतैव ॥ ३१ ॥

समा--॥वृत्तिस्तावत् त्रेधेति । चतुर्थी कृद्वृत्तिरप्यस्ति, यथा कुम्भकार इत्यादि, परं तत्र "ङस्युक्तं कृता" ॥३।१।४९॥ इति समाससद्भावात् समासवृत्तावेवान्तर्भूता । स्वार्थाऽतिरिक्तस्येति । अयं भावः—योऽर्थो राजपुरुष इति समस्तपदेन राजसम्बन्धविशिष्टपुरुषलक्षणोऽभिधीयते नासावेतत्पदद्वयेन स्वतन्त्रस्वार्थमात्राभिधायिना वक्तुं शक्यते, न खलु दण्डचक्रचीवरादिसामग्रीसाध्यो घटः केवलैर्दण्डादिभिः कर्तुं पार्यते इति । एवं तद्धितवृत्त्यादिष्वपि स्वार्थातिरिक्तार्थाऽभिधायित्वं भाव्यम् । तस्याऽनुज्ञेति । वाक्यस्याऽनुज्ञा, इयं च समासवृत्त्यपेक्षया ज्ञेयम्। तद्धितवृत्त्यपेक्षया त्वनेकविकल्पकथनेन वाक्यस्य कृद्वृत्तेश्चानुज्ञा क्रियते । तेन सुखाकर इत्यत्र "प्रियसुखादानुकूल्ये" ॥७।२।१४०॥ इति डाच्प्रत्ययरूपायास्तद्धितवृत्तेर्विकल्पपक्षे एतन्न्यायेन सुखं करोतीति वाक्यं यथा स्यात् तथा "हेतुतच्छीला-"॥५।१।१०३॥ इति टे सुखकर इति कृद्वृत्तिरपि । कायस्य पूर्वोऽश इति । ननु पूर्वोऽशः कायस्येति वक्तुं युक्तं कथमन्यथा समासे पूर्वशब्दस्य प्राक्पातः ?। मैवम् "पूर्वापराधरो–"॥७।२।९८॥ इति सूत्रे प्रथमोक्तत्वेनैव तत्प्राक्पातसिद्धेः ॥ ३२ ॥

आद्-- ॥ दशन्शब्दस्येति । सूत्रे दशभ्य इति बहुवचनं तु वाच्यवाचकयोरभेदोपचारात् । न तु घटानामिति । यदि आदशभ्यः संख्या संख्यानेऽवर्त्स्यत् तदा संख्यायाः संख्येयेन सह वैयधिकरण्यात् संबन्धषष्ठ्यां घटानामिति प्रायोक्ष्यतेति भावः । आसन्ना दशेति । अत्र दशन्शब्दः संख्याने वर्त्तते, अत एव दशसंख्येति पर्यायः, बहुवचनं तु संख्येयेन सहाऽभेदोपचारात्। ननु यद्यत्र दशन्शब्दः संख्यानार्थेऽस्ति तदा येषामित्यस्य यस्या नवेत्येकादशेति वा संख्याया इत्येवाऽर्थ आगतः, यतो दशेति संख्या नवेत्येकादशेति वा संख्याया एवाऽऽसन्ना सम्भवति, सजातीयत्वात्, ननु नवानामेकादशानां वा संख्येयानाम्; तथा च कथं येषामित्यत्र बहुवचनम्, नवेत्येकादशेति वा संख्याया एकत्वात्?। उच्यते—येषामित्यनेन नवेत्येकादशेति वा संख्यैवोच्यते, परं संख्यासंख्यावतोरभेदोपचाराद् बहुवचनम्। ननु यदि येषामित्यनेन संख्यैवोच्यते, तर्हि समासः कथम्?, यतः संख्येये वाच्ये स विहितोऽस्ति, इह च सख्येयं वाच्यं नास्ति । मैवम्, संख्याया वाच्यत्वे सत्यपि प्राग्वदत्राऽपि संख्यासंख्यावतोरभेदोपचारादेव संख्येयस्य वाच्यत्वोपपत्तेः। ननु भवत्वेवम्, परं यद्यत्र दशन्शब्दस्य दशसंख्येत्यर्थो न स्यात् तदा किं विनश्येत्?, उच्यते—यद्यत्र दशसंख्येतिसंख्यानवृत्तिदशन्शब्देन वाक्यं न क्रियते, किन्तु संख्येयवृत्तिदशन्शब्देन क्रियते, तदा आसन्ना दश येषामिति कोऽर्थः? दशसंख्येयपदार्था येषां नवानामेकादशानां वा संख्येयानामासन्नाः सन्ति ते आसन्नदशाः एतावतैकोनविंशतिरेकविंशतिर्वा ते पदार्था इत्यर्थप्रतीतिः स्यात्, तथा च नवैकादश वेति पर्यायो लक्षणबृहद्वृत्त्युक्तो

विघटेत, ततो दशसंख्येत्येवार्थोऽवश्यं वाच्यः। ननु संख्येयवर्तिदशन्शब्दपक्षेऽपि आसन्ना दशेति दश- संख्याविशिष्टवस्तुनि यस्यैकस्य ययोर्द्वयोर्येषां वा त्र्यादीनां संख्येयानामिति वाक्यं यदि क्रियते तदा आसन्नदशशब्देन एकादशद्वादशादयोऽपि प्रतीयन्ते, तत्कथमेकोनविंशतिरेकविंशतिर्वेत्येव संख्येय- प्रतीतिः स्यादित्युक्तम् ?। उच्यते-यदि कस्मिन्नपि क्षेत्रे दश घटादीन् न्यस्य तदासन्नं वैकं द्वौ त्र्यादीन् वा घटादीन् न्यस्य तदनुवाक्यं क्रियते यथा आसन्ना दश संख्येयपदार्था यस्यैकस्य संख्येयपदार्थस्य, ययोर्वा द्वयोः संख्येयपदार्थयोः, येषां वा त्र्यादीनां संख्येयपदार्थानामित्यनया रीत्या क्षेत्रापेक्षया दशव- स्तूनामासन्नत्वं विवक्षितं स्यात् तदैकादशादीनामपि प्रतीतिः स्यात्; अत्र तु संख्याऽपेक्षया आसन्नत्वं विवक्षितं ततश्च दशसंख्येयानां नवैकादश वा संख्येयानि यथा आसन्नसंख्यावत्त्वेन संख्याऽपेक्षया आसन्नानि, न तथा एकादीनीति युक्तमेवोक्तमेकोनविंशतिरित्यादि ॥ ३४ ॥

**णौ य-** ॥ **वर्णो वर्णसमुदायो वेति** । पुस्फारयिषतीत्यत्र णिनिमित्तकृतकार्यस्य आत्व- रूपस्याऽऽधारभूतः स्फा इति वर्णः, जिजावयिषतीत्यत्र तु णिनिमित्तकृतकार्यस्य वृद्ध्यावादेशरूपस्या- ऽऽधारभूतो जाव् इति वर्णसमुदायः, एवमन्यत्राऽपि व्यक्तिः कार्या । णिचिति 'निरनुबन्धग्रहणे सा- मान्येन'-इति न्यायाद् णाविति णिङ्यपि ग्राह्यः । **अनित्यत्वप्रपञ्चभूता इति** । एष्वेकादशसु न्यायेषु 'द्विर्बद्धं'-इति न्यायो यथा 'सर्वं वाक्यं'-इति न्यायस्याऽनित्यत्वप्रपञ्चभूतः, तथा सर्वं वाक्यमित्यस्यैव वृत्तावनित्यतोक्त्यवसरे दर्शयिष्यते । शेषाणां तु दशानां 'सर्वं वाक्यम्'-इत्यस्याऽनित्यत्वप्रपञ्चभूतत्वं स्फुटमेव सर्वैरपि तैर्व्याकरणोक्ततत्तद्विधिवाक्यानामनवधारणत्वस्यैव प्रख्याप्यमानत्वात् ॥३५॥

**द्विर्ब-** ॥ **निषेद्धुं क्षमेतेति** । निषेधने इति निषेद्धुं समर्थार्थधातुयोगे " शकधृषज्ञारभ- लभसहार्हग्लाघटाऽस्तिसमर्थार्थे च तुम् " ॥५।४।९०॥ इत्यनेन तुम्, न तु भोक्तुं यातीत्यत्रवत् " क्रियायां क्रियार्थायां तुम्णकच्भविष्यन्ती " ॥५।३।१३॥ इत्यनेन तुम्, भविष्यदर्थक्रियार्थक्रियाया- उपपदत्वाभावात्, अयं भावः-भोक्तुं यातीत्यत्र भुजिक्रिया भविष्यदर्था, तदर्था च गमिक्रिया, तस्या- मुपपदभूतायां भुजिधातोस्तुम्, इह तु तथा नास्ति, तेन "क्रियायां क्रियार्थायाम्-" ॥ ५।३।१३ ॥ इत्यनेन तुमोऽप्राप्तेः " शकधृष-" ॥ ५।४।९० ॥ इत्यनेन तुम् । **केषाञ्चिन्मते इति** । ननु यदि परमतेऽयं न्यायोऽनित्यस्तदा सूरिमतस्य किमागतम् ? इत्याशङ्कायामाह-**तदपि चेत्यादि**। अयं भावः- यदि दन्दंशीतीति प्रयोगः सूरेरनिष्टः स्यात् तदा दूषितोऽभविष्यत्, यदि तु न दूषितस्तदा ज्ञायते सूरे- रपि इष्ट एवेति, तथा च सूरिणैव दन्दशीतीत्यत्र नकारलोपो द्विर्बद्धस्तन्मते एव दन्दंशीतीत्यपि प्रयोगस्ये- ष्टत्वादबद्धोऽपि जात इति न किञ्चिदसमञ्जसम् ॥ ३६ ॥

**आत्म-** ॥ **क्लीबदिति** । क्लीबृङ् इत्यस्य प्रयोगोऽयम्, क्लीबशब्दस्य वा "कर्तुः क्विप् ग- ल्भक्लीबहोडात्तु ङित्"॥३।४।२५॥ इत्यनेन ङिदाचारक्विबन्तस्य, तत आत्मनेपदाऽनित्यत्वाच्छतृः॥३७॥

**क्विपि-** ॥ **लुप्तेऽपि व्यञ्जनादाविति** । सूरिमते तु " ईर्व्यञ्जनेऽयपि " ॥ ४।३।९७ ॥ इत्यत्र व्यञ्जनग्रहणस्य साक्षाद् व्यञ्जनप्रतिपत्त्यर्थत्वाल्लुप्ते व्यञ्जनादौ प्रत्यये ईत्वं न प्राप्नो- तीति भावः ॥ ३८ ॥

**स्थानि-** ॥ **तदतदात्मकमिति** । तच्च अतच्च तदते, तदते आत्मा यस्य तत्तदतदात्मकं तत्त्वं वस्तुस्वरूपमातिष्ठन्ते प्रतिजानते "प्रतिज्ञायाम्" ॥३।३।६५॥ इत्यनेनात्मनेपदम्, तच्छब्दस्य

सर्वनामत्वादत्र तच्छब्देन सत्त्वं, नित्यत्वं, सामान्यात्मकत्वम्, अभिलाप्यत्वं च परामृश्यते, अतच्छब्देन त्वसत्त्वम्, अनित्यत्वं, विशेषात्मकत्वम्, अनभिलाप्यत्वं च । एतेन सर्ववस्तूनां सत्त्वनित्यत्वादिधर्मेषु स्याद्वादं प्रतिजानते जैना इत्यर्थः । **त्यदादिरिति** । अस्य सूत्रस्याऽर्थः—त्यदादिशब्देनाऽन्येन च द्वन्द्वे क्रियमाणे त्यदादिशब्द एवैकः शिष्यते, अन्यस्तु लुप्यते, यथा स च चैत्रश्च तौ, यश्च चैत्रश्च यौ, अत्र च तच्छब्दस्त्यदादिसम्बन्धी, अतच्छब्दस्त्वन्यः, ततस्तच्छब्दस्य शेषत्वप्राप्तिः ॥ ३९ ॥

**अनित्यो णि--** ॥ **विशेषविधित्वादिति** । सर्वत्राऽपि विशेषेण सामान्यं बाध्यते, न तु सामान्येन विशेषः, इति न्यायादित्यर्थः । इह चाऽङ् सामान्यविधिः, तस्य ऋदितामुक्तत्वात्, ङस्तु विशेषविधिः ऋदित्त्वे सत्यपि ण्यन्तत्वविशेषसद्भावे तस्य प्रवृत्तेः । **नियत एवेति** । एतन्न्यायेन हि चौरादिकसर्वधातूनां सर्वविभक्तिषु न नियतमेव द्वैरूप्यं सिद्धयति, अनित्यत्वस्य प्रयोगाऽनुसारित्वात् "युजादेर्नवा" ॥३।४।१८॥ इत्यनेन तु यौजादिकसर्वधातूनां सर्वविभक्तिषु नियतमेव द्वैरूप्यं साध्यते, इति व्यक्तमेवाऽनित्यत्वम् ॥ ४० ॥

**णिलो--** ॥ **मघव इति** ।

"न यमेन न जातवेदसा न कुबेरेण न वज्रपाणिना ।
मघवो युधि सुप्रकम्पयाः श्वसनेनैव वसुन्धरापते !" ॥ १ ॥

दुःस्वीषद्भ्यः पराद्धातोः खल् इत्युक्तेऽपि 'उपसर्गो न व्यवधायी' इति न्यायात् प्रेण व्यवधानाऽभवनात् सुप्रकम्पया इत्यत्र "दुःस्वीषतः"– ॥५।३।१३९॥ इत्यनेन खल् । **चिन्तापूजादिशब्दानामिति** । सिद्धावित्यत्र संटङ्कः । **अङ्विधानमिति** । यदि हि अप्रत्ययविधानेनाऽपि कार्यं सिद्धयति तदा अङ् किमर्थं विधीयेत ?, ङित्करणस्य प्रयोजनाऽभावादिति भावः ॥ ४१ ॥

**णिचूसं--** ॥ **ई च गण इति सूत्ररचनमिति** । नन्वेतन्न्यायज्ञप्तिप्रयोजनं यदि नाऽभविष्यत् तदाऽपि मात्रालाघवार्थम्, ई च गण इत्येव सूत्रमरचयिष्यत, ततः कथमिदमेतन्न्यायज्ञापकं युक्तम्?। उच्यते—ई चेति कृते यद्यपि मात्रालाघवं किञ्चित् स्यात्, परं प्रक्रियाया भृशं गौरवं जायते, तथाहि—प्रथमं तावच्चकारेणाऽकारो बलादनुकृष्यते, तदनु ईकारोऽकारश्च द्वयं विधेयतया निर्दिश्यते इति, ई वा इति कृते तु प्रक्रियालाघवम्, कथम्?—अनुकर्षणीयं तावत् किमपि न विधेयम्, ईत्वमेवैकम्, पक्षे तु यथाप्राप्तस्याऽनुज्ञेति । मात्रालाघवाच्च प्रक्रियालाघवं गरीय इति सर्वेषां प्रतीतमेव, ततश्च प्रक्रियागौरवं भवदनपेक्ष्याऽपि यत् ई चेति कृतं तदेतन्न्यायज्ञप्त्यर्थमेव ॥ ४२ ॥

**धात--** ॥ **प्रतिष्ठत इत्यादि** । आद्ययोर्गच्छतीत्यर्थः, तृतीयस्य तु विस्मरतीत्यर्थः ॥४३॥

**नाम्नां--** ॥ वडवादिशब्दत्रयस्य पृषोदरादित्वादुणादिप्रत्ययैश्च साधनिका दर्शिता, सूर्यशब्दस्य तु कृत्तद्धिताभ्यामिति विशेषः ॥ ४५ ॥

**उणा--** ॥ **दशत इति** । दश मानमस्य वर्गस्येति दशत् "पञ्चद्दशद्वर्गे वा" ॥६।४।१७५॥ इत्यनेनाऽत्प्रत्ययः "नोऽपदस्य-" ॥७।४।६१॥ इत्यन्लोपे जसि च सिद्धम् ॥ ४६ ॥

**क्विबं--** ॥ **उपचारादिति** । उपचारो हि लक्षणातो न भिद्यते, इत्यतः पूर्वदर्शितं 'मुख्यार्थबाधे' इत्यादिकं लक्षणाया लक्षणमत्राऽप्युद्भाव्यते, तथाहि— क्विबन्तानां शब्दत्वमात्रस्यैतन्न्यायं विनाऽपि सिद्धत्वात् तत्रैतन्न्यायप्रवृत्तेरानर्थक्याच्छब्दत्वशब्दस्य मुख्याऽर्थबाधः, शब्दत्वनामत्वयोश्च सामान्य-

विशेषभावसम्बन्धसद्भावाद् मुख्यार्थस्य शब्दत्वरूपस्य नामत्वमासन्नम्, ततः स्याद्युत्पत्तिप्रयोजनात् शब्दत्वशब्देन नामत्वमुपचर्यते लक्ष्यत इत्यर्थः ॥ ४८ ॥

उभ-- ॥ चतुर्थान्तत्वसद्भावादिति । ननु दद्ध्व इत्यत्र धातोर्धस्य "अदीर्घाद् विरामै-" ॥१।३।३२॥ इति द्वित्वे कृतेऽप्याद्यधस्य "तृतीयस्तृतीयचतुर्थे" ॥१।३।४९॥ इति दत्वभवनात् कथं धातोश्चतुर्थान्तत्वम्?, तदभावे च कथमादिचतुर्थत्वप्राप्तिः ?। उच्यते—"तृतीयस्तृतीय-" ॥१।३।४९॥ इत्यत्राऽन्वित्यधिकारसद्भावाद् न तावता धस्य दः स्यात् ॥ ४९ ॥

अव-- ॥ इङित्त्वहेतुकमिति । अनेनेदं सूचितं कुस्म्यादीनां गित्त्वात् फलवत्कर्तरि यदात्मनेपदं प्राप्तं तत् स्यादपीति ॥ ५० ॥

येन-- ॥ उपसर्गसंज्ञस्याऽनुपसर्गसंज्ञस्य चेति । इदं प्रादिगणस्य प्रकारद्वयमेतन्न्यायसद्भावं मनसिकृत्योक्तम्, एतन्न्यायाऽभावे तु इहोपसर्गसंज्ञाः प्रादयः, इह चाऽनुपसर्गसंज्ञा इति विभागो न स्यादेव ॥ ५१ ॥

यत्रो-- ॥ न ह्यत्र कथमपीत्यादि । इदमध्वापेक्षयोक्तम्, अन्यथा प्रगतोऽध्वानमिति वाक्यावस्थायां गमिधातोरपेक्षयोपसर्गत्वं सम्भवत्यपि, परं तदाप्यध्वापेक्षयाऽनुपसर्गत्वमेवेति, अतः कथमप्युपसर्गत्वं न सम्भवतीत्युक्तम् । ध्वानिकेति । ध्वनेरत्र बोधार्थत्वात्, शब्दार्थे एव चास्य घटादित्वाद् णौ "घटादेः-" ॥४।२।२४॥ इति ह्रस्वो न ॥ ५२ ॥

शीला--॥ अलङ्करिष्णुरिति । अलङ्करणशीलोऽलङ्करणधर्मा साध्वलङ्करोतीति वा वाक्यम् ॥ ५३ ॥

त्यादि-- ॥ यथास्वकालमिति । सामान्येन भूते काले वाच्ये "अद्यतनी" ॥५।२।४॥ इति सूत्रेणाऽद्यतनी, तस्मिन्नेव अनद्यतनत्वविशिष्टे "अनद्यतने ह्यस्तनी" ॥ ५।२।७ ॥ इत्यनेन ह्यस्तनी इत्यादिरीत्या यथास्वकालमित्यस्य भावना कार्या ॥ ५४ ॥

स्त्रीख-- ॥ क्त्यादय इति । क्तिः, क्यप्, शः, यः, अः, अङ्, अनः, क्विप्, ञः, अनिः, इञ्, णकश्चेति द्वादश प्रत्ययाः स्त्र्युक्ताः । पलाशशातन इति । अत्र शदेर्णौ- "शदिरगतौ शात्" ॥ ४ । २ । २३ ॥ इति कृतशादाऽऽदेशस्य ण्यन्तत्वाद् ईदन्तत्वेन "युवर्ण-" ॥५।३।२८॥ इत्यलः प्राप्तिः । दुर्भेदेति । क्त्यादिस्त्रीप्रत्ययस्य भावे कर्तृवर्जकारके च विधानादत्र कर्मणि क्तिप्राप्तिः । सक्तुधानीति । अत्राऽऽधारार्थे क्तिप्राप्तिः। जय इति । इदमाद्येंशे स्त्रीखलना अलो बाधका इति रूपे स्त्रीप्रत्ययमाश्रित्याऽनित्यतोदाहरणं ज्ञेयम्, शिरोऽर्तिरिति तु द्वितीयेंशे स्त्रियाः खलनाविति रूपेऽनप्रत्ययमाश्रित्य, एवं शेषप्रत्ययाऽपेक्षयाऽपि यथासम्भवमुदाहार्यम् । ननु शिरोऽर्तिरित्यत्र बहुलाधिकाराद् अन्यप्रत्ययान् बाधित्वा क्तिरेवेत्युक्तमस्ति "नाम्नि पुंसि च" ॥५।३।१२१॥ इत्यस्य वृत्तौ; ततः प्रकृतन्यायाऽनित्यतायाः किमागतम् ?। उच्यते—बहुलाऽधिकारेण तावत् प्रथमं यद्येतन्न्यायस्याऽनित्यता साधिता तदा क्तिप्रत्ययेन निर्विघ्नमत्राऽऽगन्तुं शेके, अन्यथा तु बाहुलके सत्यपि एतन्न्यायविघ्नितोऽसौ कथमत्रागन्तुमीष्टे ?। तदेवमनन्तरं कारणं कः प्रकृतन्यायाऽनित्यतैव, बाहुलकं तु परम्पराकारणम्, इतीह तन्न विवक्षितम् ॥ ५५ ॥

**याव--** ॥ यावत्तावच्छब्दौ संभवविधिक्रिययोर्विशेषणे, अन्यथा तु यावांस्तावानिति स्यात् । **चेतुमिच्छतीति** । चयनमिच्छतीत्यर्थः, अत्राऽपि इच्छार्थधातुयोगे "शकधृष"– ॥ ५।४।९० ॥ इत्यनेन तुम्, न तु "क्रियायां क्रियार्थायां-"॥५।३।१३॥ इत्यनेन, भोक्तुं यातीत्यादाविव भविष्यदर्थक्रियार्थायाः क्रियाया उपपदत्वाऽभावात् ॥ ५६ ॥

**सम्भ--** ॥ **द्वित्वव्यभिचाराभावेऽपीति** । असम्भवेऽपि विशेषणप्रयोगस्तर्कादौ संभवति, यथाऽनुष्णोऽग्निरित्यादि, परं तदत्रानधिकृतत्वाद् न दर्शितम् ॥ ५७ ॥

**सर्वे--** ॥ **स्याच्च न स्याच्चेति** । यथा हे चैत्र इहासीत भवानित्युक्ते कामचारोऽपि प्रतीयते, ततश्च यथारुचि स तत्राऽऽस्ते नवा, एवमत्राऽपि । **ह्रस्वः स्यादित्यप्युक्ते इति** । यद्यपि हैमलक्षणबृहद्वृत्तौ सर्वसूत्रव्याख्यासु भवतीति वर्तमानान्तमेव क्रियापदमस्ति, तथाऽपि तल्लघुवृत्तौ सर्वत्र स्यादिति सप्तम्यन्तक्रियैव प्रयुक्ताऽस्ति, तदपेक्षयाऽत्र ह्रस्वः स्यादित्यप्युक्ते इत्याद्युक्तम् । न च काकलकायस्थकृतलक्षणलघुवृत्तिस्थः सप्तम्यन्तक्रियाप्रयोगोऽनुचित इति वाच्यम्, यतः सर्वाण्यपि व्याकरणसूत्राणि तावद्विध्यर्थानि, विध्यर्थे च प्रत्युत सप्तम्या एवौचिती, आचार्यैरपि सिद्धिः स्याद्वादात्" ॥१।१।२॥ इति सूत्रस्य वादात् सिद्धिः स्यादिति व्याख्यायां सप्तम्येव आद्दताऽस्तीति । **पदमपीति** । यत्रैव स्यात्क्रियया योगस्तत्र वाक्यं सावधारणमुच्यते, यत्र तु पदेन तत्र पदम् ॥ ५८ ॥

**चका--** ॥ **तस्य व्याख्याने च ग्रन्थादितीति** । अस्याऽर्थः–तस्येति षष्ठ्यन्ताद् ग्रन्थवाचिशब्दाद् व्याख्यानेऽर्थे, तत्रेति सप्तम्यन्तात्तु भवेऽर्थे यथायोगमणादयः प्रत्ययाः स्युः । एतेन तस्य व्याख्यानमित्येको वाक्यार्थः, तत्र भवमिति च द्वितीयः, इति वाक्यार्थद्वयमत्र मिलितं ज्ञेयम्, यथा कृतां व्याख्यानं, कृत्सु भवं वा कार्तम्, एवं प्रातिपदिकीयमिति । शेषसूत्राणां त्वर्थोदाहरणादि प्रतीतत्वाद् न दर्श्यते ॥ ६१ ॥

**चानुकृष्टं नाऽनु--** ॥ ननु विजातीयमप्यनुकर्षतीत्यत्राऽपिशब्देन सजातीयाऽनुकर्षणमप्युपक्षिप्तमासीत् पूर्वन्यायस्य वृत्तौ, तत्किमिति तदत्र नोदाहृतम्? । उच्यते–उदाहरणोक्तिसमये 'स्ध्वोश्च' इति चकारेण "पदान्ते" ॥ २ । १ । ६४ ॥ इत्यस्याऽनुकर्षणं यदुक्तं तदेव सजातीयाऽनुकर्षणोदाहरणं ज्ञेयम्, यतः "पदान्ते"॥२।१।६४॥ इत्येतत् स्ध्वोरित्यस्य सजातीयम्, उभयोरपि सप्तम्यन्तत्वात्। **णिचि चेत्यस्याऽनुकर्षणार्थ इतीति** । यद्यपि "मारणतोषण–" ॥ ४।२।३० ॥ इत्यस्य न्यासे एतन्न्यायभीत्या न्यासकारेणोत्तरं कृतमस्ति, तथाहि–चेन णिचि चेत्यनुकृष्यते न, किन्त्वधिकारायातमेव णिचि चेत्येतत् चेनाऽनुमीयत इति, परमस्याऽभिप्रायः सम्यग् न ज्ञायते, यतोऽधिकाराऽऽयातस्य ज्ञप्त्यर्थं यदि चाः प्रयुज्यन्ते तदान्येष्वप्यधिकारेषु चाः प्रयुक्ता दृश्येरन्, न च दृश्यन्ते। अतोऽस्माभिश्चकारो णिचि चेत्यस्याऽनुकर्षणार्थ इति वृत्तिकारवच एव पुरस्कृत्य न्यायाऽनित्यताऽत्रोद्भाविता ॥ ६२ ॥

**चाऽनुकृष्टेन--** ॥ **यथासंख्यभङ्गाय बहुवचनमिति** । ननु"शक्तार्हे कृत्याश्च"॥५।४।३५॥ इति सूत्रे कृत्य इत्येकवचनं यद्युपन्यस्यते तदापि कथमत्र यथासंख्यप्रसङ्गः, कृत्यानां बहुत्वेन तद्गुतसप्तम्या शक्ताऽर्हाभ्यां सह समसंख्यत्वाभावात्? । सत्यम्, परं कृत्य इत्येकजात्याश्रयणेन सर्वकृत्यानामेकत्वे तद्गुतसप्तम्याः शक्तार्हाभ्यां सह समसंख्यत्वमेवाऽस्ति ॥ ६३ ॥

**यत्राऽन्य--** ॥ **भवन्ती यथा** । जम्बूद्वीप इत्यादौ नित्यप्रवृत्ताख्ये वर्तमानकाले सतीत्यनेन वर्तमाना । **सप्तमी यथेति** । " शिर्युद् " ॥ १।१।२८ ॥ इत्यादावज्ञातज्ञापनारूपे विध्यर्थे " विधिनिमन्त्रणा-" ॥५।४।२८॥ इत्यनेन सप्तमी । **पञ्चम्याशिषाविति** । " आशिष्याशीःपञ्चम्यौ " ॥५।४।३८॥ इत्यनेन । **ह्यस्तन्यद्यतनीत्यादि** । भूतकालस्य परोक्षत्वाद्यतनत्वयोरविवक्षायाम् " विशेषाऽविवक्षाव्यामिश्रे " ॥ ५।२।५ ॥ इत्यनेनाऽद्यतनी, तस्यैवाऽनद्यतनत्वे विवक्षिते परोक्षत्वे त्वविवक्षिते " अविवक्षिते " ॥ ५।२।१४ ॥ इत्यनेन ह्यस्तनी, उभयसद्भावविवक्षायां तु " परोक्षे " ॥ ५।२।१२ ॥ इत्यनेन परोक्षा । **श्वस्तनीत्यादि** । भविष्यदर्थस्याऽनद्यतनत्वविवक्षायाम् " अनद्यतने श्वस्तनी " ॥ ५।३।५ ॥ इत्यनेन श्वस्तनी, तस्यैव सामान्येन विवक्षायाम् " भविष्यन्ती " ॥ ५।३।४ ॥ इत्यनेन भविष्यन्ती । **साक्षादेवेति** । यदि स गुरून् उपासिष्यत तदा शास्त्रान्तमगमिष्यदित्यादौ " सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः " ॥ ५ । ४ । ९ ॥ इत्यादिभिः क्रियातिपत्तिप्रयोगो भवति, परं तत्र साक्षादेव क्रियातिपत्तिः प्रयुक्ता दृश्यते, न तु वर्तमानादिवद् गम्या । **तदस्य पण्यमिति** । अस्य सूत्रस्याऽर्थः--तदिति प्रथमान्तादस्येति षष्ठ्यर्थे इकण् स्यात्, यत्प्रथमान्तं तच्चेत् पण्यं विक्रेयं स्यात्, यथा अपूपाः पण्यमस्यस्येत्यापूपिकः ॥ ६५ ॥

॥ इति स्वकृतन्यायार्थमञ्जूषिकाद्वितीयवक्षस्कारकन्यासः ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते सांप्रतम् ।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक एष लोचनमितो न्यासश्रियं लम्भितः ॥ १ ॥

---

अर्हम्

# अथ तृतीयो वक्षस्कारः ।

**यदु--** ॥ **कर्तृकर्मादिविहितयोरिति** । अत्र आदिशब्दादाधारादि ग्राह्यम् । **एतन्न्यायोद्भूतेत्यादि** । अयं भावः-- ' आदितो नवा भावारम्भे ' इत्येकयोगकरणेऽप्यनेन भावारम्भार्थक्तयोरिटो विकल्पितत्वाद् वेट्त्वहेतुको " वेटोऽपतः " ॥ ४।४।६२ ॥ इत्यनेन य इड्निषेधः, स पारिशेष्यात् कर्तृकर्मविहितक्तयोरेव, इति पारिशेष्यन्यायो यदि स्फोर्यते तदा विरोधगन्धोऽपि न स्यात्, परमन्यत्र निरवकाशेनाऽनेन न्यायेन अन्यत्राऽपि सावकाशः पारिशेष्यन्यायो बाधितः 'सावकाशाद् निरवकाशं बलीयः' इति न्यायात् । ततश्चास्यैव प्रवृत्तिभवनेन वृत्त्युक्तयुक्त्या विरोध एवोदपादि, एतन्न्यायाभावे तु पारिशेष्यन्यायस्यैव स्फुरणाद् विरोधो नाभविष्यदेवेति ॥ १ ॥

**नाम--** ॥ **स्पृशोऽनुदकादित्यनेनेति** । यद्यपि " स्पृशोऽनुदकात् " ॥ ५ । १ । १४९ ॥ इत्यस्य वृत्तौ अनुदकादित्यत्र नञः पर्युदासव्याख्ययोपसर्गग्रहणनिरास उक्तोऽस्ति, कथम् ?, उदकवर्जनादुदकसदृशमुपसर्गरहितं नाम इह ग्राह्यमिति; तथाप्यनेन वाक्येनाऽऽचार्यैरेतन्न्यायस्यैवार्थः समर्थित इति लक्ष्यते ॥ ४ ॥

**सामा-- ॥ आशंस्य इति ।** अनागतस्याऽर्थस्य प्राप्तुमिच्छा आशंसा, तद्विषय आशंस्यः । **ह्यस्तिनीपरोक्षे इति ।** तेन यदि कश्चिदत्र ह्यस्तनीं परोक्षां वा प्रयुङ्क्ते– उपाध्यायश्चेदागच्छत्, एते तर्कमध्यैमहि; उपाध्यायश्चेदाजगाम, एते तर्कमधिजगिमहे इत्यादि, तदा स प्रयोगो न साधुः ॥ ५॥

**परा-- ॥ अन्तरङ्गत्वादिति ।** गुणो हि प्रत्ययापेक्षत्वाद् बहिरङ्गः, यत्वं तु तदनपेक्षत्वादन्तरङ्गम् ॥ ८ ॥

**प्रत्य-- ॥ तन्निमित्तकसर्वकार्याणामिति ।** यः प्रत्ययो लुप्तोऽस्ति तस्मिन् परे यानि कार्याण्युक्तानि तानि तन्निमित्तककार्याण्युच्यन्ते, तानि प्रत्ययस्य लुपि सत्यां "लुप्यय्वृल्लेनत्" ॥७।४।११२॥ इति सूत्रेण निषिध्यन्ते, यानि तु लुप्तप्रत्ययान्तस्योक्तानि तान्येतन्न्यायेनाऽनुज्ञायन्ते । **इत्येवमर्थं तावदिति ।** अत्रेयं भावना–यत्राऽञो लुप् स्यात् तत्र " सङ्घघोषाङ्क-" ॥६।३।१७२॥ इत्यनेनाण् न स्यात्, किन्तु " गोत्राददण्डमाणवशिष्ये" ॥ ६।३।१६९ ॥ इत्यनेनाकञ् एव, यथा पञ्चालस्य राज्ञोऽपत्यानि " राष्ट्रक्षत्रियात्सरूपाद्राजापत्ये द्रिरञ् " ॥ ६।१।११४॥ इत्यनेनाञि " बहुष्वस्त्रियाम् " ॥ ६।१।१२४ ॥ इति तल्लुपि च पञ्चालाः, ततश्च तेषां सङ्घः पाञ्चालकम्, अत्राञो लुप्तत्वात् " सङ्घघोषाङ्क-" ॥६।३।१७२॥ इत्यनेनाण् न स्यात्, अञन्तेभ्यस्तस्य विधानात्, 'प्रत्ययलोपेऽपि' इति न्यायोऽपि नोपतिष्ठते, अस्याऽनित्यत्वात्; ततः "गोत्राददण्ड-"॥६।३।१६९॥ इत्यकञ् एव, यौधेयीनां सङ्घो यौधेयमित्यत्र च " सङ्घघोषाङ्क– "॥ ६।३।१७२॥ इत्यण् सूरेरिष्टः, स चाञ्प्रत्ययान्तात् परः स्यादित्युक्तत्वादञि लुप्ते सति न स्यात्,'प्रत्ययलोपेऽपि' इति न्यायस्याऽनित्यत्वेनाऽनुपस्थानात्"यौधेयादेरञ् " ॥७।३।६५॥ इत्यनेनोत्पन्नस्य द्रिसंज्ञस्याञः " द्रेरञणः- " ॥६।१।१२३॥ इत्यनेन प्राप्ताया लुपो अभावश्च तदा सिध्येद् यदि यौधेयशब्दो भर्गादिगणे पठ्यते, न त्वन्यथेति विमृश्य सूरिणा यौधेयशब्दस्य भर्गादौ पाठः कृतः ॥ ९ ॥

**विधि— ॥ न त्वन्योपसर्गेत्यादि ।** एतेन दैवादिकस्य क्षिपेरन्योपसर्गपूर्वोऽनुपसर्गो वा प्रयोग एव न स्यादिति प्रसज्यत इति भावः।कथमप्रयोगप्रसङ्ग इति चेत्। उच्यते–तस्य क्षिपेः प्रत्यभ्यतीन् मुक्त्वाऽन्योपसर्गपूर्वस्याऽनुपसर्गस्य वा परस्मैपदं तावदानेतुं शक्यते, नियमेन निषिद्धत्वात्; आत्मनेपदं तु नायाति, केनाऽपि सूत्रेणाऽविहितत्वात्; प्रकारान्तरं च नास्तीत्यतोऽस्याऽप्रयोग एव शरणमिति ॥ १० ॥

**अन— ॥ निषेधो यथेति ।** अनन्तरस्य विधिरित्येवं दर्शयितुं तदा शक्यते यदि निषिद्धस्य विधिर्दर्श्यते, इत्यतोऽत्र निषेधः प्रथममुदाहारि ॥ ११ ॥

**न के— ॥ भीष्ममित्यादि ।** ननु कटस्य भीष्मत्वादि किं ?, तेन खड्गं करोति भीष्ममित्यादि कस्मान्नोदाहृतम्?। उच्यते–पूर्वपरम्परायातत्वादिना केनाऽपि हेतुना श्रीहेमाचार्यैरेवमुक्तत्वादिहापि तथैवोचे ॥ १३ ॥

**क्विब—॥** व्याकरणं तावत् शिष्टप्रयोगसिध्यर्थं,शिष्टप्रयोगाश्च त्वस्मिन्मस्मिन्निति रूपा दृश्यन्ते, स्मिन्नादेशश्च सर्वादित्वं विना न स्यात्, सर्वादित्वं च तदैव स्याद् यदि णिज्क्विबन्तीभवनेऽपि युष्मदस्मच्छब्दावेवैतौ, न त्वन्यत्किञ्चिदिति विवक्ष्यते, न त्वन्यथेति विमृश्य पूर्वाचार्यैरिह णिज्क्विबन्तयोः केवलयोश्च युष्मदस्मदोरभेदविवक्षा कृता, सैव चात्र गजगुडनादृष्टान्तेनाऽस्माभिः समर्थयाञ्चक्रे ।

अस्य च न्यायस्य त्वस्मिन् मस्मिन् इयेतदेवोदाहरणं दृश्यते नान्यत्; त्वम इति त्वेतन्न्यायस्याऽनित्यतोदाहरणम्, अनित्यता चास्याऽत्र प्रथमं दर्शिता, पश्चात्तूदाहरणं, विचित्रत्वात् शास्त्रगतेः ॥१४॥

**विचि-** ॥ **लिङ्गसंख्यादाविति** । आदिशब्दादर्थवैचित्र्यं, यथा-पर्युदासनञा अब्राह्मणः, अशुक्ल इत्यादौ तत्सदृशः क्षत्रियादिः, पीतादिश्च प्रतीयते; अधर्मः, असित इत्यादौ तद्विरोधी पाप्मा, कृष्णश्च प्रतीयते; अनग्निः, अवायुरित्यादौ अग्निवायुभ्यामन्यः प्रतीयते; अवचनम्, अवीक्षणमित्यादौ च वचनवीक्षणाभावः प्रतीयत इत्याद्यप्युदाहार्यम् । **स्त्रीपुंसत्वमिति** । स्त्री च पुमांश्चेति द्वन्द्वे "स्त्रियाः पुंसो द्वन्द्वाच्च" ॥ ७।३।९६ ॥ इत्यत्समासान्ते स्त्रीपुंसत्वमिति सिद्धम् । **इत्यादीति** । आदिशब्दाद् हस्तिनाऽतिक्रामति " णिज् बहुलं-" ॥३।४।४२ ॥ इति णिजि अतिहस्तयति, अत्रातिशब्दं विना अतिक्रमार्थो न प्रतीयते, इत्यतोऽतिः प्रयुज्यते । श्वेताश्वेनाऽतिक्रामति णिजि "श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् " ॥ ३।४।४५ ॥ इत्यनेनाश्वशब्दलुकि, श्वेतयतीत्यत्र त्वतेः प्रयोगं विनाऽपि तदर्थप्रतीतेर्नातिः प्रयुज्यते । तथा खणम्प्रत्ययवद् णम्प्रत्ययोऽप्याभीक्ष्ण्ये क्रियते, तथापि खणम्याभीक्ष्ण्यद्योतनाय द्वित्वं विलोक्यते, यथा "खणम् चाभीक्ष्ण्ये" ॥५।४।४८॥ इति खणमि भोजं भोजं याति, णमि तु द्वित्वं विनाऽपि आभीक्ष्ण्यं प्रतीयते इति न तत्र द्वित्वापेक्षा, यथा गेहमनुप्रविश्य अनुप्रविश्याऽऽस्ते इति "विशपतपदस्कन्दो वीप्साऽऽभीक्ष्ण्ये" ॥५।४।८१॥ इति णमि गेहानुप्रवेशमास्ते, इत्यादावपि शब्दशक्तिवैचित्र्यमेव हेतुरित्यूह्यम् ॥ १६ ॥

**किं हि--** ॥ **इष्टार्थप्रत्ययाभावे त्विति** । इहाप्राप्तप्रवर्तनं नास्ति, यतो यदि इष्टार्थप्रत्ययो न स्यात् तदा अप्राप्ता विधयः केन गुणेन प्रवर्त्यन्ते ?, प्रत्युत तत्र प्राप्ता अपि यन्न प्रवर्त्यन्ते तदेव युक्तमित्येतदेवाह-**प्राप्ता अपि केचिद्विधय इत्यादि** । **समास इति** । अयं भावः-असूर्यपश्या इत्यत्र नञः सूर्यशब्देन सह "नञ्" ॥३।१।५१॥ इति सूत्रेण तत्पुरुषसमासोऽसामर्थ्यादप्राप्तोऽप्येतन्न्यायबलाज्जातः, एवमसूर्यशब्दस्य पश्येत्यनेन सह " ङस्युक्तं कृता " ॥ ३।१।४९ ॥ इत्यनेन विभक्त्युत्पत्तेः प्रागेव तत्पुरुषसमासः । अवत्सीय इत्यत्र नञो वत्सशब्देन सह " नञ् " ॥३।१।५१॥ इत्यनेनैव समासश्च वाच्यः । **विचित्रा सूत्राणामिति** । " धातोरिवर्णो- " ॥ २।१।५० ॥ इत्यत्र हि युवर्णस्येत्येतावताऽपि सरति, यथा "युवर्णवृद-" ॥५।३।२८॥ इत्यत्र, तथापि यद् 'इवर्णोवर्णस्य' इति गुरुनिर्देशः, स एतन्न्यायादेव । **मात्रेत्यादि** । मात्राशब्दोऽल्पार्थे, भावप्रधानश्चात्र, यथा-सूपमात्रा सूपाल्पत्वमल्पः सूप इत्यर्थः, अपिश्चैवं योज्यते- मात्रयाऽपि लाघवमिति अल्पत्वेनाऽपि लाघवमित्यर्थः । लाघवं च द्विधा-अल्पाक्षरत्वमल्पप्रक्रियत्वं च, तत्राद्यं यथा-"आपो ङितां यै यास् यास् याम् " ॥१।४।१७॥ इत्यत्र ङिच्चतुष्केण सह यथासंख्यभावाय यामग्रे जसमानीय सौत्रत्वात्तल्लोपः कृतः । द्वितीयं यथा-भीरुक इत्यत्र रस्य ऋफिडादित्वाल्लत्वकरणे भीलुक इत्यस्य सिद्धावपि "भियो रुरुकलुकम् " ॥५।२।७६॥ इति सूत्रे बह्वक्षरत्वं भवदनपेक्ष्यापि लुकप्रत्ययवचनं कृतं, यतः ऋफिडादित्वाल्लत्वं तावत्तदा कर्तुं शक्यते यदि प्रथमं क्वापि भीलुकेति प्रयोगः काव्यादौ दृश्यते, गणकार्याणां सर्वत्र प्रयोगानुसारिप्रवृत्तिकत्वात् । प्रयोगानुसरणं च बहुकालसाध्यत्वाद् भृशं गरीय इत्यतः प्रक्रियालाघवार्थं लुकप्रत्ययः साक्षादेवोचे । **ते वै इत्यादि** । ये तीक्ष्णधियस्तान् प्रति लक्षणं संक्षेपेण प्रणयनं क्रियते, ये तु मन्दधियस्तान् प्रति प्रपञ्चो विस्तरः, शास्त्रस्य परानुग्रहमात्रार्थत्वात् । तत्र लक्षणं यथा- " तत्पुरुषे कृति " ॥३।२।२०॥ इत्यनेन सप्तम्या अलुप् स्यात्, यथा स्तम्बेरम इत्यादि । प्रपञ्चो

यथा-" शयवासिवासेष्वकालात् " ॥३।२।२५॥ " वर्षक्षरवराप्सरःशरोरोमनसो जे " ॥३।२।२६॥ एष्वलुब्वा, यथा बिलेशयः बिलशय इत्यादिः, वर्षेजः, वर्षज इत्यादि च, " द्युप्रावृट्वर्षाशरत्कालात् " ॥३।२।२७॥ एषु नित्यमलुप्, यथा दिविज इत्यादि । " नेन्सिद्धस्थे " ॥३।२।२९॥ एष्वलुब् न, किन्तु लुबेव । यथा स्थण्डिलशायीत्यादि । सर्वं चेदं "तत्पुरुषे कृति " ॥३।२।२०॥ इत्यनेन सिद्धमेव, तत्र बाहुलकाधिकारसद्भावात्, तथापि यदनया चतुःसूत्र्या बाहुलकस्यैव विस्तरो दर्शितस्तदेतन्न्यायादेव यौक्तिकम् । **पारिशेष्यादयोऽपीति** । परिशिष्यते इति कर्मकर्तरि " लिहादिभ्यः " ॥५।१।५०॥ इत्यचि परिशेषस्तस्य भावः "पतिराजान्त-"॥७।१।६०॥ इति ट्यणि पारिशेष्यम् । **सूत्रार्थव्यवस्थापनायामिति** । यथा कर्मादिशक्तिषु द्वितीयादिविभक्तीनां विधानेन पारिशेष्याद्विशिष्टेऽर्थमात्रे प्रथमा स्यादित्येवं " नाम्नः प्रथमैकद्विबहौ " ॥२।२।३१॥ इति सूत्रस्यार्थो व्यवस्थापितः ॥ १७ ॥

**॥ इति स्वकृतन्यायार्थमञ्जूषायास्तृतीयवक्षस्कारकन्यासः ॥**

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
र्गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कारक एष विष्टपमितो न्यासश्रियं लम्भितः ॥ १ ॥

अर्हम्

# अथ चतुर्थो वक्षस्कारः ।

**शिष्ट- ॥ भिस्सटेत्यादि** । अभिपूर्वस्य प्सांक् इत्यस्य अभिप्सायत इति " उपसर्गादातः " ॥ ५ । ३ । ११० ॥ इत्यङि " इडेत्पुसि चातो लुक् " ॥ ४ । ३ । ९४ ॥ इति आलुकि पृषोदरादित्वादभेरल्लोपे पस्य से च आपि आपः प्राक् टागमे च भिस्सटा, कच्छाया ग्रामाच्च कुत्सितात्पाद्यर्थे कपि आपि टागमे " अस्याऽयत्तत्क्षिपकादीनाम् " ॥ २ । ४ । १११ ॥ इति टस्यात इत्वे च कच्छाटिका, ग्रामटिका । कन्दुः पण्यमस्य " तदस्य पण्यम् " ॥ ६ । ४ । ५४ ॥ इतीकणि " अस्वयंभुवोऽव् " ॥७।४।७०॥ इत्यवादेशे कान्दविकः । कम्बुः कम्बुघटनं, वेणुर्वेणुवादनं शिल्पमस्य " शिल्पम् " ॥६।४।५७॥ इतीकण्यवादेशे च काम्बविकः, वैणविकः । अथ सौत्रादिधातुजनाम्नां केषाञ्चिदन्वर्थपरं वाक्यदिङ्मात्रं दर्श्यते, तदनुसारेण च अदर्शितवाक्यनामस्वपि वाक्यं कार्यम्, तथाहि–अगमर्थाद् विन्ध्यं स्तभ्नातीत्यगस्त्यः । तन्द्राणशीलः, तन्द्राणधर्मा, साधु तन्द्रातीति वा तन्द्रालुः; एवं पतयालु-गृहयाल्वोरपि वाक्यं कार्यम् । कयति जानाति शिक्षितः सन् नृत्याद्यमिति कीशः । चिरिणोति हन्ति पित्तं चिर्भिटी । पञ्ज्यते रुध्यते विच्छिद्यमानोऽर्थोऽनयेति पञ्जिका । कौ पृथिव्यां रटति हरति विरहिणां प्राणान् इति कुरण्टकः । वडति गृह्णाति छर्दीषीति वडभी । वडति गृह्णाति गर्भं वडवा । प्रणालयति भ्रंशयत्यम्भोऽनेन प्रणालः । किणन्ति गच्छन्ति जना अत्रेति केणिका । कुत्यते गुम्फ्यते छागरोमभिः कुतपः कम्बलः, कोतन्ति प्रीयन्ते पितरोऽस्मिन्निति कुतपः श्राद्धकालः । पोलति उच्छन्ति मधुने पुत्तिकाः, आ आदौ लभ्यते आदीयते गृह्यते इति यावद् गानार्थिभिरिति आल-

त्तिका। सातयति सुखं करोतीति सातयः। उद्यते आहन्यते तूर्यमनेन उदिश्वः। क्षदति हन्ति शत्रुमिति क्षत्रम्। क्षदति संवृणोति द्वारमिति क्षत्ता। मेधेति। यद्यपीदं मेधृग् इति धातुनाऽपि सिध्यति, परमाचार्यैः मिधृग् इत्यनेन साधितमित्यतोऽस्माभिरपि तथैवोक्तम्। धनुरिति। धातूनामनेकार्थत्वादत्रास्य शब्दार्थत्वे दधन्तीति धनुरिति वाक्यं कार्यम्, दधनति तिष्ठन्ति धान्यान्यत्र इति धनुः, अत्र धान्यविषया स्थित्यादिक्रिया धातोरर्थः। क्षोपन्ति ह्रस्वीभवन्ति शाखादयोऽत्र इति क्षुपः। स्कुभ्नाति स्तभ्नाति जले गजादीनपीति कुम्भीरः। कं वायुं स्कुभ्नाति विस्तारयतीति ककुप्। धमति शब्दायते वायुनाऽन्तः शुषिरत्वादिति धमनः। तोरन्ति उत्सुकीभवन्ति अस्मिन् आगता गृहादिप्रवेशार्थे इति तोरणम्। ओलति दह्यतेऽनेनाश्रितं गृहादिकमित्युल्लुकः। लोलति पङ्के इति लुलायः, तव्यते गम्यते पुण्यवद्भिरिति तविषः। ऋशति गच्छति वाताभिमुखम्, ऋश्यते सूयते वा व्याधैरिति ऋश्यः, पसन्ति निवसन्त्यत्रेति पस्त्यम्। भसितं दीप्तं तदिति भूतार्थे मनि भस्म। यद्यप्युणादयो वर्तमानकाल एव विहितास्तथापि बाहुलकादत्र भूतकाले प्रत्ययः। पिंशति पिंश्यत इति। पिंशत् अवयवे इत्यस्यापि शे मुचादित्वाद् नागमे पिंशतीत्यादि स्यात्, परं क्ये तस्य पिश्यते इति स्यात् "नो व्यञ्जनस्या–" ॥४।२।४५॥ इति नलोपभवनात्, अस्य तु पिंश्यते इति स्यात् नलोपाभवनादित्यस्यार्थस्य ज्ञप्त्यर्थं रूपद्वयं वृत्तौ दर्शितम्। अथ ये धातवो हैमधात्वित्यादि। अथ ये धातवः सूरिपाठस्था एवान्यैरन्यथा पठिताः, ये च अधिका एव अन्यैः पठिताः, तेषां तथातथात्वमुद्भाव्यते, तथाहि– खेडणिति। खेटण् भक्षणे इति धातुपाठे सूरिभिः पठितमस्ति, अस्य स्थाने खेडणिति देवनन्दी प्राह। पणणिति। अमुमधिकमेव केचित् पठन्ति। वित्तण् दाने इति। व्ययण् वित्तसमुत्सर्गे इत्यत्र वित्तेति धात्वन्तरमित्येके प्राहुः, अस्य च दाने इत्यर्थः कविकल्पद्रुमादौ दृष्टत्वादत्र प्रयुक्तः। कर्त्रेति। कत्रण् शैथिल्ये इत्येतं कर्तणित्यन्ये आहुः, कर्त्रणिति चन्द्रः, कत्थणिति तु देवनन्दी। श्लथेति। श्रथण् दौर्बल्ये इत्यस्यैव ऋफिडादित्वाल्लत्वममन्यमानाः श्लथणं केचित् पृथगाहुः। शरणिति। शारण् दौर्बल्ये इत्यस्य स्थाने शरेति नन्दी। छदण् संवरणे इति। अदन्तोऽयमिति कैश्चिन्मतम्। लभण् इति। लाभण् प्रेरणे इत्यस्य स्थाने लभणिति सभ्याः। श्रपण् इति। इममधिकं केचित्पठन्ति। खोदण् इति। खोटण् क्षेपे इत्ययमेव दान्त इत्यन्ये। स्तनेत्यादि। स्तनध्वनस्वनस्यमषमष्टमाः षड् ये भ्वादौ व्यञ्जनान्ताः कथिताः सन्ति ते षडपि अदन्ता इति सभ्याः। मलण् इति। मलि धारणे इत्येतं केचित् चुराद्यदन्तं पेठुः। वल्पुलेति। पल्पूलण् लवनपवनयोरित्यस्य स्थाने केचिद्वल्पुलेति, अन्ये वल्पूलेति, अपरे पल्पुलेति, परे पप्पूलेति, एके च वत्पूलेत्याहुः। कुमालण् इति। कुमारण् क्रीडायामित्येतमेव केचिल्लान्तमाहुः। पशणिति। पषण् अनुपसर्गे इति यश्चुरादौ अदन्तः पठितोऽस्ति, स एव तालव्यान्तो वा अदन्त इत्यन्ये। शशण् इति। अयमधिको धातुः सूर्यप्रज्ञप्तिवृत्तावुक्तोऽस्ति। अंसण् विभाजने इति। अंशण् समाघाते इत्येतं चन्द्रो दन्त्यान्तमाह, समाघातशब्देन च विभाजनं व्याख्यातं धातुपारायणे, इत्यतोऽत्र स्फुटार्थं विभाजने इत्येवोक्तम्। गहण् इति। अमुमधिकमेव केऽप्याहुः। गा इत्यादि। गां ह्वादौ, माङं च दिवादौ केचिदधिकमेव पठन्ति। किक् इत्यादि। किं ह्वादौ, ध्विं च स्वादौ केप्यधिकमेव पठन्ति। जिरिट् इत्यादि। जिरिटं स्वादौ, चिग्लं च चुरादौ घटादिकेऽप्यधिकमेव प्राहुः; दीधी-ई-वेवीधातूनपि चाधिकानेव। प्वादी एताविति। सूरिभिस्तु श्रीभ्रीधातू क्र्यादौ अप्वादी पठितौ स्तः। ल्पींस् इति। केऽप्यमुमधिकमेवाहुः। प्वादित्वादिवाद्य-

इति। सूरिभिस्तु ष्वीः प्वादिमध्ये पठितः। ज्रीण् इति। युजादिमध्यस्थस्य जूण् वयोहानौ इत्यस्य स्थाने ज्रीण् इति नन्दी। खुङ् इति। उङ् कुंङ् इत्यादयो यथा गत्यर्थे पठिताः सन्ति,तद्वत् खुंङमपि गत्यर्थे केचित् पठन्ति; धुगट् च स्वादावधिकमेव। गृं इति। गुङ् शब्दे इत्येतमेव दीर्घान्तं परस्मैपदिनं पुरीषोत्सर्गे केऽप्याहुः। गूत् इति। कुटादिस्थो गुंत् पुरीषोत्सर्गे इति धातुर्दीर्घान्तः सेट् चेत्यन्ये प्राहुः। दूट् इति। एतं स्वादौ केऽप्यधिकमेव पेठुः। जृं इति। ञ्रि अभिभवे इत्येतं जृं इति ऋदन्तं केऽप्याहुः। घृ सृ हृ इत्येतान् ह्रादौ केऽप्यधिकानेव पेठुः। स्पृंट् इति। स्मृंट् पालने च इत्येतं पोपान्त्यं केऽप्याहुः। ऋट् इति। अमुं स्वादौ केऽप्याधिकमेव पेठुः। कृग्श् इति। कृग्श् हिंसायामित्ययमेव ह्रस्वान्त-इत्यन्ये। वृग्श् इति। वृग्श् वरणे इत्ययमेव ह्रस्वान्त इति नन्दी। भक्षणगत्योरिति। चृ इति धात्वन्तरं चरतिसमानार्थं क्तक्तवतुविषयमामनन्तीति "रदादमूर्छमदः—" ॥४।२।६९॥ इत्यस्य वृत्ता-वुक्तत्वाद्भक्षणगत्योरित्येवमत्र पेठे। चरतेरप्येतदर्थद्वयस्यैव धातुपाठे कथनात् क्तक्तवतुविषयमिति कथनाच्च चीर्णमिति क्तान्तमुदाहरणं दर्शितम्। पृक् इति। पृंक् इत्ययमेव ऋदन्तः सेट् चेत्येके। दृङ्च् इति। दृ भये इत्ययमेव कैश्चिद्दिवादावपि पठ्यते। ज्योङ् इति। दीक्षि मौण्ड्येज्योपनयना-दाविति वृद्धपाठं केचिद्भिन्दन्ति, उकारं चाधिकं पठन्ति, तन्मते दीक्षि मौण्ड्ये इत्येको धातुः, ज्यो उपनय-नादौ इति च द्वितीयः, ज्योङ् इति ङित्त्वं तु आत्मनेपदित्वज्ञापनाय न्यस्तम्। दकु इति। तकु कृ-च्छ्रजीवने इत्यस्य स्थानेऽन्ये दकुमाहुः। तिकुङ् इति। यौ तिकिटिकी गत्यर्थौ भ्वादावात्मनेपदिनौ स्तः, तौ ऋदितावित्यन्ये। षेकुङ् इति। सेकृङ् इत्ययमेव षोपदेश इत्येके। चिकण् इति। चुकण् व्यथने इत्यस्य स्थाने चिकेति कौशिकः। चखु इति। चख गतौ इत्येतमेव केप्युदितमाहुः। खक्ख इति। कक्ख हसने इत्येतमेव केचिद् द्वितीयादिमाहुः। लिखत् इति। अमुं केचित् कुटादौ पेठुः। घग्घ इति। गग्घ हसने इत्येतमेव घादिं केऽप्याहुः। दघेत्यादि। दघ तिघ चषघान् स्वादाव-धिकानेवैके पेठुः। सघेति। षघट् हिंसायामित्येतमेवाऽषोपदेशं केऽप्याहुः। मुचीति। मचि कल्कने इत्यस्य स्थाने मुचीति चन्द्रः। अचूगिति। अञ्चु गतौ चेत्यस्य स्थाने अचूग् इत्येके; अचुग् इत्यन्ये। ड्डुयाचृग् इति। ड्वितं डुयाचृग् याच्ञायामित्येतमेव ड्वितं केऽप्याहुः। विचृंकी इति। विजृंकी पृथ-ग्भावे इत्ययमेव चान्त इति सभ्याः। चर्चत् इति। झर्चत् परिभाषणे इत्ययमेव चादिरित्यन्ये। खच्श् इति। खवश् हेठश्वत् इत्ययमेव चान्त इत्यन्ये, हेठश् च भूतप्रादुर्भावे उक्त इत्यतोऽयमपि तदर्थ एव। गुर्चण् इति। केऽप्यमुमधिकमेव पेठुः। पिच्छत् बाधने इति। मिच्छत् उत्क्लेशे इत्यस्य स्थाने पिच्छत् इति द्रामिलाः; उत्क्लेशशब्देन च बाधनं व्याख्यातं धातुपारायणे, तेनाऽत्र स्पष्टार्थं बाधने इत्येवोक्तम्। लुजु इति। तुजु पिजुण् हिंसाबलद. निकेतनेष्वित्यत्र तुजुपिजुण्वत् लुजुमप्येके प्राहुः। ध्रिजेति। ध्रृज गतौ इत्ययमेव रिशब्दोपान्त्य इत्यन्ये। रिजीति। ऋजि गति-स्थानार्जनोर्जनेष्वित्येतमेवोद्रिक्तादिसिद्ध्यर्थं व्यञ्जनादिं केऽप्याहुः, सूरिभिस्तु रिचृंपी विरेचने इत्य-नेनैवोद्रिक्त इत्यादि साधितम्। ओनजैङ् इति। ओलजैङ् व्रीडे इत्ययमेव नादिरिति चन्द्रः। मृजेकीति। पृचैङ् सम्पर्चने इत्ययमेव मृजैकि इति कौशिकः। वृजैप् इति। वृचैप् वरणे इत्ययमेव जान्तो वर्जनार्थश्चेत्येके। मर्जण् इति। मार्जण् शब्दे इतिवद् मर्जणमपि केऽप्याहुः। शौट्ट इति। शौड्ट गर्वे इत्यादयः षड् ये भ्वादौ डान्ताः सन्ति ते टान्ता इत्यन्ये। स्फट्ट मुट्ट इति। स्फट विश-रणे मुट प्रमर्दने इत्येतावुदितावित्यन्ये। नटेति। णट नृतावित्येतमेवाऽणोपदेश इत्येके। णटीति।

नटिर्भ्वादौ आत्मनेपदीति नन्दी प्राहेत्युक्तं धातुपारायणे, नटिश्च भ्वादौ द्विरस्ति, कथम्?, एको घटादिर्नत्यर्थो द्वितीयस्त्वघटादिर्नृत्यर्थः; ततश्चोभयोरप्यात्मनेपदित्वज्ञप्त्यर्थं णटि नतौ चेतीह पेठे। अतुद् इति। अदुटि हिंसाऽतिक्रमयोरित्ययं दोपान्त्यो योऽस्ति स एव तोपान्त्य इत्येके। अट्टीति। प्रागुक्त एव अदुटिष्टान्तो दोपान्त्यश्च योऽस्ति स एव तान्तष्टोपान्त्यश्चेत्यन्ये। मिदुण् इति। मिदुण् स्नेहने इत्ययमेव टान्त इत्येके। सुट्टणिति। षुट्टण् अल्पीभावे इत्ययमेवाषोपदेशोऽनादरार्थश्चेत्येके। शटीति। शठिण् श्लाघायामित्यस्य स्थाने शटेति नन्दी प्राह, शलेति तु कौशिकः। रुठीति। द्युतादिस्थो रुटि प्रतीघाते इत्ययमेव ठान्त इत्यन्ये। वुठुणिति। वुधुण् हिंसायामित्येतमेव ठान्तं केऽप्याहुः। चुड्ड इति। चुड्ड अल्पीभावे इत्ययमेव डान्त इत्यन्ये। पिडेति। पिट शब्दे चेत्येतमेव पेडेतिसिद्ध्यर्थं डान्तं केऽप्याहुः; सूरिभिस्तु पेल गतावित्यस्मादचि पेला इति साधितं, डलयोरैक्यं च सुप्रतीतमेव। कड्डेत्यादि। कद्ड् कार्कश्ये इत्यादयस्त्रयो ये दोपान्त्या भ्वादौ सन्ति ते डोपान्त्या इत्यन्ये। तुड्ड इति। तुड्ड तोडने इत्ययं संयुक्तडान्त इत्येके। ञिक्ष्विडा इत्यादि। ञिक्ष्विदा अव्यक्तशब्दार्थो यः परस्मैपदिष्वस्ति, णद ञिक्ष्विदा अव्यक्ते शब्द इति मोचनस्नेहनार्थश्च यो द्युतादावात्मनेपद्यस्ति–ञिक्ष्विदाङ् मोचनस्नेहनयोरिति; तावुभावपि डान्तावित्येके। ननु तर्हि लाघवार्थमत्रैक एव क्ष्विडिर्डान्तो द्युतादिर्गित्करणादुभयपदी च कस्मान्न पठ्यते–ञिक्ष्विडाग् मोचनस्नेहनाव्यक्तशब्देष्विति। न चाङितो ङितश्च क्ष्विडेरर्थभेदान्नैवं पठितुं शक्यमिति शङ्क्यम्, धातूनामनेकार्थत्वस्य सुप्रतीतत्वेनाऽर्थभेदस्याऽविरोधकत्वात्। सत्यम्, द्युतादेरुभयपदिनः पाठे एकेनाऽपि क्ष्विडिना प्रक्ष्वेडनवर्जं सर्वरूपाणि सिध्यन्ति, परं प्रक्ष्वेडनसिद्ध्यर्थं तावद् ङित् क्ष्विडिरवश्यं वाच्यो ङित्त्वं विनाऽनस्याऽप्राप्तेः, तत्पठने च क्ष्वेडतीत्याद्यर्थमङिदपि क्ष्विडिः पठितो विलोक्यते, इत्यतोऽत्र द्वावपि पृथगेव पेठाते। अड्ट् इति। अमुमधिकमेव केऽप्याहुः। ओलडुण् इति। अत्र धातावोकारो न धात्वंशः किन्तु अनुबन्ध इत्यन्ये। लदुण् इति। ओलड्डुण्वत् लदुणप्यस्ति इति चान्द्राः। त्रुडिण् इति। त्रुटिण् छेदने इत्ययमेव डान्त इत्यन्ये। फण गताविति। घटादौ तावदयमस्ति, अन्ये त्वघटादिमेतं पठन्ति। अणिच् इति। अनिच् प्राणने इत्ययमेव णान्त इत्येके। घृणूयी इति। तनादौ यो घृणूयी दीप्ताविति धातुर्नान्त एव "रषृवर्णा–"॥२।३।६३॥ इति नो णं कृत्वा णान्तः पठितोऽस्ति, स एव स्वाभाविकणान्त इत्यन्ये। णापवादे इति। अस्याऽयं भावः– "म्नां धुड्वर्गेऽन्त्योऽपदान्ते" ॥१।३।३९॥ इति सूत्रे म्नामिति बहुवचनं व्याप्त्यर्थं, ततोऽयमर्थः–यावन्तः केऽपि म्नाः सन्ति तेषां पुरःस्थवर्गाक्षरस्यान्त्य एव वर्णः स्यात्, नतु वर्णान्तरं किमपि; तेनाऽत्र ऋकारपुरःस्थस्य नस्य प्राप्तमपि णत्वं न स्यात्, किन्तु णत्वबाधनार्थं नस्य पुनर्नत्वं क्रियते इति। घणूयी इति। घृणूयी दीप्तावित्ययमेव अकारोपान्त्यो णान्तश्चेति शिवः। इतु इति। अतु बन्धने इत्यस्य स्थाने इतुं इत्यन्ये। ज्युतीति। कौशिको ज्योतिःशब्दसिद्धये जुतृङ् भासने इत्यस्य स्थाने ज्युतिमधीते, सूरिभिस्तु द्युति दीप्तावित्यस्य "द्युतेरादेश्च जः" ॥ (उणा–९९१) ॥ इत्यनेन इसि, दस्य जत्वे च ज्योतिरिति साधितम्। कितक् इति। इमं ह्वादौ केऽप्यधिकमेव पठन्ति। पतिंच् इति। तपिंच् ऐश्वर्ये इत्यस्मिन् पकारतकारौ विपर्ययेण अधीयाना द्रमिलाः पतिंच् ऐश्वर्ये इत्याहुः। वावृतूचीति। वृतूचि वरणे इत्यस्य स्थाने वावृतूचि इत्यन्ये। ष्वर्तण् इति। स्वर्तण् गतावित्ययमेव षोपदेश इति नन्दी। पर्थ पार्थण् इति। पृथण् क्षेपणे इत्यस्य स्थाने पर्थणित्येके, पार्थणित्यन्ये। पद इति। बद स्थैर्ये इत्ययमेव पकारादिरिति कण्ठः।

कदिष् इत्यादि। कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये इत्येते त्रयोऽप्यनुदितः षितश्चेति नन्दी। मन्दीति। मदुङ् स्तुतिमोदादावित्यस्य स्थाने चन्द्रो मन्दि जाड्ये इत्येवाह। खुर्दि गुधीति। गुर्दि गुदि क्रीडायामित्यनयोः स्थाने क्रमात् खुर्दि गुधीति केऽप्याहुः। ऊवेदृग् इत्यादि। ऊबुंदृग् निशामने इत्यस्य स्थाने ऊवेदृग् इत्येके, ऊबुंधृगित्यन्ये, निशामनं चालोचनं व्याख्यातं धातुपारायणे, तेनाऽत्र स्पष्टार्थमालोचने इत्येवोक्तम्। णुदींत् इति। णुदंत् प्रेरणे इत्ययमेव ईदिदित्येके। वध इति। केऽप्यमुमधिकमेव पठन्ति। णाधृङ् इति। नाधृङ् नाथृङ्वत् इत्ययमेव णोपदेश इत्येके, नाथृङ् च याच्ञोपतापाद्यर्थचतुष्टयेऽस्तीत्यतोऽयमपि तदर्थ उक्तः। साधंच् इति। केचित् साधेः श्यमिच्छन्ति, ततोऽत्र दिवादिरेव कृत्वाऽयं पेठे। षाधंद् इति। साधंद् संसिद्धावित्ययमेव षोपदेश इत्येके। गृधण् इति। गृधूच् अभिकाङ्क्षायामिति यो दिवादावस्ति तं गृधिं वञ्चनार्थं केचित् चुरादौ पठन्ति। मनेति। मनिण् स्तम्भे इत्यस्य मानयते इति तावत् स्यात्, चन्द्रस्तु पक्षे मनतीति स्यादित्याहेत्युक्तं धातुपारायणे; ततोऽत्र तत्सिद्ध्यनुगुणं मन स्तम्भे इत्येव पेठे; उदाहरणमपि मनतीति दर्शितं विलोक्यते, परं मनतीत्यादिरूपाणां म्नां अभ्यासे इत्यनेनाऽपि सिद्धे ममानेत्यसाधारणमेव दर्शितम्। जनक् इति। अमुं ह्वादौ केऽप्यधिकमेव पठन्ति। घटादी इति। सूरिभिस्तु क्षपि त्रपि क्षप लाभण् प्रेरणे,त्रपौषि लज्जायामित्यघटादी पठितौ स्तः। सपेति। षप समवाये इत्ययमेवाऽषोपदेश इत्येके। ह्रेपृङ् इति। मेपृङ्रेपृङादयो गत्यर्थाः सन्ति, तद्वत् ह्रेपृङप्यस्ति इति कौशिकः। तुपेत्यादि। तुप तुम्प तुफ तुम्फाः हिंसार्था भ्वादौ तावत् सन्ति, ते तुदादावपि सन्तीत्यन्ये। तृपेत्यादि। फान्तौ तृफ तृम्फत् तृप्तावित्येतावेव पान्तावित्यन्ये। स्तुपेत्यादि। ष्टूपण् समुच्छ्राये इत्ययमेव स्तुपणित्येके, स एव अषोपदेशत्वात् स्तूपणित्यन्ये। तुपुण् इति। तुबुण् अर्दने इतिवत् तुपुणप्यस्तीत्यन्ये। घर्बेति। अर्बकर्बादयो यथा गत्यर्थाः सन्ति, तथा घर्बेत्यप्यस्तीति केचित्। कन्बेत्यादि। कर्बखर्बादीनां रेफस्थाने नकारं कौशिकाः प्राहुः। सांबण् इति। संबण् संबन्धे इत्यस्य स्थाने सांबेत्येके। कुटुंबिण् इति। तन्त्रिण् कुटुम्बधारणे इत्यत्र कुटुम्बेत्यपि धातुरिति चान्द्राः। सुंभेति। शुंभ भाषणे चेत्ययमेव हिंसार्थो दन्त्यादिश्चेत्येके। नभीति। द्युतादिस्थो णभि हिंसायामित्ययमेवाणोपदेश इत्येके। षुंभेति। प्रागुक्तो दन्त्यादिः सुंभ एव षोपदेश इति गुप्तः। डभु डिभुण् इति। डपु डिपुण् क्षेपे इत्येतौ भान्तावित्यन्ये। दभु दिभुण् इति। दभदभुदिभूनपि चुरादौ केचित् पठन्तीति धातुपारायणे उक्तम्, अर्थविशेषस्तु यद्यपि धातुपारायणे नोक्तस्तथापि दभेः "आसुयुवपि-"॥५।१।२०॥ इति सूत्रवृत्तौ सौत्रत्वस्य वञ्चनार्थस्य चोक्तत्वात्तत्सहचरितयोर्दभुदिभ्वोरपि वञ्चनार्थत्वं संभाव्यात्र पठितम्; दभिश्च सौत्रधातुष्वेव दर्शित इत्यतोऽत्र न दर्शितः। छद्मेति। त्सर छद्मगतावित्यत्र छद्म इत्यपि धातुरिति कौशिकः। सामण् इति। अदन्तस्तावदयमस्ति तद् व्यञ्जनान्तोऽप्यस्तीति चन्द्रः। तुरक् इति। केचिदिममधिकमेव पेठुः। षुरत् इति। सुरत् ऐश्वर्ये इत्ययमेव षोपदेश इत्येके। गुडुण् इति। कुद्रुण् अनृतभाषणे इत्ययमेव गादिरित्यन्ये। घटादी इति। सूरिमते तु स्खल चलने दल विशरणे इत्येवमेतावघटादी स्तः। स्थलेति। ष्ठल स्थाने इत्ययमेवाषोपदेश इत्येके। बळीति। भलि परिभाषणहिंसादानेष्वित्यस्य स्थाने ओष्ठ्यादिं बलिमेके प्राहुः। एत्वनिषेधाभावादिति। एत्वनिषेधो हि दन्त्यौष्ठ्यवादेरुक्तः। षिलत् इति। सिलत् उञ्छे इत्ययमेव षोपदेश इत्येके। पुलत् इति। पुल महत्त्वे इति भ्वादिर्यथाऽस्ति तथा तुदादिरप्यस्तीत्येके। बलिवली प्राणने चुरादौ

घटादी चेत्येके । **मुलण् इति** । मूलण् रोहणे इत्यस्य स्थाने मुलेति नन्दी । पलण् रक्षणे इत्यस्य स्थाने पालेति चन्द्रः । यद्यपि च पलिपाल्योः प्रयोगाः सदृशा एव लक्ष्यन्ते, तथापि धातुपारायणे पालेति चन्द्र इत्युक्तत्वादत्राऽपि तथोचे । **गलिण् इति** । इममधिकमेव केचित्पठन्ति । **क्षीवृ इति** । क्षीवृमधिकमेव केऽप्याहुः । **चीवी इति** । चीवृग् झषीवत् इत्येतं ऋदितमेके नाहुः, तेनोभयपदित्वमात्रज्ञापनाय चीवी इति पेठे; झषीश्चादानसंवरणयोरस्ति,ततोऽयमपि तदर्थः पेठे । **षान्त्वण् इति** । सान्त्वण् सामप्रयोगे इत्ययमेव षोपदेश इत्येके । **रश इति** । केऽप्यमुमधिकमेव पठन्ति । **वाश्टृच् इति** । वाशिच् शब्दे इत्ययमेव ऋदिदित्येके । **लशण् इत्यादि** । लसण् शिल्पयोगे इत्ययमेव तालव्यान्त इति कौशिकः; मूर्धन्यान्त इत्यन्ये । **दाशिण् इति** । केचिदिममधिकमेव पेठुः । **खषेति** । कष शिषादयो हिंसार्था यथा सन्ति तथा खषेत्यप्यस्तीति कण्ठः । **सूषेत्यादि** । पूष प्रसवे इत्ययमेवाषोपदेश इत्येके; स एव तालव्यादिरिति चारकाः । **घषुङिति** । घसुङ् करणे इत्ययमेव मूर्धन्यान्त-इति चन्द्रः । **धिषक् इति** । इमं ह्वादौ केऽप्यधिकमेव पठन्ति । **मुषच् इति** । पुष्यादिस्थो मुसच् खण्डने इत्ययमेव षान्त इत्यन्ये । **धूषेत्यादि** । धूशण् कान्तिकरणे इत्ययमेव षान्त इत्येके; सान्त इत्यन्ये । **धृषिण् इति** । वृषिण् शक्तिबन्धे इत्ययमेव तवर्गतुर्यादिः सामर्थ्यवारणार्थ इत्येके । **जर्त्स इति** । इमं केऽप्यधिकमेव पठन्ति । **ष्णुसच् इति** । द्रमिला इममधिकमेव पेठुः । **ष्णसूच् इति** । अयमघटादिस्तावदस्ति , घटादिरिति त्वेके । **दासद् इति** । केचिदिममधिकमेव पठन्ति । **उध्रसूश् इत्यादि** । ध्रसूश् उञ्छे ध्रसण् उत्क्षेपे इत्येतौ द्वावपि उकारादी इत्येके । **गृहौङ् इति** । ग्लहौङ् ग्रहणे इत्यस्य स्थाने गृहौङ् इत्येके । **स्रंहूङ् इति** । द्युतादिस्थः स्रंभूङ् विश्वासे इत्ययमेव हान्त इति कौशिकः । **ष्टृहौ इत्यादि** । स्तृहौ स्तृंहौत् हिंसायामित्येतौ षोपदेशावित्येके । **दहुण् इति** । अमुं केऽप्यधिकमेव पठन्ति । **ष्टृक्षेति** । स्तृक्ष गतावित्ययमेव षोपदेश इति चन्द्रः । **जक्षुङ् इति** । घटादिस्थस्य क्षजुङ् गतिदानयोरित्यस्य क्षजौ कौशिको विपर्ययेणाधीते । **भक्षी इति** । भ्लक्षी भक्षणे इत्यस्य स्थाने भक्षीत्येके । **ऋक्षद् इति** । एतं स्वादौ केऽप्यधिकमेव पठन्ति । एवं परपठितधातूनां मध्ये ये ये येषां प्रतियोगिधातवः सन्ति तेषां ते ते उक्ताः; ये च अन्यैरधिका एव धातवः पठिताः सन्ति तेऽप्युक्ताः । **चौरादिकेत्यादि** । चौरादिकणिज्मात्रार्थं परैः पृथक् पठिताः; यथा–धृंग् धारणे इतिवत् धृण् धारणे इत्यप्यन्ये पठन्ति; ततश्च धारिणा योगे मैत्राय शतं धारयतीत्यत्र "रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु"॥२।२।५५॥इत्युत्तमर्णाच्चतुर्थी सिद्धेति चाहुः । सूरिमते तु कर्मकर्तृप्रयोगे ध्रियते शतं कर्तृ तत् ध्रियमाणं कश्चित् प्रयुङ्क्ते इति णिगि बहुलमेतन्निदर्शमित्युक्त्या स्वार्थिके णिचि वा निष्पन्नेन धारिणा योगे चतुर्थी सिद्ध्यत्येव । अर्थान्तरार्थं यथा लुठु आलस्ये चेति पठितेऽपि पुनर्लुठु गतावित्यन्ये पेठुः । आत्मनेपदार्थं यथा–कृत् विक्षेपे इत्यस्य धातूनामनेकार्थत्वाद्विज्ञानार्थत्वे सति बहुलमेतन्निदर्शनमिति वचनाद् णिचि कारयतीति सिद्धावपि कारयते इत्यात्मनेपदार्थं कृणि विज्ञाने इति चन्द्रोऽध्यैष्ट । परस्मैपदार्थं यथा–षचि सेचने इत्यस्य धातूनामनेकार्थत्वात्समवायार्थत्वे सचते इति सिद्धावपि सचतीति परस्मैपदार्थं सच समवाये इति चन्द्रः पपाठ । इडागमार्थं यथा–उषू दाह इत्यस्य सूरिमते ऊदित्त्वात् क्त्वि वेटि उष्ट्वा उषित्वेति वेट्त्वात् क्तयोरिड्निषेधात् उष्टः उष्टवान् इति स्यात्;अन्ये तु ऊदित्वमनिच्छन्त उष दाहे इत्येव पेठुः;तेषां क्त्व नित्यमिटि उषि-

त्वेत्येव वेट्त्वाभावादेव क्त्वयोर्नित्यमिटि उषितः उषितवानित्येव च स्यात् । तथा यमूं उपरमे इत्यस्य सूरिमते ऊदित्त्वात् क्त्वि वेटि यन्त्वा यमित्वेति स्यात्;एके तूदित्त्वमनिच्छन्तो यमं उपरमे इत्येवाहुः,तेषामनुस्वारेत्त्वादिङभावे यन्त्वेत्येव स्यादित्यादि । **प्राय इति** । भक्षण् अदने इत्यस्य णिचोऽनित्यत्वे भक्षतीति स्यादेव, परं भक्षते इत्यात्मनेपदमात्रविशेषसिद्ध्यर्थं भक्षी अदने इति परपठितोऽपि धातुरत्र दर्शितोऽस्तीत्यतः प्राय इत्युक्तम्। संग्रहश्लोकेषु च्छन्दोऽनुरोधेन क्वापि क्वापि रसंयोगानामल्पप्रयत्नोच्चार्यत्वं कृतं ज्ञेयम्। एकोनविंशार्यायां ध्र संयोगस्याल्पप्रयत्नोच्चार्यत्वमुत्पूर्वध्रस्शङ्कानिरासार्थम् ॥ प्रशस्तिवृत्तेषु द्वितीयश्लोके **आद्येंऽशे इति** । आद्यवक्षस्कारके । **शेषांशेष्विति** । द्वितीयतृतीयतुर्यवक्षस्कारकेषु । **इतरे इति** । साम्प्रतं स्वसमुच्चिता इत्यर्थः । पञ्चमश्लोके **हैमीति** । हेमहंसकृतत्वात् । चतुर्दशकाव्ये **तिथितिथाविति** । तिथियुक्तास्तिथिस्तिथितिथिस्तस्मिन् मयूरव्यंसकादित्वाद् युक्तशब्दलोपः । द्वन्द्वसमासे त्वेकशेषः शङ्क्यते । द्वन्द्वेऽपि वा एकशेषस्यानित्यत्वान्नैकशेषः । शेषं निगदसिद्धम् ॥

इति स्वकृतन्यायार्थमञ्जूषायाश्चतुर्थवक्षस्कारकन्यासः ।

श्रीसूरीश्वरसोमसुन्दरगुरुर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका-
वक्षस्कार इहान्तिमोऽम्बुधिमितो न्यासेन शृङ्गारितः ॥ १ ॥

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी-
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ।
तच्छिष्याश्रवहेमहंसगणिना न्यायार्थमञ्जूषिका
न्यासेनैवमनेन चित्रसदृशा सर्वाऽपि शृङ्गारिता ॥ २ ॥

**इति श्रीतपागच्छपुरन्दरश्रीसोमसुन्दरसूरिस्वदीक्षागुरुश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिप्रमुखश्रीगुरुसाम्प्रतविजयमानश्रीगच्छनायकपरमगुरुश्रीरत्नशेखरसूरिचरणाब्जसेविना महोपाध्यायश्रीचारित्ररत्नगणिप्रसादप्राप्तविद्यालवेन वाचनाचार्यहेमहंसगणिना निर्मितोऽयं स्वकृतन्यायार्थमञ्जूषाया न्यासश्चिरं नन्दतात् ।**

अनुमानाद् गणनया न्यासमानं विनिश्चितम् ।
सहस्रो द्विशतीयुक्तः श्लोकानामत्र वर्तते ॥ १ ॥



अर्हम्

श्रीमुनिभद्रसूरिनिर्मितम्–

# श्रीशान्तिनाथचरितम् ।

यद्यपि बहूनि श्रीशान्तिनाथचरितानि भिन्नभिन्नाचार्यनिर्मितान्युपलभ्यन्ते, तथापि नैतादृक् क्वापि पाठकानामानन्द उपलप्स्यते। तत्त्वमत्र सुधियो विदांकुर्वन्तु–महाकविकालिदासकवितामप्यधरीकरोति काव्यमिदं प्रसादगुणादिभिरुपमायमकादिभिश्च। न ज्ञायते चादः कमपि प्रबन्धमनुसृत्य निर्मितम्, न च प्रत्नयुक्तिप्रत्युक्तिभिः समर्थितम्, महाकाव्यलक्षणाऽऽक्रान्तं चैतत्। पाठकानां भाग्यवशादेव पुस्तकमेकमस्य लब्धमयत्नेन, किन्तु भूयान् प्रयत्नः कृतोऽपि पुस्तकान्तरान्वेषणाय न सफलत्वमाप्तः। चरितग्रन्थममुं बुद्ध्वाऽऽधुनिका नावहेलनां केऽपि यूयं करिष्यथ, यतो नैषधीयचरितस्यापि चातुर्यं न रोचतेऽस्य पुरतः। अस्मिन् महति काव्ये श्रीशान्तिनाथभगवतो द्वादशभववर्णनमस्ति, तत्र मङ्गलकलश–मत्स्योदर–वत्सराज–देवराज–जिनपाल–जिनरक्षितादीनां च चरित्राणि प्रसङ्गतः प्रतिपादितानि। ये पुनरेतद् द्रक्ष्यन्ति तेषां स्वयमेवाऽऽनन्दसन्दोहो भविष्यतीति कृतं स्ववैदग्धीप्रदर्शनेन। शीघ्रममुं ग्रन्थं जिघृक्षवोऽत्र पत्रं प्रेषयन्तु। मूल्यमस्य रूप्यकत्रयम्।

श्रीरत्नमन्दिरगणिविरचिता–

# उपदेशतरङ्गिणी ।

इयमस्मिन् स्वभावत उत्पथपथिकप्रोत्साहनपरे दुर्निवारे पापिनि दुःषमारूपे नितान्तभीषणे कलिकाले भ्रान्तानां सरलाऽसरलस्वान्तानां पञ्चजनानां स्खलितपदानां पापपथमपहस्तयितुं, धर्माध्वनीनधुरामारोपयितुं, कल्मषमलक्रान्तं मनः प्रक्षालयितुमेकैव प्रतीहार–कृषीवल–कतकक्षोदसाम्यमुपगता जरीजृम्भते। दर्शनादेवास्याः पुरुषस्येतिकर्तव्यताज्ञानमुपतिष्ठते, साध्यसाधने च। प्ररोचनावाक्यादिभिरपि पूर्वपुरुषाणां श्रीशान्तिनाथ–मेघकुमार–शालिभद्र–मूलदेव–चन्द्रनबाला–संप्रतिभूप–जगडू–वीसलदेव–राजशेखर–वाग्भट–नरवाहन–सिद्धसेनाचार्य–कुमारपाल–वस्तुपाल–समरा–श्रीहेमसूरि–भोज–विक्रमादित्यादीनां तत्तत्कृतिसाध्यफलप्राप्तिप्रदर्शनतोऽन्वर्थं नाम मद्विधेषु संबिभ्रती परतरगौरवाऽऽस्पदमुपैति।

अत्र दानादि–सप्तक्षेत्रवित्तवपन–पूजापञ्चाशक–तीर्थयात्रा–धर्मोपदेशात्मकाः पञ्च तरङ्गाः कल्लोलयन्ति।

विद्यते चात्र अर्बुद–गिरिनार–शत्रुञ्जय–नागह्रदा–ष्टापद–तारणादितीर्थानां बहूनां नामोल्लेखः।

अवश्यं द्रष्टव्योऽयं सकलमुनिराजश्रावकादिमहोदयैर्ग्रन्थः पत्राकारः सरलसंस्कृतमयः।

मूल्यम् (३) मात्रम्।

पुस्तकप्राप्तिस्थानम्—

**शा०–हर्षचन्द्र–भूराभाई**

अंग्रेजी कोठी बनारस सिटी